उपनिषत् परविद्येति, यदि श्रुतिर्ब्रूयात् । नचैतदस्ति । ऋग्वेदपदस्यैव ऋक्सम्बन्धि-सर्वसंग्राहकत्वे त्वदभिलषितविभागनवकाश एव । एवं यजुर्वेदादवपि ज्ञेयम् । किञ्च यदि परविद्या अन्या स्यात्तर्हि ऋग्वेदो यजुर्वेद इत्यादिनाऽपरविद्याकथन-वदियमियं परविद्येति विभज्य प्रदर्शयेत् । नहि श्रुतिरकुशला येनानपेक्षिता-धमापरविद्यां विभागेन निरूप्यापेक्षितोत्तमपरविद्यायां संकुचितप्रवृत्तिमती स्यात् । तस्मादुक्त एव विभाग श्रुतेरभिमतः ।। ३-५ ।।

**न.टी.**——शुनकस्यापत्यं शौनकः । प्रत्यब्दं यज्ञकृन्महाशालः । कर्मदेवतादि-प्रतिपादकं मयाभ्यस्तम्। कर्मादि चास्वतन्त्रम् । ततो न पुरुषार्थप्रदम् । नचाप्रयोजकं च पुरुषार्थे वेदाद्युक्तत्वात् । अतः कस्यचिदङ्गं कर्मादिकम् । तथाच कस्मिन्वस्तुनि विज्ञाते इदं सर्वं कर्मादिकं विज्ञातफलं भवति । तत्किमिति प्रश्नार्थः ।। ३ ।।

कर्मादिप्रतिपादकत्वेनापरविद्याख्यं ऋगादिकं ब्रह्मप्रतिपादकत्वेन परविद्याख्यस्य ऋगादेरेवाङ्गमिति परिहारं हृदि निधाय परापरविद्ययोरङ्गाङ्गिभावस्फुरणाय तयोः स्वरूपं निरूपयितुं प्रस्तावयति— **तस्मा इति** ।। किं संज्ञिके द्वे विद्ये इत्यत उक्तम्— **परा चैवापरा चेति** ।। ४ ।।

प्रस्तावितापरा केत्यत आह— **तत्रेति** ।। अयं वर्ण अस्मिन् स्थाने एतेन यत्नेनो-च्चार्य इति निरूपकं शास्त्रं शिक्षा । कल्पः सूत्रम् । शब्दसाधुत्वज्ञापकं व्याकरणम् । निरुक्तं शब्दनिर्वचनकरम् । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तिस्त्रिष्टुब्जगतीनां तत्प्रभेदानां च छन्दसां लक्षणनिरूपकं छन्दः । ज्यौतिषं कालनिर्णयकरम् । प्रस्तावितां परविद्यां निरूपयति— **अथ परेति** ।। ५ ।।

**रा.खं.**——शौनकः शुनकपुत्रः महाशालः, प्रत्यब्दं यज्ञकृन्महाशाल इत्युक्तः, 'प्रत्यब्दं यज्ञकृत्सम्यक् महाशालः प्रकीर्तितः' इति छान्दोग्यभाष्योक्तेः, विधिवद् विध्युक्तप्रकारेणोपसन्नः उपसत्तिं प्राप्तः अङ्गिरसं पप्रच्छ । हे भगवो भगवन्, पूज्यपादेति यावत्, मतुवसो रुस्सम्बुद्धौ छन्दसीति रुः, सर्वमिदं कर्मदेवतादिकं मया ज्ञातं वर्तते । तज्ज्ञानं कस्मिन् ज्ञाते सफलं भवति? यज्ज्ञानार्थं सत् मोक्षा-

ख्यफलवद्भवति तन्मे ब्रूहीति पप्रच्छेति योज्यम् । ह वा इति निपातः प्रसिद्धयर्थकः ।। ३ ।।

कर्मदेवतादिज्ञानं तदनुष्ठानादिना ब्रह्मज्ञानार्थं सन्मोक्षाख्यफलवद्भवतीति 'तदेतत्सत्यं मन्त्रेषु' इत्यादिना विवक्षुरुपोद्घातपूर्वं ब्रह्मस्वरूपं तावद्ददामीति भावेनोत्तरमुक्तवानित्याह वेदपुरुषः— **तस्मै शौनकाय सोऽङ्गिरा उवाचेति** ।। हेति हर्षे । उपोद्घातमाह— **द्वे विद्ये इति** ।। पूर्वत्रेवात्रापि विद्याशब्दः करणसाधनः । विद्या वित्तिजनकं शास्त्रं द्वे द्विविधमित्यर्थः । उपाधिद्वैविध्याभिप्रायेण द्विवचनोक्तिः । इति ब्रह्मविदो वदन्ति स्म । हेति प्रसिद्धमित्यर्थः । तथाच सूत्रं 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम्' इति । कथमित्यत आह— **परा चैवापरा चेति** ।। परममुख्यार्थबोधकत्वोपाधिना परैव सती विद्या अपरा अमुख्यार्थबोधकत्वोपाधिनाऽपरा चेत्युच्यते । न वस्तुतो व्यक्तिभेदोऽस्तीत्येवकारप्रयोगः ।। ४ ।।

अपरविद्यैवोपाधिभेदेन परविद्येति भावेन प्रस्तावपूर्वमपरविद्यामाह— **तत्रापरेति** ।। उपाधिभेदेन भिन्नतया निर्दिष्टयोर्मध्य इत्यर्थः । वर्णानां स्थानप्रयत्नादिनिरूपकं शास्त्रं शिक्षा । प्रसिद्धप्रयोगबोधिनो बौधायनापस्तम्बाश्वलायनादिग्रन्थाः कल्पः ।

सिद्धरूपप्रयोगा यैः कर्मणामनुगम्यते ।
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ।।

इति तन्त्रवार्तिकोक्तेः । शब्दानुशासनपरं व्याकरणम् । शब्दनिर्वचनपरं निरुक्तम् । गायत्र्युष्णिगादिच्छन्दसां लक्षणनिरूपकं छन्दः । कालनिर्णयपरं शास्त्रं ज्योतिषम् । एतदेव ऋगादिशास्त्रमक्षराधिगतिहेतुत्वोपाधिना परविद्येति भावेनाह— **अथ परेति** ।। अवसरप्राप्ता परविद्या निरूप्यत इत्यर्थः । यदद्रेश्यत्वादिगुणकं तदक्षरं यया विद्यया वित्तिजनकऋगादिशास्त्रेणाधिगम्यते साऽक्षरज्ञप्तिहेतुत्वोपाधिना परविद्येत्युच्यत इत्यर्थः । तदुक्तं 'ऋगाद्या अपरा विद्या' इत्यादि । यथैकमेव च कर्म सकामत्वनिष्कामत्वोपाधिभ्यां प्रवृत्तं निवृत्तमिति चोच्यते तथेति भावः ।। ५ ।।

**स.टी.**——शुनकस्यापत्यं शौनकः । महाशालः प्रत्यब्दं यज्ञकृत् । "प्रत्यब्दं यज्ञकृत्सम्यक् महाशाल इतीरितः" इति वचनात् । विधिवद्विध्युक्तप्रकारेणोपसन्नः । ह वा इति वृत्तार्थप्रसिद्धिद्योतकौ निपातौ । पृच्छमानं दर्शयति— **कस्मिन्निति** ।। हे भगवः 'मतुवसोरुस्सम्बुद्धौ छन्दसि' हे भगवन् पूज्य सर्वमिदं कर्मादिकं कस्मिन्शास्त्रे विज्ञाते । तथाच कर्मादिज्ञानसाधनं किमिति प्रथमप्रश्नः । विज्ञातस्याप्यस्य फलं कस्मिन् ज्ञाते भवति । एतज्ज्ञानमात्रस्यैवाफलत्वादिति द्वितीयप्रश्नः ।। ३ ।।

तस्मा एवं पृष्टवते शौनकाय सोऽङ्गिरा उवाच ह । यस्मात्कर्मादिज्ञानमपरविद्यया भवति विज्ञातं च । परविद्याविषयपरमात्मज्ञानेन सफलं भवतीति ब्रह्मविदो वदन्ति । तस्माद्द्वे विद्ये वेदितव्ये इत्युवाच । अत्र विद्याशब्दः 'संज्ञायां समजनिषदे'ति सूत्रेण क्यपि निष्पन्नः योगरूढिभ्यां यथार्थज्ञानसाधनपरः । किंसंज्ञके विद्ये इत्यत आह— **परा चैवापरा चेति** ।। ४ ।।

अपरविद्यां दर्शयति— **तत्रेति** ।। अपरा कर्मादिविषयप्रमितिसाधनी । अयं वर्णोऽस्मिन् स्थाने एतेन प्रयत्नेनोच्चार्य इति निरूपकं शास्त्रं शिक्षा । कल्पः कल्पसूत्रम् । शब्दसाधुत्वासाधुत्वज्ञापकं व्याकरणम् । निरुक्तं शब्दनिर्वचनकरम् । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीनां तत्प्रभेदानां छन्दसां लक्षणनिरूपकं छन्दः । ज्योतिषं कालनिर्णयकरम् ।। परविद्यां दर्शयति— **अथेति** ।। परानुत्तमविद्या ब्रह्माधिगतिसाधनी । एतदेव दर्शयति— **यया तदक्षरमधिगम्यत इति** ।। ब्रह्ममीमांसाशास्त्रव्युत्पादितपदवाक्य-समन्वयन्यायानुपकृता हि वेदादयो विष्णोरवाचकाः अपरविद्या भण्यन्ते । तदुपकृतास्तु ऋगादयः परविद्या इत्यभिधीयन्ते । ते ऋगादीति कर्तव्यतात्वेन ब्रह्ममीमांसाशास्त्रमपि परविद्येत्युच्यते । अत एवानुव्याचचक्षे । 'परविद्याख्यं चक्रे शास्त्रमनुत्तम'मिति । एतेनोपनिषदः परविद्येति व्याख्यानं परासि । ऋगादिग्रहणेन तासामपि गृहीतत्वात् । ब्राह्मणपरिव्राजकन्यायश्चागतिका गतिः । तज्जन्यज्ञानं परविद्येत्यपि न युक्तम् । अधिगतिकरणत्वानुपपत्तेः ।। ५ ।।

**श्री.टी.**——शुनकस्यापत्यं शौनको नामतो महाशालः 'प्रत्यब्दं यज्ञकृत्सम्यङ्-महाशाल इतीरितः' इति वचनात्प्रत्यब्दयज्ञकृद् विधिवद्विध्युक्तप्रकारेणोपसन्नः समित्पाणित्वादिरूपगुरूपसत्तियुक्तः सन् पप्रच्छ । ह वा इति वृत्तार्थस्मरणार्थौ निपातौ । किं प्रमेयं पप्रच्छेत्यत आह— **कस्मिन्निति** ।। हे भगवः मतुवसोरुः सम्बुद्धौ छन्दसि । हे भगवन् पूज्य सर्वमिदं कर्मादिकं कस्मिन् शास्त्रे विज्ञाते विज्ञातं भवति । तथाच कर्मादिज्ञानकरणं किमिति करणप्रश्नः । तथा सर्वमिदं कर्मादिकं विज्ञातमपि कस्मिन्विषये ज्ञाते सफलं भवतीति विषयप्रश्नः । कर्मादेरस्वतन्त्रत्वेन तज्ज्ञानमात्रस्यैवापुरुषार्थत्वादिति प्रश्नाशय इति तत्त्वप्रकाशिकानुसारेण द्वेधा व्याख्येयम् । तत्र सर्वं कर्मादिकमपरविद्यया विज्ञातं भवति विज्ञातं च कर्मादिकं परविद्याविषयपरमात्मज्ञानेनैव सफलं भवति । कर्मणा ज्ञानमातनोतीति कर्मणां ज्ञानेनैव सफलत्वश्रुतेः ।। ३ ।।

अतो द्वे विद्ये अङ्गाङ्गिभाववत्तया वेदितव्ये इत्याशयवानाह— **तस्मा इति** ।। यद्यस्माद्ये द्वे विद्येऽवश्यं वेदितव्ये इति ब्रह्मविदो वदन्ति तस्मात्ते द्वे विद्येऽवश्यं वेदितव्ये एवेति तस्मै शौनकाय सोऽङ्गिरा उवाचेत्यर्थः। के ते द्वे विद्ये इत्यत आह— **परा चैवेति** ।। ४ ।।

का परा विद्येत्यतस्तां दर्शयति— **तत्रापरेति** ।। परापरविद्ययोर्मध्ये परा विद्यादौ निरूप्यत इति शेषः । अत्र ब्रह्ममीमांसाशास्त्रव्युत्पादितन्यायानुपकृता ऋगादयो यदा भगवदितरकर्मादिविषयतया योज्यन्ते तदा तेषामपरविद्यात्वम् । यदा तु तदुपकृतास्सन्तो विष्णुविषयतया योज्यन्ते तदा तेषामेव ऋगादीनां परविद्यात्वमित्यवगन्तव्यम् । अयं वर्णोऽस्मिंस्थाने एतेन प्रयत्नेनोच्चार्य इति निरूपकं शास्त्रं शिक्षा । कल्पः कल्पसूत्रम् । शब्दसाधुत्वासाधुत्वव्युत्पादनपरं शास्त्रं व्याकरणम् । शब्दनिर्वचनकरं शास्त्रं निरुक्तम् । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यतिजगतीनां तत्प्रभेदानां च छन्दसां लक्षणनिरूपकं शास्त्रं छन्दः । कालनिर्णयकरं शात्रं ज्यौतिषम् । परविद्या केत्यतस्तां निरूपयति— **अथेति** ।। अपरविद्या-

निरूपणानन्तरं परविद्या निरूप्यत इति शेषः । यया विद्यया तत्प्रसिद्धमक्षर-मधिकत्वेन गम्यतेऽवगम्यते सा परविद्येत्यर्थः ।। ५ ।।

**उ.टी.**——शुनकस्यापत्यं पुमान् शौनकः ।। **महाशाल इति** ।। सम्यक् प्रत्यब्दं यज्ञकृदित्यर्थः। "प्रत्यब्दं यज्ञकृत्सम्यक् महाशालः प्रकीर्तितः" इति छान्दोग्य-भाष्योक्तेः ।। **विधिवदुपसन्न इति** ।। समित्पाणिरित्यादि विध्युक्त-प्रकारेण विनयपूर्वं प्राप्त इत्यर्थः । प्रश्नप्रकारमेवाह— **कस्मिन्निति** ।। नु वितर्के । हे भगवः । 'मतुवसोरुः सम्बुद्धौ छन्दसी'ति रुत्वे विसर्गः । हे भगवन् पूज्य । इदं कर्म-देवतादिकं सर्वं केन प्रमाणेन विज्ञातं भवति । विज्ञातं च कर्मादिकं कस्मिन्विज्ञाते सति विज्ञातफलं भवति । विज्ञातस्याप्यस्य फलं कस्मिन् विज्ञाते सति भवतीति यावत् । एतज्ज्ञानमात्रस्यैवाफलत्वादित्यर्थः । इति पप्रच्छेत्यन्वयः ।। ३ ।।

सर्वं कर्मादिकमपरविद्यया विज्ञातं भवति । विज्ञातं च परविद्याविषयपरमात्मज्ञानेन सफलं भवति । अतो द्वे विद्ये वेदितव्ये इत्याशयेन प्रश्नद्वयस्याप्युत्तरमाह— **तस्मै स होवाचेति** ।। एवं प्रश्नद्वयं कृतवते तस्मै शौनकाय । 'क्रियया यमभिप्रैति स सम्प्रदानमि'ति सम्प्रदानसंज्ञायां चतुर्थी । स अङ्गिराः । हेति हर्षे । हृष्टस्सन्नुवाचेत्यर्थः । अपरा चेत्यनन्तरमिति शब्दोऽध्याहार्यः । चशब्दौ परस्पर-समुच्चयार्थौ । एवशब्द उक्तविभागस्यावधारणार्थः । परैव परममुख्यया वृत्त्या भगवत्प्रतिपादकत्वोपाधिना परैव सती विद्या, अमुख्यवृत्त्या कर्मादिप्रतिपादकत्वेना-परा च भवति । न वस्तुतो व्यक्तिभेदोऽस्तीति सूचयितुं चैवशब्दः । तथाच अवस्थाभेदेनैव विद्याद्वैविध्यं न वस्तुत इति भावः ।। ४।।

अपरविद्यां दर्शयति— **तत्रापरेति** ।। तत्र तयोर्मध्य इत्यर्थः । वर्णानां स्थान-प्रयत्नादिनिरूपकं शास्त्रं शिक्षा । कर्मणां सिद्धप्रयोगबोधको बोधायनाश्वलायनग्रन्थः कल्पः । तदुक्तं तन्त्रवार्तिके—

सिद्धरूपप्रयोगो यैः कर्मणामनुगम्यते ।
ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ।। इति ।।

शब्दानुशानपरं शास्त्रं व्याकरणम् । शब्दनिर्वचनपरं शास्त्रं निरुक्तम् । गायत्र्युष्णिगादिछन्दसां लक्षणनिरूपकं शास्त्रं छन्दः । कालनिर्णयकरं शास्त्रं ज्यौतिषम् । एतदेव ऋगादिशास्त्रं अक्षराधिगतिहेतुत्वोपाधिना परविद्येति भावेनाह— **अथ परेति** ।। ततश्चायं अथ परेत्युपनिषद्वाक्यार्थः । यदा यया ऋगादिरूपया विद्यया तत् प्रसिद्धं अक्षरं विष्णुरधिगम्यते अथ तदा सैव परविद्येति ।। ५ ।।

**आ.टी.**——शुनकनामऋषेरपत्यम् । प्रत्यब्दं यज्ञकृत्त्वान्महाशाल इति तस्याधिकारसम्पत्तिमाह । विधिवत् विधिना तुल्यम् । समित्पाणित्वादिविधिनाङ्गिरसमृषिमुपसन्नः प्राप्तस्तदुपसत्तिमकरोत्स इत्यर्थः । ह वा इति निपातद्वयेन तयोर्गुरुशिष्यभावे शास्त्रोक्तगुणवत्त्वप्रसिद्धिमाह । पप्रच्छ स्वज्ञीप्सितमिति शेषः । तदाह— **कस्मिन्निति** ।। हे भगवः भगवत् । मतुवसोरुः सम्बुद्धौ छन्दसि । हे अङ्गिराः ऋषे मया ऋगादिना इदं सर्वं कर्मदेवतादिकं विज्ञातम् । विशेषेण ज्ञातमपि न फलदं प्रतीयते अस्वतन्त्रत्वात् । नच वेदोक्तं वृथा । तस्मादिदं कर्मादिकं कस्यचित्फलप्रदस्याङ्गमिति वाच्यम् । तथाच कस्मिन्फलप्रदे विज्ञाते सति इदं कर्मादिकं विज्ञातं विज्ञातफलं फलप्रदं भवतीति पप्रच्छेत्यन्वयः ।।

इति पृच्छते शौनकाय अङ्गिरा उवाचोत्तरमिति शेषः । तदाह— **द्वे विद्ये इत्यादिना** ।। कर्मादेर्ब्रह्मज्ञानोपयोगित्वात्कर्मादिप्रतिपादकत्वेनापरविद्याख्यमृगादिकं ब्रह्मप्रतिपादकत्वेन परविद्याख्यस्य ऋगादेरङ्गमिति । यद्यस्मात्तस्मादेव ब्रह्मज्ञानिनो द्वे विद्ये वेदितव्ये अङ्गाङ्गिभावेन ज्ञातव्ये फलप्रदत्वादिति वदन्ति । तत्र द्वे विद्ये इमे एव । एका परा प्रधाना अपरा अप्रधाना । परविद्याया गम्भीरत्वात्तान्विहायादावपरविद्यामाह— **तत्रेति** ।। तत्र तयोर्मध्येऽपरा ऋगादयश्चत्वारो वेदाः, शिक्षाद्यङ्गषट्कम् । इतिशब्देनादिपदार्थकेनेतिहासपुराणादिकं ग्राह्यम् । एतत्सर्वमपरविद्येत्युच्यते । सा च त्वया अभ्यस्ता । अथ यया ऋगाद्यपरविद्यया कर्मादिप्रतिपत्त्यनन्तरमधिकारसम्पत्तौ ब्रह्ममीमांसाशास्त्रोक्तन्यायानुसन्धाने सति ऋगादिविद्ययैव तत्प्रसिद्धमक्षरनामकं ब्रह्मपदवाक्यसमन्वयेनाधिगम्यते प्रतिपाद्यते यदा तदा सा परेत्युच्यते । ब्रह्मप्रतिपादनावस्थाविशिष्टा ऋगादिविद्यैव परेत्यर्थः ।

**गू.टी.**——शुनकनामर्षेरपत्यं शौनकः । "प्रत्यब्दयज्ञकृच्चैव महाशाल उदाहृतः" । शौनकस्य सत्रकृत्त्वप्रसिद्धिमाह ह वै इति निपाताभ्याम् । विधिना तुल्यं वर्तत इति विधिवत्। समित्पाण्यादियुक्तं यथा तथाङ्गिरोनामकमृषिं गुरुं शिष्यवृत्त्योपसन्नः प्राप्तः पप्रच्छ प्रश्नमकार्षीत् । प्रश्नप्रकारमाह— **कस्मिन्निति** ।। कर्मदेवादिप्रतिपादकं वेदजातं मयाभ्यस्तम् । कर्मादिकं चास्वतन्त्रम् । अतो न पुरुषार्थप्रदम् । नचाप्रयोजकम् । वेदाद्युक्तत्वात् । अतः कर्मादिकं कस्यचिदङ्गमिति वाच्यम् । तथाच कस्मिन्नङ्गिनि विज्ञाते इदं सर्वं कर्मादिकं विज्ञातं विज्ञातफलं भवति तदङ्गि किम् । हे भगवो भगवन्नङ्गिरा इति प्रश्नवाक्यार्थः । कर्मादिप्रतिपादकत्वेन परविद्याख्यमृगादिकं ब्रह्मप्रतिपादकत्वेन परविद्याख्यस्य ऋगादेरङ्गमिति परिहारं हृदि निधाय परापरविद्ययोरङ्गाङ्गिभावस्फुरणार्थं तयोः स्वरूपं निरूपयितुं प्रस्तावयति— **तस्मा इति** ।। तस्मै शौनकाय सोऽङ्गिरा उत्तरमुवाच ह किल । किमिति । ब्रह्मविदो ब्रह्मज्ञानिनः अङ्गाङ्गिभावेन द्वे विद्ये वेदितव्ये इति वदन्तीति यत् ह स्म प्रसिद्धं तदेव त्वत्प्रश्नस्योत्तरम् । किंसंज्ञके द्वे विद्ये इत्यत उक्तम्-— **परा चैवापरा चेति** ।। तत्रापरविद्यामाह— **तत्र तयोर्मध्य इति** ।। अयं वर्णः अस्मिंस्थाने अनेन प्रयत्नेनोच्चार्यत इति निरूपकं शास्त्रं शिक्षा । कल्पः सूत्रनामकं यज्ञादिप्रतिपादकम् । शब्दसाधुत्वासाधुत्वज्ञापकं शास्त्रं व्याकरणम् । वैदिकशब्दादिनिर्वचनकरं शास्त्रं निरुक्तम् । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीनां तत्प्रभेदानां च छन्दसां लक्षणनिरूपकं शास्त्रं छन्दः । ज्यौतिषं कालनिर्णयकरं शास्त्रम् । अत्रेतिहासपुराणादिकं छान्दोग्योक्तं च ग्राह्यम् । परविद्यामाह— **अथेति** ।। पाठार्थाभ्यां परविद्याभ्यासानन्तरम् । शारीरकसूत्रोक्तन्यायोपकृतया यया ऋगादिरूपया तदक्षरं प्रसिद्धमविनाशि ब्रह्माधिगम्यते प्रतिपाद्यते सा ब्रह्मप्रतिपादनावस्थाविशिष्टा ऋगादिविद्यैव परविद्या ।। ३-५ ।।

## भाष्यम्

**ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ।**

ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ।।

—इति परमसंहितायाम् ।।

ऋग्भिर्होत्रेण शंसन्ति तथौद्गात्रैः स्तुवन्ति ये ।
विष्णुमेव तथा तस्मै यजुर्भिरपि जुह्वति ।।

स्तुवन्त्याथर्वणैश्चैनं सेतिहासपुराणकैः ।
न विष्णुसदृशं किञ्चित्परमं चापि मन्वते ।।

सर्वोत्तमं तं जानन्तस्ते हि भागवतोत्तमाः ।
वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये विष्णुस्सर्वत्र गीयते ।।

एतदन्ते च मध्ये च ब्रह्मैवोक्त्वा विजानताम् ।
ऋगादि पञ्चधा संस्थं शब्दब्रह्म प्रशाम्यति ।।

यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
स्तुवन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ।।

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ।।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।।

—इति च भारते ।।

चतुर्दशमहाविद्यास्थानानि वेदितव्यानि भवन्ति ।।

—इति च मूलश्रुतिः ।।

पञ्चरात्रमृगाद्याश्च सर्वमेकं पुराभवत् ।
मूलवेद इति ह्याख्या काले कृतयुगे तदा ।।

नैवर्क्सामादिनामानि तदा वेदस्य चाभवन् ।

नैव चेन्द्रादिनामानि विष्णोरन्यत्र कुत्रचित् ।।
ब्रह्मरुद्रेन्द्रपूर्वैस्तु नामभिः प्रोच्यते हरिः ।
देवतात्वेन चेज्यस्स ब्रह्माद्या मनुनामकाः ।।
वक्तृत्वेन पितृत्वेन कारित्वेनैव चादरात् ।
इज्यन्ते देवतास्सर्वा नतु देवतया क्वचित् ।।
अनन्ययाजिनस्ते तु तस्मात्कार्तयुगा जनाः ।
प्राप्नुवन्ति हरिं तं च तस्माद्वेदे न किञ्चन ।।
पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात् ।
ऋगाद्या अनुव्याख्यान्तास्तस्मात्सर्वैर्हरिं यजेत् ।।
तस्माद्ब्रह्मादयस्सर्वे मनवो मानवास्तथा ।
यजन्ति सर्ववेदैस्तं जानन्ति च विनिश्चयात् ।।
अशक्तः पञ्चरात्रेण ऋगाद्यैर्वाऽथ तं यजेत् ।
ऋगाद्यैरेव स त्रैतैर्भिन्नैरिष्टो जनैर्हरिः ।।
द्वापरीयैर्जनैर्विष्णुः पञ्चरात्रैस्तु केवलैः ।
कलौ तु नाममात्रेण पूज्यते भगवान् हरिः ।।
एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाभवत् ।
स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् ।।
उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः ।
मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि ।।
त्रेतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रकीर्तितः ।
कृते भागवताः सर्वे वेदाश्च पुरुषास्तथा ।।

**त्रेतायां भिन्नविषयास्ततस्त्रैविद्यतां गताः ।**
**तस्मादेकः सर्ववेदैर्ज्ञेयो विष्णुस्सनातनः ।।**
**पूज्यो यज्ञैः सोपचारैर्ध्येयो वन्द्यश्च सर्वदा ।।**

**—इत्यादि नारायणसंहितायाम् ।।**

**वेदवादाश्चानुयुगं ह्रसन्तीति हि नः श्रुतिः ।। इति भारते ।।**

**वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च ।**
**दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि ।।**

**—इत्यादि वाराहे ।।**

**अत्रापि 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् ।' इत्यादिना कर्मविषयामपरविद्यामुक्त्वा 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यारभ्याथर्वणानेव मन्त्रान् परविद्यात्वेनाह । चतुर्वेदसंस्कारवतामेव च विद्यायामधिकार उक्तः—'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति । शिरोव्रतमित्युपलक्षणत्वेन ।**

**स्ववेदव्रतयुक्तस्य सर्ववेदगतास्वपि ।**
**अधिकारोऽस्ति विद्यासु नावेदव्रतिनः क्वचित् ।।**

**—इति व्यासस्मृतौ ।।**

**व्या.टी.**—तत्रापरा ऋग्वेदो यजुर्वेद इत्युक्त्वा अथ परा यया तदक्षरमधिगम्यत इत्युक्त्वा ऋगादिव्यतिरिक्ता परविद्येति प्रतीयते । परैस्तथा व्याख्यातत्वाच्चातस्तां निवारयन्नाह— **ऋगाद्या इति** ।। आपाततः प्रतीतार्थतया यदा विष्णोर्न वाचकाः । परमयोगरूढ्या वाचकाः ऋगादयः साकल्येन भगवत्प्रतिपादका इत्युक्तं तत्प्रमाणैर्द्रढयति— **ऋग्भिरिति** ।। हौत्रेण हौत्रे कर्मणि । स्तुवन्ति । सामभिरिति शेषः । एवम्भूतास्ते भागवतोत्तमा इति सम्बन्धः । ननूदाहृतप्रमाणेन वेदादेर्न

साकल्येन भगवत्परत्वं सिद्ध्यति । होत्रादयः इन्द्रादिवत् भगवत्परवाक्येन शंसनं कुर्वन्तीत्यर्थोपपत्तेरित्यतो निरवकाशप्रमाणानि पठति— **वेद इति** ।। एतद्ब्रह्मैवा-न्तादावुक्त्वा विजानतामेवेत्यन्वयः । इतिहासपुराणानां पञ्चमत्वेन ऋगादिपञ्चधा संस्थम् । वाकानुवाका यजुर्वेदवाक्यविशेषाः । निषदित्यथर्वणवाक्यविशेषाः । सत्येषु यथार्थप्रतिपादकेषु । आमनन्ति प्रतिपादयन्ति । सर्वाणि तपांसि च यत्प्रतिवदन्ति । ऋगादय एव भगवत्प्रतिपादकाः परविद्या नातोऽन्यास्तीत्यत्र प्रमाणान्तरं चाह— **चतुर्दशेति** ।। पुराणन्यायमीमांसाधर्मशास्त्रं चेति चत्वारि षडङ्गानि ऋगाद्याश्चत्वार इति चतुर्दशमहाविद्याः परविद्या चेत्येकोऽर्थः । अतः प्रकृतेऽर्थे मानं भवति । विप्रतिपत्तिभावात्तत्रैव मानान्तरं पठति— **पञ्चरात्रमिति** ।। एतत्सर्वं एकमेकविषयम् । कथमेकं पुराभवत् इन्द्रादिनाम्नामिन्द्रादिवाचकत्वादित्यत आह— **नैवेति** ।। तर्हि वेदैर्हरिरेवेज्यः नत्वन्य इति प्राप्तमित्यतः सत्यमित्याह- — **देवतात्वेनेति** ।। तर्हि ब्रह्मादियजनाभावः प्राप्नोतीत्यत आह— **ब्रह्माद्या इति** ।। भगवत्पूजाकारित्वेन । तस्माद्देवतात्वेन भगवत्पूजाकर्तृत्वात् । तस्माद्वेदे प्रतिपाद्यभेदाभावात्परविद्याऽपरविद्येति पारावर्यं किञ्चन नास्ति । वक्तृभेदाभावाच्च पारावर्यं नास्तीत्याह— **यस्मादिति** ।। सर्वैर्वेदैर्हरियजनस्य कर्तृत्वे वृद्धकृतिं चाह— **तस्माद्ब्रह्मादय इति** ।। तर्हि सर्वैर्वेदैर्हरियजनेऽशक्तस्य तत्र तूष्णींभावः प्राप्त इत्यत आह— **अशक्त इति** ।। भिन्नैर्ऋगाद्यैरिति त्रेतायां वेदे भेद उक्तः । तमेव विशदमाह— **एक इति** ।। कृते सर्ववेदैर्हरिं यजन्ति त्रेतादौ ऋगाद्येक-देशेनेत्युक्तम् । एवं तर्हि त्रेतादावपि सर्ववेदैर्हरियजने शक्तस्य ऋगाद्येकदेशेन हरिपूजा मुख्या किमित्यतो नेत्याह— **मुख्य इति** ।। त्रेतादावपि सर्ववेदैर्हरियजनस्य धर्मत्वे कथं ऋगाद्यैरेव स त्रैतैरित्यादिना विभज्य धर्मोक्तिरित्यतोऽशक्तविषयत्वान्न विरोध इत्याह— **त्रेतादाविति** ।। तात्पर्यद्योतनायोक्तं पुनरेवाह— **कृत इति** ।। वेदः पुरुषशक्त्यल्पत्वापेक्षया त्रेतादौ शब्दतोऽर्थतश्च ह्रसतीत्युक्तम् । तत्र भारतवचनं पठति— **वेदवादा इति** ।। ऋगादीनामेव परविद्यात्वे न प्रमदितव्यमिति भावेन तत्र मानान्तरं पठति— **वेदैरिति** ।। एतदुपनिषदः पूर्वोत्तरपर्यालोचनया ऋगादेरेव

विवक्षाभेदेन परविद्यात्वं समर्थयते— **अत्रापीति** ।। मन्त्रात्मिकामेव कर्मविषयामिति ग्राह्यम् । आथर्वणान् मन्त्रानेक । इतोऽपि ऋगादय एव विवक्षाभेदेन परविद्याः न केवलमुपनिषदित्याह— **चतुर्वेदेति** ।। चतुर्वेदसंस्कारवतां स्वशाखाध्ययनार्थं कृतसंस्कारवतामेव स्वशाखोपनिषद्विद्यायामधिकार उक्तः । संहितोपनिषदोर्भिन्नविद्यात्वे कार्यैक्यं न स्यादित्यर्थः । संहिताध्ययनसंस्कार एवोपनिषदादिसर्ववेदसंस्कार इति कुत्रोक्तमित्यतस्तद्वाक्यं पठति— **तेषामिति** ।। अत्र स्वशाखासंहिताध्ययनार्थं चीर्णशिरोव्रतेन स्वस्वशाखोपनिषदाद्यधिकारोऽस्तीत्येतत् सर्ववेदाध्ययनाधिकारोऽस्तीत्येतस्योपलक्षणत्वेनोक्तमित्यर्थः । उपलक्षणत्वेनोक्तमिति कुतोऽवगतमित्यतस्तज्ज्ञापकं प्रमाणं पठति— **स्ववेदेति** ।।

**ध.टि.—** ।। **ऋग्भिरितीति** ।। अत्र हौत्रेणेति तृतीया सप्तम्यर्थे इत्यभिप्रेत्य हौत्रे कर्मणीत्युक्तं टीकायाम् । कर्मणि होतार इति शेषः । तथाच होतारः हौत्रे कर्मणि विष्णुमेव शंसन्ति इत्यर्थः । स्तुवन्ति उद्गातार इति शेषः । तथाचोद्गातारः सामभिरौद्गात्रे कर्मणि विष्णुमेव स्तुवन्ति । गायन्तीत्यर्थः । तस्मै विष्णवे तदर्थमित्यर्थः । अध्वर्यव इति शेषः । तथाचाध्वर्यवो यजुर्भिर्विष्णूद्देशेनैव जुह्वति होमं कुर्वन्तीत्यर्थः । एनं विष्णुमेव । तथाच यदि ऋगादीनां विष्णुपरत्वं न स्यात्तर्हि विष्णूद्देशेन कर्म कुर्वाणा भागवतोत्तमा होत्रादयः हौत्रादिके कर्मणि ऋगादिभिर्विष्णोः शंसनं न कुर्युः । तदप्रतिपादकवाक्यैस्तच्छंसनेऽप्रेक्षावत्त्वप्राप्तेरतः तदन्यथानुपपत्त्या ज्ञायते ऋगादीनां सर्वेषां विष्णुवाचकत्वमेवेति ।। **वेद इतीति** ।। सर्वत्र वेदादौ विष्णुरेव गीयत इति सम्बन्धः । एतद्ब्रह्मैव विष्ण्वाख्यं ब्रह्मैव अन्तादावित्यादिपदेन मध्यादिकं ग्राह्यम् । ऋगादिरूपेणेति शेषः । पञ्चधा संस्थं शब्दब्रह्म वेदराशिः वेदपुरुष इति यावत् । विजानतामिति कर्मणि षष्ठी । विजानतो अधिकारिणः प्रतीति यावत् । प्रशाम्यति । प्रकर्षेण सन्तुष्टो भवतीति क्त्वाप्रत्ययस्य प्रशाम्यतीति क्रियापेक्षया पूर्वकालार्थकत्वम् । विजानतामित्युक्तज्ञानापेक्षया वा इति बोध्यम् । सत्यकर्माणं अबाधितकर्माणम् । "यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्यकर्मा महात्मे"ति श्रुतेः । सत्यं निर्दुःखनित्यनिरति-

शयानन्दानुभवरूपमिति । तथाच सुखादिषु सत्येषु सामसु च सत्यकर्माणं सत्यं यं विष्णुं स्तुवन्तीत्यर्थः । यच्छब्दस्योत्तरेणान्वयः । यत्पदं यस्य भगवतः स्वरूपम् । यत्प्रतिकर्तव्यतया वदन्ति वेदाः । सर्ववेदानां भगवत्परत्वे भारतवाक्यं प्रमाणयति— **यदिच्छन्त इति** ।। पद्लृ गताविति धातोस्सर्वैर्वेदैः पद्यते गम्यते इति पदमित्यर्थः । इत्थं व्याख्याने उक्तेऽर्थे अस्य वाक्यसम्मतित्वलाभादित्यवगन्तव्यम् । ननु चतुर्दशानां महाविद्यात्वलाभेऽपि परविद्यात्वं न लब्धमित्यत आह— **महाविद्येति** ।। तथाच महाविद्याख्यानि च तानि स्थानानि च महाविद्यास्थानानि । परविद्याशब्दवाच्यानि ज्ञानजनकत्वेन विद्याशब्दवाच्यानि चेत्यर्थः ।। **विप्रतिपत्तिभावादिति** ।। मूलश्रुतिस्वरूप एव विप्रतिपत्तेः सत्त्वादित्यर्थः । एतत्सर्वं इत्येतत्सर्वम् । व्यक्त्यैक्यायोगादाह— **एकं एकविषयमिति** ।। भगवद्रूपैकार्थप्रतिपादकमित्यर्थः । पुरा कृतयुगे ऋगादीनां तत्कालीनं नाम दर्शयति— **मूलवेद इतीति** ।। इति इत्येव । आख्या नाम । तद्व्यावर्त्यमाह-— **नैवेति** ।। **देवतात्वेनेतीति** ।। चशब्द एवार्थे । या तेनोच्यते सा देवतेति वचनान्मुख्यतः समस्तवेदप्रतिपाद्यत्वेन निमित्तेन स विष्णुरेवेज्यत इत्यर्थः ।। **ब्रह्माद्या इतीति** ।। ब्रह्माद्याः सर्वदेवता इत्यन्वयः । व्याख्यातृत्वेन भगवत्स्वरूपव्याख्यातृत्वेन । कारित्वेन भगवत्पूजाकारित्वेन हरिभक्तत्वेनेति यावत् । एवकारव्यावर्त्यमाह— **नत्विति** ।। देवतया "हिरण्यगर्भः समवर्तताग्रे" "एको रुद्र" इत्यादि वेदप्रतिपाद्यतया । नतु नैवेज्यन्त इत्यर्थः । यथाहीतरयुगेषु व्याख्यातारो गुरवः स्वपित्रादयो वा वेदप्रतिपाद्यतया नेज्यन्ते । किन्तु वक्तृत्वादिनैव तद्वत्कृतयुगेऽपि ब्रह्मादय इति भावः । क्वचिद्वक्तृत्वादिना कृतयुगे मनवः पूज्यन्त इत्युक्तिरस्ति । तदतिप्रदर्शनाय मनुनामका इत्युक्तम् । यथोक्तं छान्दोग्यभाष्ये "मनवो बोधवैशेष्यादि"ति । आद्यं तस्मादिति पदमनूद्य व्याचष्टे— **तस्माद्देवतात्वेनेति** ।। तथाच तस्मात्तु तस्मादेव एवं सर्ववेदानां भगवत्स्वरूपमात्रप्रतिपादकत्वेन देवतात्वेन हरिमात्रपूजकत्वादेव कार्तयुगा कृतयुगस्थाः जनाः भगवद्व्यतिरिक्तदेवतायाजिनो न भवन्तीति अनन्ययाजिनः प्रसिद्धाः । अन्यथा

तन्न स्यात् । तस्मात्तु अनन्ययाजित्त्वादेव तं हरिं च हरिमेव प्राप्नुवन्ति । नान्यदेवतामिति प्रसिद्धम् । अन्यथा इदमपीति भावः । न स्यात् । किन्तु त्रेतादाविव "देवान् देवयजो यान्ती"ति न्यायेनान्यदेवताप्राप्तिरपि स्यादिति भावः । उपसंहरति- – **तस्मादिति** ।। तद्व्याचष्टे– **तस्माद्वेद इति** ।। वेदे कृतयुग इति शेषः । परावरभावः पारावर्यम् । परविद्यात्वापरविद्यात्वभेदो नास्तीत्यर्थः । किन्नाम केवलं भगवत्स्वरूपमात्रप्रतिपादकत्वेन परविद्यात्वमेव न कर्मादिप्रतिपादकत्वेनापरविद्यात्वमिति भावः ।। **यस्मादिति** ।। प्रतीकग्रहणमन्वयानुसारेण । यथाहि लोके केनचित् उत्तमपुरुषेणोक्ताः विद्याः परा इत्युच्यन्ते । नीचपुरुषोक्ताः विद्या अपरा इत्युच्यन्ते । नैवं वेदेष्वस्ति । यतो ऋगाद्या अनुव्याख्यान्तास्तुरगाननात् श्रीहयवदनाद्धरेरेवोत्थिताः उद्गताः तस्मादिति परमपुरुषेण श्रीहयवदनेनोच्चारितत्वेन वक्तृभेदाभावात् परविद्यात्वमेव नापरविद्यात्वमिति भाष्याभिप्रायः । ऋगाद्याः अनुव्याख्यान्ता ग्रन्थाः "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदो अथर्वाङ्गिरस इतिहासः पुराणं विश्वा उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानी"ति बृहदारण्यकोपनिषदुक्ता द्रष्टव्याः ।। **तस्मादितीति** ।। मनु अवबोधने इति धातोः बोधवैशेष्यात् मनुशब्दवाच्याः ब्रह्मादयस्तथा मानवाः मनुनामकब्रह्मादिदेवजन्यत्वाद्वसिष्ठाद्याः ऋषयः यजन्ति कृतयुग इति शेषः । तं तमेवेति भाष्यार्थः ।। **अशक्त इतीति** ।। यजन इति शेषः । अथेत्यर्थान्तरे । ऋगाद्यैस्तदुक्तप्रकारेणेति यावत् । यजने शक्तिरहितः पञ्चरात्रेण वा तं हरिं यजेदेव । नतु यजनस्य परित्याग इत्यर्थः । वाशब्देन साधनानादरं सूचयति । एवं कृतयुगजनप्रवृत्तिप्रकारं प्रदर्श्य त्रेतायुगस्थजनप्रवृत्तिप्रकारं दर्शयति– **ऋगाद्यैरेवेति** ।। स हरिस्त्रैतैः त्रेतायुगस्थैर्जनैः भगवदितरदेवताकर्मादिप्रतिपादकतया शाखाभेदेन त्रिधा विभक्तै ऋगाद्यैरिष्टो भवतीत्यर्थः । केवलैः ऋगाद्यसहितैरिति भाष्यार्थः ।। **एक इतीति** ।। अत्र एकः भगवद्रूपैकार्थप्रतिपादकः । स वेदस्त्रिधा भगवदितरप्रतिपादकतया शाखाभेदेन त्रिविधोऽभवदित्यर्थः । द्वापरं युगं प्राप्य स एव वेदः भगवत्तदितरप्रतिपादकतया शाखाभेदेन पञ्चधा विभक्तो जात इत्यर्थः ।। **ऋगाद्येक-**

**देशेन हरिपूजा मुख्या किमिति** ।। युगधर्मस्यामुख्यत्वम् ।। **मुख्य इतीति** ।। सर्ववेदैर्भगवन्मात्रयजनरूपो मुख्यधर्म इत्यर्थः । कलावपि किमु त्रेतद्वापरयोरिति भाष्यार्थः ।। **त्रेतादावितीति** ।। तदशक्त्या कृतयुग इव सर्ववेदैः भगवन्मात्र-यजनेऽशक्त्या अन्यः वेदाद्येकदेशेन भगवत्तदितरयजनरूपो धर्मो ऋषिभिः सम्प्रवर्तितः । तथा चैतदभिप्रायेण ऋगाद्यैरेवेत्याद्युक्तमित्यविरोध इति भाष्याभि-प्रायः । कृते भागवताः सर्व इत्यादिना पूर्वोक्तमेव प्रमेयं पुनः किमर्थमुच्यत इत्यत आह— **तात्पर्यद्योतनायेति** ।। केचित्तु एको वेद इत्याद्युक्तेऽर्थे नारायण-संहितागतमेव स्थानान्तरस्थं वाक्यं पठन्ति— **कृत इति** ।। इत्यवतारितवन्तः । वेदाः भागवताः भगवन्मात्रप्रतिपादकाः पुरुषाः भागवताः भगवन्मात्रभक्ताः अनन्ययाजिन इति यावत् । त्रेतायां भिन्नविषयाः भगवत्तद्व्यतिरिक्तदेवता-कर्मादिविषयाः वेदा इति वर्तते । ततो देवानां भिन्नविषयत्वादेव पुरुषा अपि त्रैविद्यतां गताः । अन्यदेवता इष्ट्वा विष्णावन्ते समर्पयन्तीत्यर्थः ।। ऋगादीनां परविद्यात्वोपपादनमुपसंहरति— **तस्मादिति** ।। इति भाष्यं व्याख्येयम् ।। **वेदवादा इतीति** ।। वेदवादाः वेदपाठाः । नोऽस्माकं श्रुतिः श्रवणमस्ति ।। अस्माभिः श्रुतमस्तीति यावत् । इति मोक्षधर्मे शुकं प्रति वेदव्यासवचनम् । ।। **वेदैरितीति** ।। अत्र दृश्यो ज्ञातव्यः । पश्यार्थैश्चानालोचन इति ज्ञानमात्रेऽपि दृशेः प्रयोगादिति ज्ञातव्यम् ।। **इति वाराहे** ।। वराहदेववचनमिति शेषः । अतोऽहमिति युक्तम् । परविद्यात्वं अपरविद्यात्वं चेति शेषः ।

अपरविद्याया एव परविद्यात्वलाभायाह— **मन्त्रात्मिकामेवेति** ।। कर्मविषयं आपाततः कर्मप्रतिपादिकाम् ।। **आथर्वान्मन्त्रानिति** ।। एषां मन्त्राणां कर्म-विषयतोक्ता । तानाथर्वमन्त्रानेवेत्यर्थः ।। **परविद्या इति** ।। ब्रह्मविद्यामित्युक्त-त्वादिति भावः । आथर्वणान्मन्त्रानिति वचनेन इयमाथर्वणी मन्त्रत्वे सति उपनिषदित्युक्तं भवति । अस्याः संहितारूपत्वान्मन्त्रत्वं गोप्यार्थप्रतिपादकत्वा-दुपनिषत्त्वं च बोध्यम् ।। **अत्र तेषामितीति** ।। उपनिषदादीत्यादिपदेन ब्राह्मणं गृह्यते ।। शिरोव्रतं चौलोपनयनादि । चीर्णमितीत्यस्य अधिकार उक्त इति

पूर्वेणान्वयः । उत्तरमूलमवतारयति ।। **अत्र स्वशाखेति** ।। **स्ववेदेतीति** ।। अत्र स्वस्वशाखासंहिताध्ययनार्थं विहितचौलोपनयनादिव्रतयुक्तस्येत्यर्थः । सर्ववेदगतास्विति सम्बन्धः । अवेदव्रतिनः स्वस्वशाखासंहिताध्ययनार्थविहितचौलोपनयनादिव्रतशून्यस्य क्वचिदपि नाधिकारोऽस्तीत्यर्थः ।।

**वामन.टी.**—ऋगादीनामपरविद्यात्वे कथं प्रत्याक्षदिभ्य उत्तमत्वमिति चेत् अपरस्य जगतो वेदकत्वमात्राद्धि अपरविद्यात्वं नहि ज्ञापनशक्तेरनाधिक्यात् । अतो नोत्तमत्वविरोधः । एवं चोक्ताः पुनस्तद्व्यतिरेकेणापरविद्या इत्याशंकायामाह--**ऋगाद्या इति** ।। तज्ज्ञापनावस्थायां तत्तद्विद्यात्वमित्यविरोधः । एवमप्यृगादीनां परविद्यात्वं मुख्यमन्यद्गौणमिति विशेषोऽस्तीत्यभिप्रायेण ऋग्भिरित्यादीनि वाक्यान्याह । ऋग्वेदिनो होतृत्वं प्राप्य तत्तदृग्भिर्विष्णुप्रीत्यै तद्गुणगणानेव शंसन्ति । अथ ये सामवेदिनस्तेऽपि तथोद्गात्रेण सामभिस्तानेव स्तुवन्ति । यजुर्वेदिनोऽप्याध्वर्यवेण यजुर्मन्त्रैर्विष्णव एव जुह्वति । तदृचैव होत्रमकुर्वन् यजुषाध्वर्यवं साम्नोद्गीथमिति ब्राह्मणाश्चैवमथर्वादयोऽप्याथर्वणमन्त्रैस्तमेव स्तुवन्ति । ऋगादिकमितिहासादिसाहित्येन पञ्चधा संस्थं शब्दब्रह्म विष्ण्वाख्यं परं ब्रह्मैव यथाशक्ति उक्त्वा प्रशाम्यति । अतः परं न किञ्चिद्वदन्ति । नचैतदज्ञमतम् । विजानतामित्युक्तत्वात् । सुवाकाः सूक्तानि तत्समुदायविशेषाः । अनूचान वेददर्शिभिः नैरन्तर्येणोक्तमृग्जातं हि सूक्तं नाम । पूर्वाह्निकमपराह्निकमित्याद्येकालिकं सूक्तजातामनुवाकः । तथाचोक्तं भाष्यकारभट्टारकैरेवान्यत्र । "सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका" इति । उपनिषदो ब्राह्मणानि । सत्येषु सामस्थितिवचनादन्यवेदानामपि सत्यत्वमुपलक्षितम् । एवञ्च सर्ववेदमिथ्यात्वं निराकृतं भवति । सर्वविद्याप्रतिष्ठामित्यतस्तद्विशेषणं विवृणोति । चतुर्दशेत्यादि मूलश्रुत्या चत्वारो वेदाः षडङ्गान्यायुर्वेदाद्युपाङ्गचतुष्टयं चेति हि चतुर्दशविद्याः । अथ महाभारतं पुराणं पञ्चरात्रं मूलरामाणं चेत्येतदन्तश्चतुष्कं एताश्चतुर्दशविद्या ब्रह्मज्ञानस्योत्पत्तिस्थानानि । मूलश्रुतिरविभक्तवेदः । अथाप्यृगादीनां परविद्यात्वमेव प्रचुरमित्येतत्पञ्चरात्रं कीदृगित्यादौ नारायणसंहितायां च सुप्रसिद्धमिति दर्शयति । तत्तन्मन्त्रदेवतात्वेन चेज्यः स भगवान् ।

मननशीलत्वान्मनुनामका ब्रह्माद्यास्ते केवलं गुरुत्वादिनैवान्यैरिज्यन्ते । नन्वेता देवताः साक्षान्मन्त्रप्रतिपाद्यदेवत्वेन कैश्चित्क्वचिदिज्यन्ते । पारावर्यं परावरार्थद्वय-वाचकत्वं वेदे स्वल्पमपि नास्ति । तत्काले केवलं विष्णुविषयत्वेन बुद्ध्यैव तुरगाननादृगादीनामुत्थितत्वात् । अतः कृतयुगे त्वेक एव वेदः । परब्रह्मैक-विषयत्वात् । स एकोऽपि त्रेतादौ परापरविषयत्वेन बहुधाऽभवत् । अधिकारिणां शक्तिह्रासादित्यर्थः । नन्वस्यामुपनिषदि द्वे विद्ये वेदितव्ये इत्येवोक्तत्वादन्ततः परविद्यात्वमस्तीति नोक्तमित्यत आह— **अत्रापीति** ।। अस्यामुपनिषद्यपि "तदेतत्सत्यमि"त्याद्युत्तरखण्डे कर्मविषयामपरविद्यामुक्त्वा "येनाक्षरमि"त्यन्त-वाक्येन "तत्त्वतो ब्रह्मविद्यां प्रोवाचे"त्याथर्वणमन्त्रानशेषानपि परविद्यात्वेनाह । एवम्भूतायामपि परविद्यायां केषामधिकार इत्याकांक्षायामाह— **चतुर्वेदेति** ।। सर्ववेदोक्तसंस्कार-वतामेवास्यां परविद्यायां मुख्य अधिकार उक्तः । शाखान्तरे तेषामेव चेत्यादौ । अत्र शिरोव्रतं नाम ब्रह्मचारिण उपनिषदि विहितं महानाम्न्यादिव्रतचतुष्कं चातुर्वेदसंस्कारवत्त्वं कथमिह विहितमित्याकांक्षायामाह-— **शिरोव्रतमिति** ।। एतद्वचनस्य सर्ववेदव्रतोपलक्षणत्वेन वर्तमानत्वात् तानि चोपनयनोपकरणादीनि इति सिद्धम् । अथ सर्वव्रतेष्वशक्तस्यापि स्वशाखोक्तव्रतिनः सर्वविद्याधिकारः स्मर्यत इत्याह— **स्ववेदेति** ।।

**वा.टी.**——शब्दब्रह्म प्रशाम्यतीत्यत्र शब्दब्रह्म शब्दब्रह्माभिमानिनी श्रीः प्रशाम्यति प्रशान्ता भवति । अन्यथा प्रकुपिता भवतीत्यर्थः । ब्रह्माद्या मनुनामका इत्यत्र मनुनामकाः मनुसूक्तादिमन्त्रेषु नाम हिरण्यगर्भसूक्तं रुद्रसूक्तमिन्द्रसूक्तमित्यादिना सम्बद्धं नाम येषां ते तथोक्ताः । हिरण्यगर्भादीनां तत्सूक्तवक्तृत्वादिनैव तेषां सूक्तानां हिरण्यगर्भादिसूक्तत्वोक्तिः, नतु तत्तत्प्रतिपाद्यत्वेन । यथा भागवतविद्या परमहंसपाठयोग्यत्वात्पारमहंस्येत्युच्यते तथेति भावः । वक्तृत्वं स्वयं पाठकत्वम्। पाठकभृत्त्वं पितृत्वं, गुरुत्वमुपदेष्टृत्वमिति यावत् । कारित्वं तत्तत्सूक्तमन्त्रैः भगवत्पूजाकारित्वमिति भावः । तदुक्तं भागवते—

त्रय्या च विद्यया केचित् त्वां वै वैतानिका द्विजाः ।
यजन्ते विविधैर्यज्ञैः नानारूपामराख्यया ।। इति ।।

तस्मात् इन्द्रादिनामभिरपि हरेरेव पूजाकारित्वादित्यर्थः । अनुव्याख्यान्ता इत्यत्रानुव्याख्यापदेन संहिताव्याख्यानरूपं ब्राह्मणं गृह्यते । त्रैतैः त्रेतायुगे विद्यमानैः । स एव पञ्चधा जात इत्यत्र स वेदः इतिहासपुराणेन सह पञ्चधा जातः । कृष्णद्वैपायनकृतेतिहासपुराणयोः त्रेतायामभावाच्चतुर्धा विभागस्यापि व्यासकृत्वेनाथर्ववेदस्यापि त्रेतायां पृथक् विभागाभावात् त्रेतायां त्रिधाऽभवदित्युक्तम् । त्रेतायामपि व्यासावतारस्य विद्यमानत्वेन ईषदशक्ततदानीन्तनजनापेक्षया व्यास एव त्रिधा विभागं कृतवान् । द्वापरे तु युगसामर्थ्येन गौन्मस्य शापसामर्थ्येन च जनानां मन्दमतित्वाच्चतुर्धा विभज्य तांश्च पुनरनेकधा विभज्य तत्सर्वं चतुर्वेदेष्वन्तर्भाव्यात्राप्यशक्तानामितिहासपुराणाख्यं पञ्चमं वेदं कृत्वा पञ्चधा वेदं प्रवर्तयामासेति ज्ञेयम् । वर्तितव्यः कलावपीत्यत्र कार्तयुगः मुख्यो धर्मः कार्यवशात्कलौ जातैरुत्तमाधिकारिभिः कलावपि प्रवर्तयितुं शक्यः । किमु त्रेतादाविति भावः । कथमन्यथा त्रेतायां सर्वज्ञा वसिष्ठादयः, द्वापरे पाण्डवाः, कलौ व्यासशिष्यो मध्वमुनिश्च कार्तयुगमुख्यधर्ममेव प्रवर्तयाञ्चक्रुः ? प्रोवाच तां तत्त्वतो ब्रह्मविद्यामित्यत्र तां 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इत्यादिना मन्त्रपदोदितकर्मविषयकऋगादिविद्यामेव तत्त्वतः तत्त्वार्थमुदीर्य ब्रह्मविद्यामुवाचेति ज्ञापनार्थमादाय कर्मविषया उक्ता । तस्या एव तत्त्वार्थविचारे सति ब्रह्मविद्यात्वोक्तेराथर्वणानेव मन्त्रान् परविद्यात्वेनाऽऽहेत्युक्तम् । अन्यथा मन्त्रपदोदितऋग्यजुःसामाथर्वाख्यवेदचतुष्टयस्याप्यपरविद्यात्वे तदतिरिक्तवेदरूपविद्याया अभावेन पौरुषेयविद्यैव परविद्येत्युक्तं स्यात् । तत्तु सर्वथा असम्भावितम् । अतो नीचकर्मविषयत्वेन या अपरविद्या सैवोत्तमब्रह्मविषयतया व्याख्याने परविद्येत्यनिच्छताऽप्यङ्गीकार्यम् । अत एव अपरविद्यां विभज्य दर्शयन्ती श्रुतिः न परविद्यां विभज्य दर्शितवती । अस्माभिश्च दृढाभिसन्धेः गम्भीरभाष्यकारवाक्यार्थस्य प्रपञ्चनाय विद्याद्वयप्रस्ताव एव सर्वमिदमुदितमिति ज्ञेयम् । शिरोव्रतं विधिवद्यैश्च चीर्णमित्यत्र शिरोव्रतपदेन

नूतनब्रह्मचारिभिः स्वस्वशाखाध्ययनाधिकारसिद्ध्यर्थं श्रावणपौर्णमास्यां, श्रवणनक्षत्रे वा, भाद्रपदे मासि हस्तानक्षत्रे वा शिरोमुण्डनपूर्वकमुपाकर्माख्यं यत्कर्म क्रियते तदुच्यते । तर्हि तादृशकर्मणा स्वस्वशाखाध्ययनाधिकार एव सिद्ध्यति । सर्व-वेदेष्वधिकारसिद्धिः कथमित्यत आह— **शिरोव्रतमित्युपलक्षणत्वेनेति** ।। स्वस्वशाखाध्ययनाधिकारार्थमिति यच्छिरोव्रताख्यं कर्म कर्तव्यमित्युक्तं तत्सर्ववेदा-ध्ययनाधिकारस्याप्युपलक्षणत्वेनोक्तम् । नतु स्वस्वशाखाध्ययनाधिकारमात्रार्थम् । 'ततोऽन्नमभिजायते' इत्यत्रान्नशब्देनान्नाभिमानिनी श्रीश्च गृह्यते । तस्याः जननं स्वाभिमन्यमानप्रकृतिप्रवर्तनेन सृष्ट्यभिमुखीकरणम् । सतो वस्तुनः ज्ञापकत्वात् व्यापकत्वाच्च सत्यपदेन दशेन्द्रियाणि तदभिमानिनो देवाश्च गृह्यन्ते । लोकपदेन लोक्यन्ते अवलोक्यन्त इति व्युत्पत्त्या मात्रापञ्चकं भूतपञ्चकं तदभिमानिनो देवाश्च गृह्यन्ते । तथा पुनर्लोकपदेनैव अण्डान्तश्चतुर्दश लोकाः, लोकाभिमानिनो देवास्तद्गतजनाश्च गृह्यन्ते । 'लोकस्तु भुवने जने' इत्यनुशासनम् । कर्मपदेन यज्ञादिकर्माणि तदभिमानिदेवाश्च गृह्यन्ते इति ज्ञेयम् । 'एतद्ब्रह्म नामरूपमन्नञ्च' इत्यत्रान्नञ्च एतद्ब्रह्म चतुर्मुखः नाम रूपं च जायत इति योजना ।।

**स.टी.——** ।। **ऋगाद्या इति** ।। यदभ्यधाः मीमांसानुगृहीतर्गादिभिर्विष्णुरेव प्रतिपाद्यत इति तन्नोपपद्यते । ऋचा होत्रं यजुषाध्वर्यवं साम्नोद्गीथमिति त्रयः कर्मणि तदङ्गेषु विनियोगात् । आथर्वणस्य कर्माङ्गदेवताप्रकाशकत्वात् । इतिहास-पुराणानां च तदुपबृंहकत्वेनैव कार्तार्थत्वात् । देवताप्रधानकत्वेऽपि वा विद्यायाः विष्णुसदृशतदुत्तमदेवताकत्वस्य वा सम्भवात् । इन्द्रादियाजकानां च बहुलमुप-लम्भात् इति। मैवमित्याह— **ऋग्भिरिति** ।। ननु इन्द्रादिप्रतिपादकमन्त्रेषु इन्द्रादिशब्दानां श्रवणात्तेषामेव शंसनीयत्वं स्तोतव्यत्वं होतव्यत्वं चेति । नैष दोषः । तेषां भगवत्परत्वात् । तदाह— **वेद इति** ।। एतद्ब्रह्म वान्ते आदौ चोक्त्वा विजानतामेव ऋगादित्वेन पञ्चधा संस्थं शब्दब्रह्म वेदराशिः प्रशाम्यति । अन्यप्रतिपादनाय नोद्युक्तम् । वाकानुवाकाः यजुर्वाक्यविशेषाः । निषदित्याथर्वण-वाक्यविशेषः । सत्येषु यथार्थप्रतिपादकेषु । तपांसि 'तप आलोचन' इति

धातोः । आलोचनरूपाः युक्तयस्तपांसि वदन्ति प्रत्यापयन्ति । वेदान्ताः ब्रह्मसूत्राणि अत एव भगवद्गीताभाष्ये "वेदनिर्णयात्मिका मीमांसा वेदान्तः" इत्यभाषिष्ट । "वेदो वेदार्थः, तस्यान्तो निर्णयः तदात्मिका । तादर्थ्यात्तल्लब्धमि"त्यटीकत । किञ्च ऋगादीनामेव परविद्यात्वं नतूपनिषन्मात्रस्य न वा तज्जन्यज्ञानस्य । ऋगादीनामेव महाविद्यास्थानपदेन मूलश्रुतौ परविद्यात्वस्य प्रतिपादनात् । तदाह- – **चतुर्दशेति** ।। अथ ऋग्भिर्होत्रेण शंसन्तीत्यादिना यदकथि तदयुक्तम् । सर्वेषां वेदानां परमात्मस्वरूपमात्रपरत्वे तस्य पञ्चरात्रार्थत्वेन पञ्चरात्रवेदानामेकार्थत्वं स्यात् । सर्ववेदानां एकार्थप्रतिपादकत्वेनैकमेव च नाम स्यात् । ऋग्यजुरित्यादि-भिन्नार्थधातुजन्यनामानि च न स्युः । तथा इन्द्रादिनाम्नां शचीपत्यादिषु वृत्तिर्न स्यात् । वृत्त्यनङ्गीकारे च निरर्थकत्वेन तेषां व्यवहारो न स्यात् । आग्नेयाग्नीषोमीया-दाविज्याभावश्च । नामाभावेन ब्रह्मादिव्यवहाराभावश्च । किञ्चैवं सति ब्रह्मादीनां वन्दनीयत्वादिकं च न स्यात् । निमित्ताभावात् विष्णोरेवेज्यत्वाङ्गीकारे लोकाना-मन्ययाजित्वप्रसिद्धिविरोधाच्च "कार्यं बादरिरि"ति "देवान् देवयजो यान्ती"ति सूत्रस्मृतिविरोधात् । तस्मात्परब्रह्मप्रतिपादकत्वेन परविद्यात्वं उपनिषदाम् । इतरदेवताप्रतिपादकत्वेन अपरविद्यात्वं ऋगादीनामङ्गीकर्तव्यम् । नैष दोषः । ऋग्भिरिति श्लोकस्य कार्तयुगजनपरत्वेनेष्टापत्तेः । तथाहि पञ्चरात्रस्य ऋगादेश्च सर्वस्य पुरा कृतयुगे एकताभावनात् । नाद्यो नावकल्पते । मूलवेद इत्याख्यायाः अङ्गीकारात् । न द्वितीयोऽपि । कृतयुगे मूलवेदस्य ऋक्सामादिनाम्नामनभ्युपगतेः । न तृतीयः । विष्णोरन्यत्र शचीपत्यादौ क्वचिदपि इन्द्रादिनाम्नां प्रवृत्त्यभावात् । न तुरीयः । ब्रह्मरुद्रेन्द्रपूर्वैर्नामभिर्हरिरेव वाचीति नैरर्थक्याभावात् । न पञ्चमः । विष्णोरेव देवतात्वेनेज्यत्वात् । न षष्ठः । मनुनाम्ना तेषां व्यवहारसम्भवात् । नापि सप्तमः । विद्योपदेष्टृत्वपितृत्वतत्तत्कर्मकारयितृत्वरूपनिमित्तसद्भावेन तद-भावासिद्धे पूज्यत्वसम्भवात् । नाष्टमः । कार्तयुगजनानां विष्ण्वितरायाजित्वस्य हरिप्राप्तेरेवाभ्युपगमेन प्रसिद्धसूत्रस्मृतीनामन्ययुगस्थजनपरत्वात् । न नवमो, नापि दशमः । तस्मात्कृतयुगेऽर्थभेदाभावान्न वेदेषु पारावर्यम् । किञ्च यस्मादृगाद्या

अनुव्याख्यान्तास्तुरगाननाद्धरेरेवोत्थिताः निःसृताः हिरण्यगर्भादयस्तु तन्निःसृतवेद-गृहीतारो द्वितीयतृतीयप्रतिपत्तारः । आद्योपाध्यायस्तु भगवानेव अत एव ऋग्भाष्ये भाषितम् ।

हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः ।
ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि ।।
शक्राद्या सनकाद्याश्च दक्षाद्या मनवस्तथा ।
जगृहुस्ते च विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः ।। इति ।।

इति तस्मात्सर्वैर्वेदैर्हरिमेव यजेत । अत एव सर्वे ब्रह्मादयः तथा मनवो मानवाश्च सर्ववेदैर्विनिश्चयाज्ञानन्ति । निश्चेयभिन्नज्ञानाश्रया अपि तमेव यजन्ति । अतो न पारावर्यम् । तथाच प्रयोगः । ब्रह्मादयो न वेदादिप्रतिपाद्या अध्येतृत्वात् यष्टृत्वात्, ज्ञातृत्वाद्देवदत्तवदिति । तर्हि सर्ववेदैर्हरियजनस्य जोषामासनं प्रासजत् । नैष दोषः । अशक्तस्य पञ्चरात्रेण ऋगाद्यैर्वा यजनसम्भवात् । अत एव ऋगादिरूपेण भिन्नेनैव वेदैस्त्रैतैः त्रेतायां भवैः जनैर्हरिरिष्टः । द्वापरीयैस्तु जनैः केवलैः पञ्चरात्रै-रेवायजि । कलियुगे तु नाममात्रेण हरिमार्जिहन् । तदिदमभाषत— **पञ्चरात्र-मित्यादिना नारायणसंहितायामित्यन्तेन** ।। एको वेद इत्यादिकं तु पूर्वोक्तस्यैव प्रपञ्चनं इत्यवेत । वेदः पुरुषशक्त्यल्पत्वापेक्षया शब्दतोऽर्थतश्च ह्रसतीत्युक्तम् । तत्र भारतवचनं पठति— **वेदवादाश्चेति** ।। इदं मोक्षधर्मे शुकं प्रति वेदव्यास-वचनम् । नन्वेवं कृतयुगे सर्ववेदोक्तप्रकारेण हरियजनेऽशक्तस्य तूष्णीम्भाव एव प्राप्त इत्यत आह— **अशक्त इति** ।। यजन इति शेषः । अथेत्यर्थान्तरे । ऋगाद्यैस्तदुक्तप्रकारेणेति यावत् । यजने शक्तिरहितः पञ्चरात्रेण वा तं हरिं यजेदेव नतु प्रधानकर्मणो यजनस्य परित्याग इत्यर्थः । वाशब्देन साधनानादरं सूचयति । एवं कार्तयुगजनप्रवृत्तिप्रकारं प्रदर्श्य त्रेतादियुगस्थजनप्रवृत्तिप्रकारं दर्शयति— **ऋगाद्यैरेवेति** ।। स हरिः । त्रैतैः त्रेतायुगस्थैर्जनैः । भिन्नैः भगवत्तदितरदेवता-कर्मादिप्रतिपादकतया शाखाभेदेन त्रिधा विभक्तैः ऋगाद्यैरिष्टो भवतीत्यर्थः । केवलैः ऋगाद्यसहितैः । भिन्नैः ऋगाद्यैरिति त्रेतायां वेदभेद उक्तस्तमेव विशदयति-

— **एक इति** ।। एकः भगवद्रूपैकार्थप्रतिपादकः । स वेदस्त्रिधा । भगवत्तदितर-प्रतिपादकतया शाखाभेदेन त्रिविधोऽभवदित्यर्थः । द्वापरं युगं प्राप्य स एव भगवत्तदितरप्रतिपादकतया शाखाभेदेन पञ्चधा बहुधेति यावत् विभक्तो जात इत्यर्थः । नन्वेवं त्रेतादौ वेदविभागोक्त्या कृते सर्ववेदैर्हरिं यजन्ति । त्रेतादौ वेदाद्येकदेशेनेत्युक्तं स्यात् । ओमिति चेत्तर्हि त्रेतादावपि कृतयुग इव सर्ववेदैर्हरियजने शक्तः कश्चित्पुमांश्चेदस्ति तर्हि तेनापि ऋगाद्येकदेशेनैव हरियजनं कर्तव्यं स्याद्युगधर्मस्य अत्याज्यत्वादित्याशंकायां नेत्याह— **मुख्यो धर्म इति** ।। सर्ववेदैर्भगवन्मात्र-यजनरूपो मुख्यधर्म इत्यर्थः । कलावपि किमु त्रेताद्वापरयोः । नन्वेवं त्रेतादावपि सर्ववेदैर्हरिपूजाया एव धर्मत्वे ऋगाद्यैरेव स त्रैतैरित्यादिना विभज्य धर्मोक्तिर्विरुद्धा स्यादित्यतोऽशक्तविषयत्वान्न विरोध इत्याह— **त्रेतादाविति** ।। **तदशक्त्येति** ।। कृतयुग इव सर्ववेदैर्भगवन्मात्रयजनेऽशक्त्येत्यर्थः । अन्यः वेदाद्येकदेशेन भगवत्तदितरयजनरूपो धर्मो ऋषिभिः सम्प्रवर्तित इत्यर्थः । तथा चैतदभिप्रायेणैव ऋगाद्यैरेवेत्याद्युक्तमित्यविरोध इति भावः । एको वेद इत्याद्युक्तेऽर्थे नारायण-संहितागतमेव स्थानान्तरस्थवाक्यं पठति— **कृत इति** ।। वेदा भागवताः भगवन्मात्रप्रतिपादकाः । पुरुषा भागवता भगवन्मात्रभक्ताः अनन्ययाजिन इति यावदित्यर्थः । त्रेतायां भिन्नविषयाः भगवद्व्यतिरिक्तदेवताकर्मादिविषयाः । वेदा इति वर्तते । ततो वेदानां भिन्नविषयत्वादेव पुरुषा अपि त्रैविद्यतां गताः अन्यदेवता इष्ट्वा अन्ते विष्णौ समर्पयन्त इत्यर्थः । अन्ये पृथक्तानिष्ठा विष्णावर्पयन्त इति वक्ष्यमाणत्वादिति भावः । ऋगादीनां परविद्यात्वोपपादनमुपसंहरति— **तस्मादिति** ।। वेदः पुरुषशक्त्यल्पत्वापेक्षया त्रेतादौ ह्रसतीत्युक्तम् । अन्यथा त्रिधा पञ्चधा शाखाभेदकथनानुपपत्तेः । उत्सन्नः स कलिं प्राप्येति च स्पष्टं वेदानां कलौ ह्रास उक्तः । तमेव पुनः स्पष्टं प्रमाणेनाह— **वेदवादाश्चेति** ।। वेदपाठा इत्यर्थः । नोऽस्माकं श्रुतिः श्रवणमस्ति । अस्माभिः श्रुतमस्तीति यावदिति मोक्षधर्मे शुकं प्रति वेदव्यासवचनम् । अथापि सर्ववेदानां पञ्चरात्राणां च भगवत्प्रतिपादकत्वाभ्युपगमो व्यर्थः । उपनिषन्मात्रेण भगवत्प्रतिपत्तेः सम्भवात् ।

अल्पकालेनासम्भवेऽपि बहुकालेन सम्भवात् । मा चैवं मंस्थाः । वेदैः पञ्चरात्रैश्च भक्त्या यज्ञैर्विनोपनिषन्मात्रेण वर्षकोटिशतैरपि भगवतो दृश्यत्वायोगात् । तथाच वाराहे भगवानभिदधे— **वेदैश्चेति** ।। किञ्चोपनिषदां ब्रह्मप्रतिपादकत्वेन परविद्यात्वं ऋगादीनां कर्मादिप्रतिपादकत्वेनापरविद्यात्वमित्यभिधानं नोपपद्येत । अस्यामेवाथर्वण्यामुपनिषदि "तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्नि"त्यादिना कर्मविषयत्वेनापरविद्यात्वेन बोध्यमानानेव मन्त्रान् "येनाक्षरं पुरुषं वेद सत्यमि"त्याद्याथर्वणानेव मन्त्रान्परविद्यात्वेनाभिधानात् । अत एव भाष्यं प्रववृते — **अत्रापीति** ।। अपिच ऋगादीनामुपनिषदां च परापरत्वेन विद्याद्वैतकल्पनमनुपपन्नम् । तथात्वे हि अधिकारिभेदकल्पनाप्रसङ्गात् । नच तद्युज्यते स्वस्वशाखाध्ययनार्थं कृतसंस्कारवतामेव स्वस्वशाखोपनिषद्विद्यायामधिकारस्योक्तेः । तथाचात्रैवाश्रावि । "तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णमि"ति । येनाथर्वशाखासंहिताध्ययनार्थं शिरोव्रतं चीर्णं तस्य तत्र स्वोपनिषदध्ययनाधिकारोऽस्तीत्येतत् उपलक्षणया स्वस्वशाखाध्ययनसंस्कारवतामेव स्वस्वोपनिषद्विद्यायामधिकार इति अवगमयतीति । तथाच भाष्यम् । चतुर्वेदसंस्कारवतामेवेत्यादिशिरोव्रतमित्युपलक्षणत्वेनेत्यन्तम् । ननु तथाप्यत्र स्वस्वशाखासंहिताध्ययनार्थं चीर्णशिरोव्रतेन स्वशाखोपनिषदध्ययनाधिकारावगतौ उपलक्षणया च तत्तच्छाखासंहिताध्ययनार्थं कृतसंस्कारवतां तत्तच्छाखोपनिषदध्ययनाधिकारावगतावपि तदन्यशाखासु तदुपनिषत्सु च कथमधिकारावगतिः । तथाच सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषाधिकरणानुपपत्तिः । किञ्चोपलक्षणायां नावगमकं पश्यामः । नैष दोषः । स्ववेदव्रतयुक्तस्य सर्ववेदगतासु विद्यासु अधिकारोऽस्ति । अवेदव्रतयुक्तस्य कस्यापि नाधिकार इत्यभ्युपगमात् । अत एव व्यासस्मृतिः पेठिरे— **स्ववेदेति** ।।

**व.टी.**——उपनिषन्मात्रस्य तु ब्रह्मविषयत्वात् परविद्यात्वमुच्यत इत्यन्यथाव्याख्यानं निराकुर्वन्नेव परिहारवाक्याभिप्रायं वचनान्तरेणैव दर्शयति— **ऋगाद्या इति** ।। ननु किमर्थमेवमङ्गीक्रियते परोक्तव्यवस्थैव किन्नाश्रीयत इत्यत आह— **ऋग्भिरिति** ।। ये ऋग्वेदिनः ऋग्भिः ऋग्वेदगतमन्त्रैर्हौत्रकर्मणि विष्णुमेव स्तुवन्ति । ये च

सामगा औद्गात्रे कर्मणि सामभिः स्तुवन्ति विष्णुं च । यजुर्वेदिनो यजुर्भिः हरिं स्तुवन्ति विष्णुसदृशं वस्त्वपि न मन्यते । त एव भागवतोत्तमाः नान्य इत्यर्थः । एतद्ब्रह्म अन्ते उपसंहारे मध्ये मध्यमभागे उपक्रमे चेत्यपि द्रष्टव्यम् । उक्त्वा प्रतिपाद्य विजानतां तद्ब्रह्म विशेषेण जानतां पुरुषाणां ऋग्यजुःसामाथर्वेतिहासपुराणभेदेन पञ्चधा संस्थितं शब्दब्रह्म प्रशाम्यति । प्रक्षुब्धं न भवति । किन्तु एवं ज्ञात्वा व्याख्यातृभ्योऽभीष्टफलप्रदं भवतीत्यर्थः । वाक् नाम ऋग्वेदे स्वाध्यायविश्रमाय कृताः परिच्छेदाः । अनुवाका यजुर्वेदे । निषदा नामैकायनशाखायां विश्रमार्थाय स्वाध्याये कृताः परिच्छेदाः । उपनिषदस्तु प्रसिद्धाः । एतेषु पुराणादिवाक्येषु सर्ववेदोदितेष्वपि विष्णुरेव प्रतिपाद्य इत्युक्तत्वान्न त्वदुक्तव्यवस्था घटत इत्यर्थः । इतोऽप्यृग्वेदादयोऽपरविद्या उपनिषदेव परविद्येति व्यवस्था न युक्तेत्याह— **चतुर्दशेति** ।।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।

इति स्मृतिवाक्ये यानि चतुर्दशविद्यास्थानान्युक्तानि । तेषां मूलश्रुतौ चतुर्दशमहाविद्यास्थानानि वेदितव्यानीति वाक्येन महाविद्यास्थानत्वकथनात् महाविद्यास्थानानां च परविद्यात्वस्य दुर्वारत्वादित्यर्थः । अत्रैवार्थे संवादकं वचनान्तरं चोदाहरति— **पञ्चरात्रमिति** ।। पञ्चरात्रादीनामेकत्वं तु विष्ण्वेकविषयत्वादिति ज्ञातव्यम् । ननु कृतयुगकालेऽपीन्द्रचन्द्रादिदेवानां वेदप्रतिपाद्यत्वात् कथं विष्ण्वेकविषयत्वं वेदादीनामित्यत्राह— **नैवेति** ।। किं तर्हीत्यत आह— **ब्रह्मेति** ।। नन्वेवं सति ब्रह्मादीनां यज्ञादिषु सर्वात्मना यज्ञादिषु प्रवेशो नास्त्येव किमित्यपेक्षायामाह— **देवतेति** ।। वक्तृत्वेन जगत उपदेष्टृत्वेन गुरुत्वेनेति यावत् । पितृत्वेन जगदुत्पादकत्वेन कारित्वेन सर्वप्राणिनामिन्द्रियादिषु स्थित्वा प्रवर्तकत्वेन यज्ञादिषु देवतात्वेन पूज्यो विष्णुरेव । ब्रह्मादयस्तु पितृत्वादिनिमित्तेनैव पूज्याः । नतु यज्ञदेवतात्वेनेत्यर्थः । तस्माद्वेदे न किञ्चन पारावर्यमिति । सर्ववेदेष्वपि विष्णोरेव प्रतिपाद्यत्वात्केषाञ्चिदृग्वेदादीनामपरविद्यात्वं उपनिषदां तु परविद्यात्व-

मित्येषा व्यवस्था नोपपन्नेत्यर्थः । माऽस्तु प्रतिपाद्यभेदाद्वेदे पारावर्यं ऋषिभेदात्तु भविष्यतीत्याह— **उत्थिता इति** ।। सर्ववेदानामपि हयग्रीवोत्थितत्वादृषिभेदोऽपि नास्तीत्यर्थः । ऋगादिसर्ववेदैः हरेर्यजनं कुर्यादित्युक्तम् । अत्राचारोऽप्यस्तीत्याह-— **तस्मादिति** ।। अपभ्रष्टब्रह्मादिव्यावृत्त्यर्थं मनव इत्युक्तम् । मानवाः मनुनामकानां ब्रह्मादीनां पुत्रा मरीच्यादयः । सर्ववेदैर्विष्णुयजनस्याशक्तौ किं कर्तव्यमित्यत्राह-— **अशक्ता इति** ।। अत्राप्याचारोऽस्तीत्याह— **ऋगाद्यैरिति** ।। पञ्चरात्रमृगाद्याश्चेत्यादिनोक्तमर्थमेकीकृत्य दर्शयति— **एको वेद इति** ।। नन्वेवं सत्यनध्याये वेदाध्ययनवत् कार्तयुगो धर्मः कलियुगादौ सर्वथा त्याज्य एव किन्नेत्याह— **मुख्य इति** ।। यदि कलावपि कृतयुग इव सर्ववेदैर्हरियजनं कर्तव्यमिति मतं तर्हि ग्रन्थान्तरे कृतयुगोक्तधर्मादन्यो धर्मः किमर्थमनुष्ठानार्थं तत्र विधीयत इत्यत आह— **त्रेतादाविति** ।। "एको वेदः कृते ह्यासीदि"त्युक्तं तत्र किंविषयत्वेनैकत्वं वेदस्येत्यत उक्तमेव स्मारयति— **कृते भागवताइति**। त्रैविद्यता नानादेवताविषयत। प्राक्प्रमेयमुपसंहरति— **तस्मादिति** ।। वेदानां त्रेतादियुगेष्वर्थतः शब्दतोऽपि ह्रासोऽस्तीत्यत्र वचनान्तरं चाह— **वेदवादा इति** ।। ऋग्वेदादीनां परविद्यात्वे वचनान्तरं चाह— **वेदैरिति** ।। एवं बाह्योपपत्त्या नोपनिषन्मात्रस्यैव परविद्यात्वमपितु ऋग्वेदादीनामप्यस्तीत्युपपादितम् । आन्तरोपपत्त्या इममेवार्थमुपपादयति— **अत्रापीति** ।। एतदुपनिषद्यपि "तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यां च पश्यन्नि"त्यादिना वाक्येन मन्त्रेषु कर्माण्यपश्यन्निति मन्त्राख्यां विद्यां कर्मज्ञापकत्वेनापरामुक्त्वा पश्चाद्येन मया वेदादि विद्यया अक्षरं पुरुषाख्यं ब्रह्म वेद तां ब्रह्मज्ञानसाधनभूतां ब्रह्मविद्यां तत्त्वतो याथार्थ्येन गुरुः शिष्याय प्रोवाचेत्युक्त्वा कोऽसौ तर्हि शिष्याय प्रोक्ता ब्रह्मज्ञानसाधनभूता विद्येत्याकांक्षायां "तदेतत्सत्यम्" "यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा" इत्यादिना आथर्वणमन्त्रा एव ब्रह्मविद्यात्वेनोक्ताः । एतदुपनिषन्मात्रस्यैव परविद्यात्वं नत्वृग्वेदादीनामिति व्यवस्था न युज्यते । आथर्वणमन्त्राणामपि ब्रह्मविद्याहेतुत्वेनोक्त्वा ब्रह्मज्ञानहेतोरेव परविद्यात्वादित्यर्थः । इतोऽप्युपनिषन्मात्रस्य

परविद्यात्वमन्यस्यापरविद्यात्वमिति न घटत इत्याह— **चातुर्वेद्येति** ।। चतुर्णां वेदानां समाहारश्चातुर्वेद्यं चत्वारो वेदा इति यावत् । तेषु वेदेषु प्रत्येकं वेदाध्ययनाङ्गत्वेन ये संस्कारा व्रतविशेषाः उक्ता महानाम्न्यादयः तेष्वन्यतमव्रतयुक्तस्य पुरुषस्य सर्ववेदादिविद्यायामधिकारोऽत्र वर्णितः । "शिरोव्रतं विधिवद्यैस्तु चीर्णमि"ति वाक्येन अतः सर्वा अपि विद्या एकविषया एव । भिन्नविषयत्वे उपनिषदध्ययनार्थं पृथग्व्रतं संहिताध्ययनार्थं पृथग्व्रतमिति प्रसज्येतेत्यर्थः । "शिरोव्रतं विधिवद्यैस्तु चीर्ण"मित्यत्र यत्किञ्चिद्व्रतयुक्तस्य सर्वविद्याधिकार इति नोच्यते । किन्तु शिरोव्रताख्यव्रतयुक्तस्यैव अतः कथं यत्किञ्चिद्व्रतयुक्तस्य सर्वविद्यायामधिकारो विवक्षित इत्यत आह— **शिरोव्रतमिति** ।। अत्रैव वचनान्तरसम्मतिमाह— **स्ववेदेति** ।।

**श्री.टी.**——अत्र द्वे विद्ये वेदितव्ये इति प्रतिज्ञाय "तत्रापरा ऋग्वेदो यजुर्वेद" इत्यादिना ऋगादीनामपरविद्यात्वमुक्त्वा, "अथ परा यया तदक्षरमधिगम्यत" इत्यनेन परविद्योच्यते सा च परविद्या ऋगादिव्यतिरिक्ता उपनिषदित्यपरे व्याचक्षते । तदयुक्तम् । ऋगादिग्रहणेनैव तासामपि गृहीतत्वात् । ब्राह्मणपरिव्राजकन्यायस्य चागतिकगतित्वात् । तज्जन्यं ज्ञानं परविद्येत्यपि न युक्तम् । "यया तदक्षरमधिगम्यत" इत्युक्ताक्षराधिगतिकरणत्वानुपपत्तेः । "द्वे विद्ये वेदितव्य" इतिं सकृदुक्तविद्याशब्दस्यानेकार्थताकल्पनापत्तेश्च । अतोऽपरविद्यात्वेनोक्ता ऋगादय एव परविद्याः । नच वाच्यमृगादीनामेवापरविद्यात्वं परविद्यात्वं च विरुद्धमिति । यदा ब्रह्ममीमांसाव्युत्पादितन्यायानुपकृता ऋगादिवेदादयो भगवदन्यापातप्रतीतकर्मादिविषयतया योज्यन्ते तदा तेषामपरविद्यात्वम् । यदा तु त एव वेदाद्याः ब्रह्ममीमांसाव्युत्पादितन्यायोपकृताः सन्तो भगवद्विषयतया योज्यन्ते तदा तेषामेव परविद्यात्वमित्याशयेनाह— **ऋगाद्या इति** ।। यथोक्तं सुधायाम् "ब्रह्ममीमांसाशास्त्रव्युत्पादकन्यायानुपकृता वेदादयो विष्णोरवाचकास्तदुपकृतास्तु तस्य वाचका भवन्ती"ति ।। ऋगादीनां सर्वेषां विष्णुवाचकत्वेन परविद्यात्वमुक्तं तदेव कुत इत्यतस्तत्र प्रमाणमाह— **ऋग्भिरित्यादिना** ।। हौत्रेणेति तृतीया सप्तम्यर्थे ।

हौत्रे कर्मणि होतार इति शेषः । तथाच होतारः हौत्रे कर्मणि विष्णुमेव शंसन्तीत्यर्थः । स्तुवन्ति उद्गातारः सामभिरिति शेषः । तथाचोद्गातारः सामभिरौद्गात्रे कर्मणि विष्णुमेव स्तुवन्ति गायन्तीत्यर्थः । ये इत्यस्य ते हीत्यनेनान्वयः । तस्मै विष्णवे तदर्थमित्यर्थः । अध्वर्यव इति शेषः । तथाचाध्वर्यवो यजुर्भिर्विष्णूद्देशेनैव जुह्वति होमं कुर्वन्तीत्यर्थः । एनं विष्णुमेव । तथाच यदि ऋगादीनां विष्णुपरत्वं न स्यात्तर्हि विष्णूद्देशेन कर्म कुर्वाणा भागवतोत्तमा होत्रादयो हौत्रादौ कर्मणि ऋगादिभिर्विष्णोः शंसनं न कुर्युः । तदप्रतिपादकवाक्यैस्तच्छंसनेऽप्रेक्षावत्त्व-प्राप्तेरतस्तदन्यथानुपपत्त्या ज्ञायते ऋगादीनां सर्वेषां विष्णुवाचकत्वमेवेति । नन्वथापीदमयुक्तम् । विष्णुवाचकवेदभागैर्विष्णुसूक्तादिभिरेव होत्रादयो विष्णुं शंसन्ति नत्विन्द्रादिवाचकसूक्तैरित्यपि सम्भवेन सर्वेषामपि वेदादीनां विष्णुपरत्वा-लाभादित्यतस्तत्र स्पष्टं प्रमाणान्याह— **वेद इत्यादिना** ।। सर्वत्र वेदादौ विष्णुरेव गीयत इति सम्बन्धः । इतिहासपुराणः पञ्चमो वेदानां वेद इति वचनादृगादीनां रूपेण पञ्चधा संस्थं शब्दब्रह्म वेदराशिर्वेदपुरुष इति यावत् । एतद्ब्रह्मैवादावन्ते मध्ये चेति सर्वत्र विजानतां कर्मणि षष्ठी विजानतः प्रत्यधिकारिणः प्रतीति यावत् । उक्त्वा प्रशाम्यति प्रकर्षेण सन्तुष्टो भवतीत्यर्थः। वाकानुवाकाः यजुर्वेदवाक्यविशेषाः । निषदित्याथर्वणवाक्यविशेषाः । सत्यकर्माणं अबाधित-कर्माणम् । "यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्यकर्मा महात्मे"ति श्रुतेः । सत्यं निर्दुःखनिरतिशयानन्दानुभवरूपम् । यथोक्तं भागवततात्पर्ये "सत्यं परं धीमही"त्यत्र । सत्यं निर्दुःखे नित्यनिरतिशयानन्दानुभवरूपमिति । सत्येषु यथार्थप्रतिपादकेषु । सामसु सामवेदेषु । तथाच वाकादिषु सत्येषु सामसु च सत्यकर्माणं सत्यं यं विष्णुं स्तुवन्तीत्यर्थः । यच्छब्दस्योत्तरेणान्वयः । यत्पदं यस्य भगवतः स्वरूपम् । आमनन्ति सम्यक्परममुख्यवृत्त्या प्रतिपादयन्ति । यत्प्रति कर्तव्यतया वदन्ति वेदाः । सर्ववेदानां भगवत्परत्वे भारतवाक्यं प्रमाणयति-– **यदिच्छन्त इति** ।। 'पद गतावि'ति धातोः सर्वैर्वेदैः प्रतिपद्यते गम्यत इति पदमित्यर्थः । इत्थमव्याख्याने उक्तार्थेऽस्य वाक्यस्य सम्मतित्वालाभादित्यव-

गन्तव्यम् । विष्णुप्रतिपादका ऋगादय एव परविद्या न तदतिरिक्ता काचिदस्तीत्यत्र प्रमाणान्तरमाह— **चतुर्दशेति** ।। पुराणं न्यायो मीमांसा धर्मशास्त्रं चेति चत्वारि । शिक्षादि षडङ्गानि । ऋगाद्याश्चत्वार इति चतुर्दश महाविद्याख्यानि च तानि स्थानानि च महाविद्यास्थानानि । परविद्याशब्दवाच्यानि । ज्ञानजनकत्वेन स्थान-शब्दवाच्यानि चेत्यर्थः । तथाच महाविद्यापरविद्या चेतीत्यनयोरेकार्थत्वादृगादीनामेव परविद्यात्वमनया श्रुत्या गम्यत इति भावः । महाविद्याजनकस्थानानीत्यर्थाङ्गीकारे ऋगादिजन्यज्ञानस्यैव महाविद्याशब्दोक्तपरविद्यात्वापत्त्या ऋगादीनां तदभावापातेन प्रकृतासङ्गतेः । परविद्याजनकत्वादेतेषामपि परविद्यात्वमिति व्याख्याने ऋगादिषु परविद्याशब्दस्य लाक्षणिकत्वापत्तेरिति ज्ञातव्यम् । मूलश्रुतिस्वरूपे विप्रतिपन्नं प्रति प्रमाणान्तरमाह— **पञ्चरात्रमित्यादिना** ।। ऋगाद्याश्चेति सर्वम् । एकं भगवद्रूपैकार्थप्रतिपादकम् । पुरा कृतयुगे ऋगादीनां तत्कालीनं नाम दर्शयति-— **मूलवेद इतीति** ।। इति इत्येवास्य नाम । तद्व्यावर्त्यमाह— **नैवेति** ।। नन्विन्द्रादिनाम्नामिन्द्रादिवाचकत्वात्कथं सर्वमेकमभवदित्युच्यत इत्यत आह—- **नैव चेति** ।। इन्द्रपूर्वैः । इन्द्र इति पूर्वैः । भगवत एव सर्ववेदप्रतिपाद्यत्वे समस्तवेदैर्भगवानेवेज्य इति प्राप्तमिति चेत्सत्यमित्याह— **देवतात्वेनेति** ।। चशब्द एवार्थे । या तेनोच्यते सा देवतेति वचनान्मुख्यतः समस्तवेदप्रतिपाद्यत्वेन निमित्तेन स विष्णुरेवेज्य इत्यर्थः । तर्हि ब्रह्मादियजनाभाव एव प्राप्त इत्यतस्तद्यजने तदा विशेषमाह— **ब्रह्माद्या इति** ।। ब्रह्माद्या देवताः सर्वा इत्यन्वयः । वक्तृ-त्वेन । भगवत्स्वरूपव्याख्यातृत्वेन कारित्वेन भगवत्पूजाकारित्वेन । हरिभक्त-त्वेनेति यावत् । एवकारव्यावर्त्यं दर्शयति— **नत्विति** ।। देवतया "हिरण्यगर्भः समवर्तताग्रे" "एको रुद्र" इत्यादिवेदप्रतिपाद्यतया नतु नैवेज्यन्त इत्यर्थः । यथाहीतरयुगेषु व्याख्यातारो गुरवः स्वपित्रादयो वा वेदादिप्रतिपाद्यतया नेज्यन्ते किन्तु वक्तृत्वादिनैव तद्वत्कृतयुगेऽपि ब्रह्माद्या इति भावः । क्वचिद्वक्तृत्वादिना कृतयुगे मनवः पूज्यन्त इत्युक्तिरस्ति तद्गतिप्रदर्शनाय मनुनामका इत्युक्तम् । यथोक्तं छान्दोग्यभाष्ये मनवो बोधवैशेष्यादित्यादि । तस्मात्तु तस्मादेव । एवं

सर्ववेदानां भगवत्स्वरूपमात्रप्रतिपादकत्वादेव कार्तयुगाः कृतयुगस्थजना भगवद्व्यतिरिक्तदेवतायाजिनो न भवन्तीत्यनन्ययाजिनः प्रसिद्धाः । अन्यथा तन्न स्यात् । अनन्ययाजित्वादेव तं हरिं च हरिमेव प्राप्नुवन्ति नान्यदेवता इति प्रसिद्धम् । अन्यथेदमपि न स्यात् । किन्तु त्रेतादाविव देवान्देवयजो यान्तीति न्यायेनान्यदेवताप्राप्तिरपि स्यादिति भावः । उपसंहरति— **तस्मादिति** ।। तस्मादृगादिसर्ववेदानां भगवन्मात्रप्रतिपादकत्वेन प्रतिपाद्यभेदस्य कृतयुगेऽभावादेव किञ्चन पारावर्यं परावरभावः पारावर्यं परविद्यात्वापरविद्यात्वभेदो नास्तीत्यर्थः । किन्नाम भगवत्स्वरूपमात्रप्रतिपादकत्वेन परविद्यात्वमेव न कर्मादिप्रतिपादकत्वेना-परविद्यात्वमिति भावः । इतोऽपि न वेदेषु पारावर्यमित्याह— **हरेर्यस्मादिति** ।। यथा हि लोके केनचिदुत्तमपुरुषेणोक्ता विद्याः परा इत्युच्यन्ते नीचपुरुषेणोक्ता विद्या अपरा इत्युच्यते नैवं वेदेष्वस्ति । यतो ऋगाद्या अनुव्याख्यान्तास्तुरगाननात् श्रीहयवदनाद्धरेरेवोत्थिता उद्गतास्तस्मादतिपरमपुरुषेण श्रीहयवदनेनोदितत्वेन वक्तृभेदाभावात्परविद्यात्वमेव नापरविद्यात्वमिति भावः । ऋगाद्या अनुव्याख्यान्ताः तथा "अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषच्छ्लोकाः सूत्राण्यनुव्याख्यानानी"ति बृहदारण्यकोपनिषदुक्ता द्रष्टव्याः । तदर्थस्तु तद्भाष्यादेवावगन्तव्यः । सर्वैर्वेदैर्हरियजनस्यैव कर्तव्यत्वे परकृतिरूपार्थवादमाह— **तस्मादिति** ।। 'मनु अवबोधन' इति धातोर्बोधवैशेष्यान्मनुशब्दवाच्याः मानवाः । मनुनामकब्रह्मादिदेवजन्यत्वान्मानवा वसिष्ठाद्या ऋषयः यजन्ति । कृतयुग इति शेषः । तं तमेव । ऋगादीनामेव परविद्यात्वे पुनः प्रमाणान्तरमाह— **वेदैश्चेति** ।। दृश्यो ज्ञातव्यः । "पश्यार्थैश्चानालोचन" इति ज्ञानमात्रेऽपि दृशेः प्रयोगादिति ज्ञातव्यम् । इति वाराहे वराहदेववचनमिति शेषः । अतोऽहमिति युक्तम् । किञ्चैतदुपनिषद्गतपूर्वोत्तरवाक्यपर्यालोचनया ऋगादीनामेव परविद्यात्वमपरविद्यात्वं चावगम्यत इत्याह— **अत्रापीति** ।। कर्मविषयाम् । आपाततः कर्मप्रतिपादिकां आथर्वणमन्त्ररूपामिति शेषः ।। **आहेति** ।। ब्रह्मविद्यामित्युक्तत्वादिति भावः । आथर्वणानेव मन्त्रानिति

वचनेनेयमाथर्वणीमन्त्रत्वे सत्युपनिषदित्युक्तं भवति । आथर्वणशाखिनां संहितात्वान्मन्त्रत्वं गोप्यार्थप्रतिपादकत्वादुपनिषत्त्वं चेत्युक्तं भवति । इतोऽपि ऋगादय एव विवक्षाभेदेन परविद्याः नोपनिषद इत्याशयेनाह— **चतुर्वेदेति** ।। चतुर्वेदसम्बन्धिसंस्कारवतामेवेत्यर्थः । स्वस्वशाखाध्ययनार्थं कृतसंस्कारवतामेवेति यावत् । तथाच स्वस्वशाखाध्ययनार्थं कृतसंस्कारवतामेव स्वस्वशाखोपनिषद्विद्यायामधिकारस्योक्तत्वात्संहितोपनिषदोः परापरविद्यात्वेन भेदाङ्गीकारेऽधिकार्यैक्यं न स्यादिति भावः । स्वस्वसंहिताध्ययने यः संस्कारः स एवोपनिषदादिसर्ववेदाध्ययनसंस्कार इत्यत्रैतदुपनिषद्गतमेव वाक्यं प्रमाणत्वेन पठति— **तेषामेवेति** ।। शिरोव्रतं चौलोपनयनादि । नन्वत्र वाक्ये शिरोव्रतं विधिवद्यैस्तु चीर्णं तेषामेवैतामाथर्वणीं ब्रह्मविद्यां वदेतेत्येवं यैराथर्वणशाखाध्ययनार्थं शिरोव्रतं चीर्णं तेषामाथर्वणोपनिषदध्ययन एवाधिकारोऽस्तीत्येवं प्राप्तं नत्वाथर्वणशाखासंहिताध्ययनार्थं कृतशिरोव्रतानां समस्तवेदाध्ययनाधिकारोऽस्तीत्याशंक्याह— **शिरोव्रतमितीति** ।। यैराथर्वणशाखासंहिताध्ययनार्थं शिरोव्रतं चीर्णं तेषां शाखोपनिषदाद्यधिकारोऽस्तीत्येतत्समस्तवेदाध्ययनाधिकारोऽस्तीत्यस्योपलक्षणत्वेनोक्तमित्यर्थः । उपलक्षणत्वेनोक्तमित्यत्र ज्ञापकमाह— **स्ववेदेति** ।। स्वस्वशाखाध्ययनार्थं विहितचौलोपनयनादिव्रतयुक्तस्येत्यर्थः । सर्ववेदगतासु विद्यास्विति सम्बन्धः । अवेदव्रतिनः स्वस्वशाखासंहिताध्ययनार्थं विहितचौलोपनयनादिव्रतशून्यस्य । क्वचिदपि नाधिकारोऽस्तीत्यर्थः । अत एव संहितोपनिषदोरेकाधिकारिकत्वोक्त्या तयोरेव परविद्यात्वमन्यथाधिकार्यैक्यं न स्यादिति प्रसिद्धमिति भावः ।।

**उ.टी.**—अत्रोपनिषदः परविद्या इति व्याख्यानमसत् । ऋगादिग्रहणेनैव गृहीतत्वात् । ब्राह्मणपरिव्राजकन्यायश्चागतिका गतिः । तज्जन्यं ज्ञानं परविद्येत्यप्यसत् । अक्षराधिगतिकरणत्वाभावात् । उभयत्रापि प्रमाणविरोधाच्चेति भावेनोपनिषदं प्रमाणेनैव व्याचष्टे— **ऋगाद्या इति** ।। **यदा विष्णोर्न वाचका इति** ।। त्रेतादिकालबलेन विष्णोरन्यत्रादरेण स्वकीययोग्यतावशेन च यदा ऋगाद्याः न विष्णोर्वाचकाः किन्तु कर्मादिप्रतिपादकाः तदा ऋगाद्याः अपरविद्याः । यदा तु

ऋगाद्याः ब्रह्ममीमांसाशास्त्रव्युत्पादिकन्यायोपकृतास्सन्तो विष्णोर्वाचकास्तदा ता एव परमा विद्याः । परविद्या इत्यर्थः । विद्या इत्येतदनुसारेण ता इति स्त्रीलिङ्गम् । 'णेरणौ यत्कर्मणौ चेत्स कर्ता ना ध्यान' इति सूत्रे यत्कर्म स कर्तेति वत् "शैत्यं हि यत्सा प्रकृतिर्जलस्ये"त्यादिवच्चेति ध्येयम् । अत्रानुभवसिद्धत्वादुपनिषदुक्तत्वाच्च वेदादीनां कर्मादिप्रतिपादकत्वमपरविद्यात्वं च नोपपादनीयम् । किन्तु विष्णुप्रतिपादकत्वं परविद्यात्वं च । तत्राद्यं प्रमाणान्तरेणोपपादयति— **ऋग्भिरिति** ।। हौत्रेणेति तृतीया सप्तम्यर्थे । ये होतारः हौत्रेण हौत्रे । यज्ञे ऋग्वेदमन्त्रशंसनकर्ता होता । "अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमादि"ति कोशात् । तस्येदं हौत्रम् । तस्मिन्हौत्रे कर्मणि ऋग्भिः शंसन्ति । ते विष्णुमेव शंसन्ति । तथा ये औद्गात्रे उद्गातुः सामवेदविदः इदं औद्गात्रम् । तस्मिन्कर्मणि । सामभिरिति शेषः । स्तुवन्ति ते विष्णुमेव स्तुवन्ति । अत्र होतारोऽप्रगीतमन्त्रैः स्तुवन्ति । उद्गातारस्तु प्रगीतमन्त्रैरिति विवेकः । तथा ये यजुर्भिर्जुह्वति तेऽपि तस्मै विष्णव एव जुह्वति । 'क्रियया यमभिप्रैति स सम्प्रदानमि'ति सम्प्रदानत्वे तस्मा इत्यत्र चतुर्थीति ध्येयम् । सेतिहासपुराणकैः आथर्वणैश्च एनं विष्णुं स्तुवन्ति । भागवता इति शेषः । ननु सर्वेऽपि भागवताः ऋगादिभिर्विष्णुमेव कुतस्स्तुवन्तीत्यत आह— **न विष्णोरिति** ।। हिशब्दो हेतौ । यस्मात्ते होत्रादयो भागवतोत्तमाः अतिशयितभगवद्भक्तियुक्ताः तस्मादतिशयितभक्तिरूपकारणेन तं विष्णुम् । वेदादिकरणैरिति शेषः । सर्वोत्तमं जानन्तः सन्तो विष्णोः सदृशं ततः परमं च न मन्वते । तस्माद्धोत्रादयो विष्णुमेव स्तुवन्तीत्यर्थः ।। ननु तथापि न सर्वेषां ऋगादीनां विष्णुवाचकत्वसिद्धिः । उक्तप्रमाणेन हौत्रादिकर्मणि नियुक्तानामेव ऋगादीनां भगवद्वाचकत्वलाभादित्यत आह— **वेद इति** ।। चतथाशब्दाः परस्परसमुच्चयार्थाः । एवशब्दस्य विष्णुरेवेत्यन्वयः । सर्वत्रेत्येतद्वेदादीनां चतुर्णामपि विशेषणम् । नन्वनेन प्रमाणेन सर्वेषां वेदादीनां विष्णुपरत्वमेव सिद्धम् । नतु ब्रह्मपरत्वम् । विष्णुब्रह्मणोः शबलशुद्धभेदेन भिन्नत्वादित्याशंकां तुष्यत्विति न्यायेन परिहरन्सर्वेषां ब्रह्मपरत्वे प्रमाणमाह— **एतदन्ते चेति** ।। ऋगादिपञ्चधा

संस्थम् । ऋग्यजुःसामाथर्वेतिहास-पुराणाख्यपञ्चमवेदभेदेन पञ्चधा स्थितं शब्दब्रह्म शब्दजातम् । विजानतां विशेषेण उपक्रमादिश्रुतिलिङ्गादियुक्त्यनुसन्धानविशेषेण जानतां वेदार्थज्ञानिनाम् । सम्बन्धमात्रे षष्ठी तान्प्रति । आदावन्ते च मध्ये च एतद्ब्रह्मैवोक्त्वा प्रशाम्यति पूरिताकांक्षं भवतीत्यर्थः । ननु सर्ववेदानां विष्णुपरत्व-प्रतिपादनाय तत्र तत्र स्तुवन्तीत्युक्तम् । सा चाविद्यमानस्तुतिः किं न स्यादित्याशंकां परिहर्तुमुक्तार्थे प्रमाणान्तरमाह— **यं वाकेष्विति** ।। वाकानुवाकौ यजुर्वेदगतप्रकरण-विशेषौ । निषदुपनिषदावथर्ववेदगतप्रकरणविशेषौ । सत्येष्विति वाकादीनां सर्वेषां हेतुगर्भविशेषणम् । अबाधितार्थकेष्वित्यर्थः । तथाच भागवताः सत्यकर्माणं अबाधितसर्जनादिकर्मविशिष्टम् । सत्यं साधुगुणपूर्णम् । यं विष्णुम् । सत्येष्व-बाधितार्थकेषु वाकेष्वनुवाकेषु निषत्सूपनिषत्सु सामसु स्तुवन्तीति योज्यम् । यमित्यस्य प्रमाणगतेन पूर्वेणोत्तरेण वा तच्छब्देनान्वयः । अनेन वेदैर्विद्यमानगुण-कर्मस्तुतिरेव क्रियते । अन्यथाबाधितार्थकत्वेन वेदानामप्रामाण्यप्रसङ्गात् । नचेष्टापत्तिः । वेदानामबाधितार्थकत्वादित्युच्यते । तेन वेदानां नाविद्यमानस्तुतिपरत्वं शंकनीयमिति भावः । ननु वेदानां कर्मादिवाचकत्वमनुभवसिद्धम् । विष्णुवाचकत्वं तु प्रमाणैस्साधितम् । अतस्तात्पर्यविषयवाक्यार्थभेदाद्वाक्यभेदप्रसङ्ग इत्याशंक्य महावाक्यभेदो नास्त्येव । वेदमहातात्पर्यविषयार्थस्यैकत्वात् । अवान्तरवाक्यभेदस्तु दोष एव न भवति । अन्यथातिप्रसङ्गादित्याशयेन वेदानां विष्णौ महातात्पर्यं कर्मादाववान्तरतात्पर्यमित्यर्थप्रतिपादकं प्रमाणान्तरं पठति— **सर्वे वेदा इति** ।। सर्वे वेदा यत्पदं आ सम्यक् महातात्पर्येणेति यावत् । मनन्ति प्रतिपादयन्ति । 'म्ना अभ्यास' इति धातोः । यत्प्रति यज्ज्ञानोद्देशेन । सर्वाणि कायिकवाचिक-मानसानि तपांसि वदन्ति । ननु वेदाः भगवज्ज्ञानोद्देशेन तपांसि प्रतिपादयन्तीत्येतदेव कुत इत्यत उक्तम्— **यदिच्छन्त इति** ।। यद्भगवत्स्वरूपं ज्ञातुमिच्छन्तोऽधि-कारिणः ब्रह्मचर्यं उपलक्षणमेतत् । त्रिविधं तपश्चरन्ति कुर्वन्ति । यत्पदं गम्यं तत् ते संग्रहेण प्रवक्ष्य इत्यन्वयः । अत्र यत्पदमित्यस्यान्वयप्रदर्शनार्थमुत्तरा-र्धोदाहरणम् । तेन तद्वैयर्थ्यमिति शंकानिरासः । ननु यदि वेदानां विष्णुवद्देवता-

न्तरेऽपि महातात्पर्यं स्यात्तर्हि महावाक्यभेदोऽपि स्यादेव । महातात्पर्यविषयार्थभेदादित्याशंकां परिहर्तुं वेदानां विष्णावेव महातात्पर्यं नान्यत्रेत्यर्थप्रतिपादकं भगवद्गीतावाक्यं पठति— **वेदैश्चेति** ।। अहमेव वेद्य इत्येवकारेण भगवदन्यस्य वेदवेद्यत्वं निषिद्ध्यते । नच तद्युक्तम् । अवान्तरतात्पर्येण भगवदन्यस्यापि वेदवेद्यत्वाङ्गीकारादतो महातात्पर्येणाहमेव सर्वैरपि वेदैर्वेद्यः । अन्यस्त्ववान्तरतात्पर्येणेति लभ्यते । तथाच महातात्पर्यविषयस्यैकत्वान्न महावाक्यभेद इति भावः । एवं सर्ववेदानां विष्णुवाचकत्वं यदा विष्णोस्तु वाचका इत्यनेन यदुक्तं तत्प्रमाणैरुपपादितम् । इदानीं ता एव परमा विद्या इत्युक्तमृगादीनां परविद्यात्वं प्रमाणेनैवोपपादयति— **चतुर्दशेति** ।। स्थानशब्दो निमित्तार्थः । निग्रहस्थानमिति यथा । विद्याशब्दो ज्ञानवाची । विद्यायाः स्थानानीति तत्पुरुषः । ततो महच्छब्देन कर्मधारयः । तथाच महाविद्यास्थानानि परविद्या इत्येकोऽर्थः ।

ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् ।
मूलरामायणं चैव पुराणं भगवत्परम् ।।
वेदा इत्युच्यते सद्भिः शिक्षाद्याः स्मृतयस्तथा ।
अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयम् ।।

इति स्मृतौ ऋगादीनामेव विद्यास्थानत्वरूपविद्यायतनत्वाभिधानादिति भावः । चतुर्दशेति मूलश्रुतौ चतुर्दशत्वेनोक्तानां परविद्यानां ऋग्यजुरिति स्मृतौ विवक्षाविशेषवशेन त्रित्वमुक्तमतो न विरोधः । नच—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।

इत्यनेन विरोध इति वाच्यम् । तत्र न्यायशब्देन नीयते निर्णीयते वेदार्थोऽनेनेति व्युत्पत्त्या इतिहासग्रहणात् । एतेन

ऋग्यजुःसामाथर्वाख्याः पञ्चरात्रं च भारतम् ।
मूलरामायणं चैव पुराणं भगवत्परम् ।।

इति तलवकारभाष्ये पञ्चरात्रादीनां पृथग्ग्रहणात्तद्विरोध इत्यपास्तम् ।

पञ्चरात्रादीनामपीतिहासपदेनैव ग्रहणसम्भवात्तेषामपीतिहासत्वात् । तदुक्तम्—

भारतं पञ्चरात्रं च मूलरामायणं तथा ।

इतिहास इति प्रोक्तम्.......... ।। इति ।।

"यदा विष्णोस्तु वाचका" इति कालविशेषे ऋगादीनां विष्णुवाचकत्वमुक्तम् । यदाशब्दप्रयोगात् । तत्प्रमाणेनैवोपपादयति— **पञ्चरात्रमिति** ।। पञ्चरात्रमृगाद्याश्चेति सर्वं पुरा कृतयुगे एकं एकविषयमभवदित्यर्थः । तदुपपादयति— **मूलवेद इतीति** ।। हिशब्दो हेतौ । तदेत्यस्यैव विवरणं कृतयुग इति । काल इति स्वरूपकथनम् । यस्मादृगादेः सर्वस्य कृतयुगे मूलवेद इति आख्या संज्ञा तस्मात्तत्सर्वं एकविषयमभवदिति योजना । अयमाशयः—मूलं वेदयतीति मूलवेदः । मूलशब्दोपपदात् ण्यन्तात् 'विद ज्ञान' इत्यस्माद्धातोः "कर्मण्यणि"ति सूत्रेण कर्तर्यण्प्रत्ययः । "णेरनिटी"ति णिलोपः । "उपपदमतिङि"ति समासः । ततश्च मूलवेदशब्दो मूलकारणज्ञापकमाचष्टे । मूलकारणं च विष्णुरेव । मुख्यामुख्ययो-र्मुख्ये सम्प्रत्यय इति न्यायात् । अतो मूलवेद इति संज्ञाबलादृगादिकं सर्वमेक-विषयकमिति कल्प्यते । नच मूलवेदशब्दो रूढ एवास्त्विति वाच्यम् । योगसम्भवे रूढिकल्पनस्य प्रोक्षण्यधिकरणन्यायविरुद्धत्वात् । तदुक्तम्—

भवेतां यदि वृक्षस्य वाजिकर्णौ कथञ्चन ।

अदृष्टां समुदायस्य कः शक्तिं जातु कल्पयेत् ।। इति ।।

ननु ऋगादिसंज्ञान्तरसद्भावात्कथं मूलवेद इति ह्याख्येत्युक्तमित्यत आह— **नैवर्क्सामेति** ।। विभक्तानामेव वेदानामृगादिसंज्ञा । कृतयुगे च न वेदविभागः । तस्मादृगादिसंज्ञा नास्ति किन्तु मूलवेद इत्येव संज्ञेति भावः । नन्वेवं पञ्चरात्रमृगा-द्याश्चेति कृतयुगे कथमृगादिव्यवहार इति वाच्यम् । सूत्रशाटकन्यायेन भाविभावेन व्यवहारोपपत्तेरिति । युक्त्यन्तरेणापि सर्वमेकविषयकमित्येतमर्थमुपपादयितुमाह-— **नैव चेति** ।। किञ्चेति चार्थः । इन्द्रादिशब्दप्रवृत्तिनिमित्तानां परमैश्वर्यादीनां विष्णोरन्यत्र निरवधिकानामनन्यायत्तानां चाभावादिति भावः । तर्हीन्द्रादिशब्दानां निरर्थकत्वेन पदत्वं न स्यादित्यत आह— **ब्रह्मरुद्रेति** ।। "नामानि सर्वाणि

यमाविशन्ति । इन्द्रं मित्रं वरुणमग्निमाहुरि"त्यादि श्रुतेरिति भावः । नैव चेत्यादि-वाक्यद्वयस्यायं भावः । इन्द्रादिशब्दवाच्यत्वमन्येषां नास्ति किन्तु विष्णोरेव । अतः इन्द्रादिसूक्तात्मको वैश्वानरादिविद्यात्मकश्च सर्वोऽपि वेदो विष्ण्वेकविषयः। अन्यथा अप्रामाण्यप्रसङ्गादिति । सर्वमेकविषयकमित्यर्थं हेत्वन्तरेणाप्युप-पादयितुमाह— **देवतात्वेनेति** ।। कार्तयुगैर्जनैस्तावद्विष्णुर्देवतात्वेनेज्यः । यागो नाम मन्त्रपूर्वं देवतामुद्दिश्य द्रव्यत्यागः । तथाच मन्त्रोच्चारणपूर्वकं विष्णूद्देशकयागे कृते मन्त्राणां विष्णुविषयकत्वं सिद्ध्यति । अन्यविषयकमन्त्रेणान्ययजना-सम्भवादिति भावः । ननु विष्णुरेव यदि देवतात्वेनेज्यस्तर्हि ब्रह्मादियजनाभावप्रसङ्ग इत्याशंक्य किं सर्वथा यजनाभाव आपाद्यते किं वा देवतात्वेनेति विकल्प्याद्यं निराकरोति— **ब्रह्माद्या इति** ।। ब्रह्माद्या मनुनामकाः सर्वा देवताः वक्तृत्वेन भगवत्स्वरूपोपदेष्टृत्वेन गुरुत्वेन पितृत्वेन कारित्वेन करोतीति कारी । नन्दिग्रह्यादि-सूत्रेण ग्रह्यादित्वाण्णिनिः । तस्य भावः कारित्वम् । तेन भगवत्पूजाकारित्वेन च । आदरात् । ल्यब्लोपनिमित्ता पञ्चमी । आदरं विधाय इज्यन्त एव । तथाहि यथा इतरयुगेषु गुर्वादयः न देवतात्वेनेज्यन्ते किन्तु गुरुत्वेनैव । तथा कृतयुगेऽपि ब्रह्मादयो गुरुत्वेनेज्यन्ते । अतः सर्वथा यजनाभावापादनं न युक्तमिति भावः । अत्र ब्रह्माद्या इत्येवोक्ते अपभ्रष्टदेवानामपि प्रतीतिः स्यात् । तेषामपि ब्रह्मादिनामकत्वाद्देवत्वाच्च । तथाच इज्यन्त इत्युक्तमयुक्तं स्यात् ।

अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि ।
देवसंज्ञाश्च दीनत्वात्पूजयेयुर्न तान् क्वचित् ।।

इति तत्पूजानिषेधादित्यत उक्तम् ।। **मनुनामका इति** ।। "मनवो बोधवैशिष्ट्याद्देवा ब्रह्मादयः स्मृता" इति स्मृत्या ब्रह्मादीनां मनुनामकत्वं बोध्यम् । मनुनामका इत्येवोक्ते स्वायम्भुवादिमनूनां प्रतीतिः स्यात् । तथाच ब्रह्मादीनामिज्यत्वासिद्धि-रित्यत उक्तम्— **ब्रह्माद्या इति** ।। देवता इति तु ब्रह्मादीनां केनचिद्रूपेण पूज्यत्वसमर्थनाय । तथाहि— ब्रह्मादयस्तावद्देवत्वात्पूज्याः । "देवान्भावयतानेने"-त्याद्युक्तेः । नच ते देवत्वेन रूपेण पूज्याः । उत्तरत्र निषेधात् । किन्तु वक्तृ-

त्वादिना प्रकारान्तरेणेति बोध्यम् । देवतात्वेन यजनाभाव आपाद्य इति द्वितीयपक्षमिष्टापत्त्या दूषयति— **नतु देवतयेति** ।।

विप्रक्षत्रियविट्शूद्रवर्णभेदेन सर्वशः ।
मनवो मानवाश्चैव सम्पूज्या नैव देवताः ।।

इति स्मृतौ ब्रह्मादिदेवताः नैव सम्पूज्या इति तावदुक्तम् । नच सर्वथा तत्र पूजाभावोऽभिप्रेतः । इज्यन्ते देवताः सर्वा इत्यादि विरोधात् । अतः सविशेषणे हीति न्यायेन देवतात्वेन नैव सम्पूज्या इत्यर्थस्य वक्तव्यत्वादिति भावः । ननु कार्तयुगैर्जनैर्विष्णुरेव देवतात्वेनेज्य इत्युक्तमयुक्तम् । बीजाभावात्प्रयोजनाभावाच्चेत्यत आह— **अनन्ययाजिन इति** ।। तुशब्दो यस्मादित्यर्थे । ये विष्णुं यजन्ति ते कार्तयुगा जनाः । यस्मादनन्ययाजिनः अन्ययजनं विना विष्णुयजनस्वभावाः तस्मात्तं हरिमेव प्राप्नुवन्ति । "मद्भक्ता यान्ति मामपी"ति गीतोक्तेरिति भावः । अत्र अनन्ययाजिन इत्यनेन योग्यताख्यं निमित्तमुक्तम् । णिनिप्रत्ययस्य 'सुप्यजातौ णिनिस्ताच्छील्य' इति सूत्रेण स्वभावार्थत्वावगमात् । स्वभावो योग्यतेत्यनर्थान्तरम् । तदुक्तम्—'स्वभावाख्या योग्यताया हठाख्ये'ति । प्राप्नुवन्तीति फलमुक्तम् । तथाच बीजप्रयोजनसद्भावात् देवतात्वेन चेज्यः स इत्युक्तमुपपन्नमिति भावः । अस्तु सर्वमेकविषयकम् । ततः किमित्यत आह— **तस्मादिति** ।। कृतयुगे सर्वस्यापि वेदस्य विष्ण्वेकविषयकत्वात्किञ्चन व्यपदेशभेदप्रयुक्तं वा प्रतिपाद्यभेदप्रयुक्तं वा पूज्यभेदप्रयुक्तं वा पारावर्यं परापरविद्याभेदः वेदे नास्तीत्यर्थः । तथापि वक्तृभेदाद्वेदे पारावर्यं भविष्यतीत्यत आह— **हरेरिति** ।। यस्मादृगाद्याः अनुव्याख्यान्ताः निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणः श्लोकाः सूत्राण्यनुव्याख्यानानीति श्रुत्युक्तग्रन्थाः तुरगाननात् हरेरुत्थितास्तस्माद्वेदे पारावर्यं नास्तीत्यन्वयः । अस्त्वेवं वेदे पारावर्याभावस्ततः किमित्यत आह— **तस्मादिति** ।। यस्माद्वेदे पारावर्यं न तस्मात्कार्तयुगो जनः सर्वैर्वेदैर्हरिं यजेत्पूजयेज्ज्ञानीयाच्चेत्यर्थः । तथा आचारोऽप्यस्तीत्याह— **तस्मादिति** ।। अत्रापभ्रष्टव्यावृत्त्यै मनव इति । स्वायम्भुवादिमात्रप्रतीतिव्यावृत्त्यै ब्रह्मादय इति । एवं

मरीच्यादिनामकापभ्रष्टव्यावृत्त्यै मानवा इत्युक्तम् । मनुपुत्रमात्रप्रतीतिव्यावृत्त्यै मरीच्याद्या इत्यध्याहार्यम् । मरीच्यादीनां मानवनामकत्वं तु 'मरीच्याद्यास्तु तत्पुत्रा मानवा नामतः स्मृताः' इति स्मृतिप्रसिद्धम् । ननु यदि कृतयुगे सर्ववेदैर्हरिः पूज्यो ज्ञेयश्च तर्हि हरियजनादावशक्तस्य तूष्णींभावः प्राप्त इत्यत आह— **अशक्त इति** ।। सर्ववेदैर्हरियजनादावशक्त इत्यर्थः । कार्तयुगो जनस्त्रिविधः । उत्तममध्यमाधमभेदात् । तत्रोत्तमः सर्वैर्यजेत् । मध्यमो ऋगाद्यैस्तं यजेत् । अधमस्तु पञ्चरात्रेणेत्येवं व्यवस्थितविकल्पसूचनार्थमथवेत्युक्तम् । एवं कृतयुगे हरियजनप्रकारमुक्त्वा त्रेतादौ तमाह— **ऋगाद्यैरेवेति** ।। ऋगाद्यैस्त्रिभिरेवेत्यर्थः ।। **त्रैतैरिति** ।। त्रेतायां भवास्त्रैताः तैरित्यर्थः । कार्तयुगजनापेक्षया वैलक्षण्यसूचनाय भिन्नैरिति जनविशेषणम् । योग्यताभेदवद्भिरित्यर्थः । इदं च ऋगाद्यैरित्यस्यापि विशेषणम् । तत्र विभक्तैरित्यर्थः । तथाच भिन्नैर्योग्यताभेदवद्भिस्त्रैतैर्जनैः स हरिः भिन्नैर्विभक्तैः ऋगाद्यैस्त्रिभिरेवेष्टः पूजितो ज्ञातश्च भवतीति योज्यम् । एवं द्वापरीयैरित्यादि भाष्यमपि योज्यम् । ननु युगचतुष्टये चतुर्विधं यजनादिकमुक्तम् । तत्र किन्निमित्तमिति चेत् । योग्यतावैचित्र्यमिति ब्रूमः । एतच्च भिन्नैरित्यादिना सूचितम् । निमित्तान्तरमप्याह— **एक इति** ।। कृतयुगे हरियजनाद्यङ्गवेदस्याविभक्तत्वं त्रेतायां त्रेधा विभक्तत्वं द्वापरे पञ्चधा विभक्तत्वं कलौ प्रायेणोत्सन्नत्वं चेति निमित्तचतुष्टयेन कृतयुगादौ हरियजनादिचातुर्विध्यमिति भावः ।

ननु यदि त्रेतादियुगे ऋगाद्यैरेवेत्यादिनियमस्तर्हि सर्ववेदैर्हरियजनादौ शक्तानां ब्रह्मादीनां त्रेतादौ तदभावः स्यात् । अन्यथोक्तनियमभङ्गप्रसङ्ग इत्यत आह— **मुख्य इति** ।। कृतयुगे उत्तममध्यमाधमभेदेन हरियजनादित्रैविध्यस्योक्तत्वात्तत्रोत्तमाधिकारिकर्तव्य-धर्मसंग्रहार्थं मुख्य इत्युक्तम्— **वर्तितव्य इति** ।। अन्तर्णीतण्यर्थोऽयम् । प्रवर्तयितव्य इत्यर्थः । कलावपीत्यपिशब्देन त्रेताद्वापरयोः समुच्चयः । एवं तर्हि ऋगाद्यैरेव स त्रैतैरित्यादिनियमभङ्ग इत्यत आह— **त्रेतादाविति** ।। तथाचोक्तनियमस्याशक्तविषयत्वान्नोक्तनियमभङ्ग इति भावः ।। **तदशक्त्येति** ।। मुख्यकार्तयुगधर्मानुष्ठानशक्त्येत्यर्थः ।। **अन्य इति** ।। ऋगाद्यै-

रेवेत्यादिनोक्त इत्यर्थः । कृतयुगे ऋगादिकं सर्वं विष्णुप्रतिपादकमित्युक्तम् । तत्र निमित्तमाह— **कृत इति** ।। चशब्दो यस्मादित्यर्थे । तथाशब्दस्तस्मादित्यर्थे । यस्मात्कृते सर्वेऽपि पुरुषाः भागवताः भगवद्भक्ताः तस्मात्कृते सर्वेऽपि वेदाः भागवताः भगवत्प्रतिपादकाः । तथाच कार्तयुगानां सर्वेषां भगवद्भक्तिरूपनिमित्त-सद्भावात्कृते सर्ववेदेभ्योऽपि भगवत्प्रतीतिर्भवितुमर्हति । यो हि यत्रादरवान् तस्यैव तद्वस्तु विद्यमानमपि स्फुरतीति न्यायादिति भावः । एवं कृतयुगे सर्ववेदानां विष्णुप्रतिपादकत्वे निमित्तमुक्त्वा त्रेतादौ तदभावे निमित्तमाह— **त्रेतायामिति** ।। पुरुषपक्षे विषयशब्देनादरविषयो ग्राह्यः । वेदपक्षे तु तत्प्रतिपाद्यो विषयः ।। **त्रैविद्यतामिति** ।। त्रिविधा विद्या त्रिविद्या । तामधीयते विदन्ति वा त्रैविद्याः । "तदधीते तद्वेदे"ति सूत्रेणाण्प्रत्ययः । उक्थादित्वात् ठक्प्रत्ययस्तु न भवति । "विद्या चानङ्गक्षत्रधर्मत्रिपूर्वे"ति तन्निषेधात् । वेदाध्ययनतदर्थज्ञानवन्तः तेषां भावस्त्रैविद्यता तामित्यर्थः । तदयमर्थः । यस्मात् त्रेतायां पुरुषा भिन्नविषयाः भिन्नभिन्नार्थविषयकादरवन्तः तस्मात् त्रैविद्यतामुक्तरूपां गताः । अतः सर्वे वेदाः भिन्नविषयाः भिन्नभिन्नार्थप्रतिपादका इति । तदनेन त्रेतायां सर्ववेदानां भिन्नभिन्नार्थप्रतिपादकत्वे पुरुषनिष्ठान्यादरो निमित्तमित्युक्तं भवति । नन्वेवं सति त्रेतायुगस्थानामेव जनानां त्रैविद्यतां गता इति विशिष्योक्तिरयुक्ता । त्रिविधवेदा-ध्ययनतदर्थज्ञानवत्त्वरूपत्रैविद्यशब्दप्रवृत्तिनिमित्तस्य कृतयुगस्थभागवतेष्वपि सद्भावादिति चेदुच्यते । त्रेतायुगस्था जनास्त्रिविधाः । मुक्तियोग्यनित्यसंसारितमो-योग्यभेदात् । तत्र मुक्तियोग्याः विष्णोस्सर्वप्रकारेणाधिक्यरूपवेदार्थज्ञानवन्तः । नित्यसंसारिविशेषाः राजसराजसास्तु विष्णोः किञ्चिदुत्तमत्वरूपवेदार्थज्ञानवन्तः । द्वेषिणस्तु ब्रह्मादिसाम्यतद्धीनत्वरूपवेदार्थज्ञानवन्तः । तेषामापाततो "जनितोऽथ विष्णो"रित्यादि वेदेऽभ्यस्तस्यैवार्थस्य प्रतीतेः । तदेवमुक्तप्रकारेण त्रेतायुगस्थजनानां भिन्नभिन्नवेदार्थज्ञानवत्त्वात् त्रैविद्यतां गता इति विशिष्योक्तिर्घटते । नचैवं कार्तयुगा जना इति तत्र तदनुक्तिः । एवं त्रेतायां वेदानां भिन्नभिन्नार्थप्रतिपादकत्वाद्वेदास्त्रिविधतां गत इत्यपि बोध्यम् । एवमुपपादितमर्थमुपसंहरति— **तस्मादिति** ।। यस्मान्मुख्यः

कार्तयुगो धर्मः सर्वदा कर्तव्यः यस्माच्च सर्वे वेदाः भगवद्विषयास्तस्मात्सर्वैः पुरुषैः सर्वदा एकः सनातनो विष्णुरेव सर्ववेदैर्वन्द्यः स्तुत्यः । 'वदि अभिवादन-स्तुत्योरि'त्युक्तेः । स्तुतिपूर्वकं सोपचारैरर्घ्यपाद्यादिषोडशोपचारसहितैर्यज्ञैः पूज्यः । ततोऽदृष्टद्वारा अन्तःकरणशुद्धौ सत्यां ज्ञेयः । श्रोतव्यो मन्तव्यो ध्येयश्चेत्यर्थः । प्रा"गृगाद्यैरेव स त्रैतैर्भिन्नैरिष्टो जनैर्हरिरि"त्यादिना पुरुषशक्त्यल्पत्वापेक्षया त्रेतादौ सर्वप्रकारेण विष्णुसर्वोत्तमत्वप्रतिपादकत्वाभाव उक्तः । त्रेतायां भिन्नविषया इत्यनेन तु भिन्नविषयकादरान्निमित्ताद्भिन्नभिन्नप्रतिपादकत्वमित्युक्तम् । इदानीं कालबलादपि तथेत्याह— **वेदवादा इति** ।। वेदानां वादाः मुखतो वचनानि । "वादो विषयकत्वं च मुखतो वचनं" स्मृतमित्युक्तेः । आपाततो विष्णुप्रति-पादनशक्तय इत्यर्थः ।। **अनुयुगं ह्रसन्तीति** ।। कृतयुगे तत्सामर्थ्यात्सर्ववेदानां विष्णुप्रतिपादनशक्तिराविर्भूता । त्रेतायां तु तत्कालबलाद्विष्णुप्रतिपादनशक्तिर्ह्रसिता भवति । द्वापरादौ तु ततोऽप्याधिक्येन ह्रसिता भवतीत्येवं वेदवादाः अनुयुगं युगशब्देन कृतादिचतुर्युगं ग्राह्यम् । युगस्यानुपूर्व्येणानुयुगम् । अव्ययं विभक्तीत्यादि सूत्रेणानुपूर्व्येऽव्ययीभावः । युगक्रमेणेत्यर्थः । वेदवादाः युगक्रमेण ह्रसन्तीति नः श्रुतिः । अस्मत्कर्तृकं श्रवणमस्तीत्यर्थः । श्रुतमिति पाठे तु भावे क्तप्रत्यय इति बोध्यम् ।। ननूक्तप्रमाणैस्सर्ववेदानां विष्णुपरत्वमुपपाद्य परविद्यात्वं समर्थितम् । तदयुक्तम् । सर्ववेदवद्ग्रन्थान्तरस्यापि विष्णुप्रतिपादकत्वे किं ऋगाद्याः परविद्याः किंवा ग्रन्थान्तरमिति सन्देहापातात् । "यया तदक्षरमधिगम्यत" इत्युक्ताक्षरा-धिगतिकरणत्वस्योभयत्र साम्यादित्यत आह— **वेदैश्चेति** ।। तथाचान्यस्य विष्णु-प्रत्यायकत्वाभावाद्वेदादीनामेव विष्णुप्रत्यायकत्वेन परविद्यात्वनिर्णयोपपत्तिरिति भावः । वेदैश्च पञ्चरात्रैश्चेति करणे तृतीया । चशब्दौ परस्परसमुच्चयार्थौ । पञ्च-रात्रैरिति संहिताभेदाद्बहुवचनम् । भक्त्या यज्ञैरिति हेतौ तृतीया । तथाशब्द उपमायाम् । यथा वेदादिभिर्दृश्यस्तथा भक्त्यादिभिरिति । एवशब्दो वेदैरेवेत्यव-धारणार्थः । चशब्द इतरेतरयोगे । भक्त्यादिमिलितानामेव वेदादीनां ज्ञानकरणत्वात् वेदैरेवेत्यवधारणव्यावर्त्यमाह— **नान्यथा दृश्य इति** ।। वेदादिव्यतिरिक्तग्रन्थेन

रेवेत्यादिनोक्त इत्यर्थः । कृतयुगे ऋगादिकं सर्वं विष्णुप्रतिपादकमित्युक्तम् । तत्र निमित्तमाह— **कृत इति** ।। चशब्दो यस्मादित्यर्थे । तथाशब्दस्तस्मादित्यर्थे । यस्मात्कृते सर्वेऽपि पुरुषाः भागवताः भगवद्भक्ताः तस्मात्कृते सर्वेऽपि वेदाः भागवताः भगवत्प्रतिपादकाः । तथाच कार्तयुगानां सर्वेषां भगवद्भक्तिरूपनिमित्त-सद्भावात्कृते सर्ववेदेभ्योऽपि भगवत्प्रतीतिर्भवितुमर्हति । यो हि यत्रादरवान् तस्यैव तद्वस्तु विद्यमानमपि स्फुरतीति न्यायादिति भावः । एवं कृतयुगे सर्ववेदानां विष्णुप्रतिपादकत्वे निमित्तमुक्त्वा त्रेतादौ तदभावे निमित्तमाह— **त्रेतायामिति** ।। पुरुषपक्षे विषयशब्देनादरविषयो ग्राह्यः । वेदपक्षे तु तत्प्रतिपाद्यो विषयः ।। **त्रैविद्यतामिति** ।। त्रिविधा विद्या त्रिविद्या । तामधीयते विदन्ति वा त्रैविद्याः । "तदधीते तद्वेदे"ति सूत्रेणाण्प्रत्ययः । उक्थादित्वात् ठक्प्रत्ययस्तु न भवति । "विद्या चानङ्गक्षत्रधर्मत्रिपूर्वे"ति तन्निषेधात् । वेदाध्ययनतदर्थज्ञानवन्तः तेषां भावस्त्रैविद्यता तामित्यर्थः । तदयमर्थः । यस्मात् त्रेतायां पुरुषा भिन्नविषयाः भिन्नभिन्नार्थविषयकादरवन्तः तस्मात् त्रैविद्यतामुक्तरूपां गताः । अतः सर्वे वेदाः भिन्नविषयाः भिन्नभिन्नार्थप्रतिपादका इति । तदनेन त्रेतायां सर्ववेदानां भिन्नभिन्ना-र्थप्रतिपादकत्वे पुरुषनिष्ठान्यादरो निमित्तमित्युक्तं भवति । नन्वेवं सति त्रेतायुगस्थानामेव जनानां त्रैविद्यतां गता इति विशिष्योक्तिरयुक्ता । त्रिविधवेदा-ध्ययनतदर्थज्ञानवत्त्वरूपत्रैविद्यशब्दप्रवृत्तिनिमित्तस्य कृतयुगस्थभागवतेष्वपि सद्भावादिति चेदुच्यते । त्रेतायुगस्था जनास्त्रिविधाः । मुक्तियोग्यनित्यसंसारितमो-योग्यभेदात् । तत्र मुक्तियोग्याः विष्णोस्सर्वप्रकारेणाधिक्यरूपवेदार्थज्ञानवन्तः । नित्यसंसारिविशेषाः राजसराजसास्तु विष्णोः किञ्चिदुत्तमत्वरूपवेदार्थज्ञानवन्तः । द्वेषिणस्तु ब्रह्मादिसाम्यतद्धीनत्वरूपवेदार्थज्ञानवन्तः । तेषामापाततो "जनितोऽथ विष्णो"रित्यादि वेदेऽभ्यस्तस्यैवार्थस्य प्रतीतेः । तदेवमुक्तप्रकारेण त्रेतायुगस्थजनानां भिन्नभिन्नवेदार्थज्ञानवत्त्वात् त्रैविद्यतां गता इति विशिष्योक्तिर्घटते । नचैवं कार्तयुगा जना इति तत्र तदनुक्तिः । एवं त्रेतायां वेदानां भिन्नभिन्नार्थप्रतिपादकत्वाद्वेदास्त्रिविधतां गत इत्यपि बोध्यम् । एवमुपपादितमर्थमुपसंहरति— **तस्मादिति** ।। यस्मान्मुख्यः

कार्तयुगो धर्मः सर्वदा कर्तव्यः यस्माच्च सर्वे वेदाः भगवद्विषयास्तस्मात्सर्वैः पुरुषैः सर्वदा एकः सनातनो विष्णुरेव सर्ववेदैर्वन्द्यः स्तुत्यः । 'वदि अभिवादन-स्तुत्योरि'त्युक्तेः । स्तुतिपूर्वकं सोपचारैरर्घ्यपाद्यादिषोडशोपचारसहितैर्यज्ञैः पूज्यः। ततोऽदृष्टद्वारा अन्तःकरणशुद्धौ सत्यां ज्ञेयः । श्रोतव्यो मन्तव्यो ध्येयश्चेत्यर्थः । प्रा"गृगाद्यैरेव स त्रैतैर्भिन्नैरिष्टो जनैर्हरिरि"त्यादिना पुरुषशक्त्यल्पत्वापेक्षया त्रेतादौ सर्वप्रकारेण विष्णुसर्वोत्तमत्वप्रतिपादकत्वाभाव उक्तः । त्रेतायां भिन्नविषया इत्यनेन तु भिन्नविषयकादरान्निमित्ताद्भिन्नभिन्नप्रतिपादकत्वमित्युक्तम् । इदानीं कालबलादपि तथेत्याह— **वेदवादा इति** ।। वेदानां वादाः मुखतो वचनानि । "वादो विषयकत्वं च मुखतो वचनं" स्मृतमित्युक्तेः । आपाततो विष्णुप्रति-पादनशक्तय इत्यर्थः ।। **अनुयुगं ह्रसन्तीति** ।। कृतयुगे तत्सामर्थ्यात्सर्ववेदानां विष्णुप्रतिपादनशक्तिराविर्भूता । त्रेतायां तु तत्कालबलाद्विष्णुप्रतिपादनशक्तिर्ह्रसिता भवति । द्वापरादौ तु ततोऽप्याधिक्येन ह्रसिता भवतीत्येवं वेदवादाः अनुयुगं युगशब्देन कृतादिचतुर्युगं ग्राह्यम् । युगस्यानुपूर्व्येणानुयुगम् । अव्ययं विभक्तीत्यादि सूत्रेणानुपूर्व्येऽव्ययीभावः । युगक्रमेणेत्यर्थः । वेदवादाः युगक्रमेण ह्रसन्तीति नः श्रुतिः । अस्मत्कर्तृकं श्रवणमस्तीत्यर्थः । श्रुतमिति पाठे तु भावे क्तप्रत्यय इति बोध्यम् ।। ननूक्तप्रमाणैस्सर्ववेदानां विष्णुपरत्वमुपपाद्य परविद्यात्वं समर्थितम्। तदयुक्तम् । सर्ववेदवद्ग्रन्थान्तरस्यापि विष्णुप्रतिपादकत्वे किं ऋगाद्याः परविद्याः किंवा ग्रन्थान्तरमिति सन्देहापातात् । "यया तदक्षरमधिगम्यत" इत्युक्ताक्षरा-धिगतिकरणत्वस्योभयत्र साम्यादित्यत आह— **वेदैश्चेति** ।। तथाचान्यस्य विष्णु-प्रत्यायकत्वाभावाद्वेदादीनामेव विष्णुप्रत्यायकत्वेन परविद्यात्वनिर्णयोपपत्तिरिति भावः । वेदैश्च पञ्चरात्रैश्चेति करणे तृतीया । चशब्दौ परस्परसमुच्चयार्थौ । पञ्च-रात्रैरिति संहिताभेदाद्बहुवचनम् । भक्त्या यज्ञैरिति हेतौ तृतीया । तथाशब्द उपमायाम् । यथा वेदादिभिर्दृश्यस्तथा भक्त्यादिभिरिति । एवशब्दो वेदैरेवेत्यव-धारणार्थः । चशब्द इतरेतरयोगे । भक्त्यादिमिलितानामेव वेदादीनां ज्ञानकरणत्वात् वेदैरेवेत्यवधारणव्यावर्त्यमाह— **नान्यथा दृश्य इति** ।। वेदादिव्यतिरिक्तग्रन्थेन

भक्त्याद्यन्यसाधनेन च ज्ञेयो नेत्यर्थः ।।,स्यादेतत् । यदि परापरविद्याविभाग-कर्तुरङ्गिरसो मुनेः ऋगादीनामेवावस्थाभेदेन परविद्यात्वमपरविद्यात्वं चेत्यत्र तात्पर्यं स्यात् । तदेव कुत इत्याशंकां परिहरन्नेवापव्याख्यानद्वये दोषान्तरं सूचयति— **अत्रापीति** ।। यदि ऋगाद्या एव परविद्या अपरविद्याश्चेत्यत्र भगवतो मुनेस्तात्पर्यं न स्यात्तर्ह्युत्तरत्र कर्मविषयाणां ब्रह्मविषयाणां च मन्त्राणामुप-न्यासोऽनुपपन्नः स्यात् । द्वे विद्ये वेदितव्ये इति ये द्वे विद्ये प्रतिज्ञाते तयोरेवाग्रे वक्तव्यत्वात् । नचैवम् । अतः कर्मब्रह्मविषयाणां मन्त्राणामेव परापरविद्यात्व-सिद्धिः । अनेनोपनिषदादेः परविद्यात्वं निरस्तम् । उत्तरग्रन्थपर्यालोचनया मन्त्राणामेव परविद्यात्वात् । तेषां चोपनिषदादिभिर्भिन्नत्वादिति भावः ।। **कर्म-विषयामिति** ।। अत्र मन्त्रात्मिकामेवेति ग्राह्यम् । आथर्वणानेवेत्येवशब्दस्य मन्त्रानेवेत्यन्वयः । तेन मन्त्राणामेव कर्मविद्यात्वं ब्रह्मविद्यात्वं च । अतो मन्त्रेष्वेव परापरविभागो नत्वन्यथेति सूचितम् । इतोऽपि ऋगादय एव परविद्याः नोपनिषदादिकमित्याह— **चतुर्वेदेति** ।। चतुर्वेदाध्ययनव्याख्यानाद्यङ्गसंस्कार-वतामित्यर्थः । स्वस्ववेदाध्ययनाद्यङ्गसंस्कारवतामिति तु परमार्थः । विद्याया-मित्यस्य सर्ववेदगतब्रह्मविद्यायामित्यर्थः । अतः ऋगादीनां ब्रह्मविद्यानां चैकाधिकारिकत्वात्तेषामेव परविद्यात्वमिति शेषः । अयं भावः—अङ्गिरसा तावदुपसंहारे ऋगादीनां ब्रह्मविद्यायाश्चैकाधिकारिकत्वमुक्तम् । तच्च ऋगादीनामेव ब्रह्मविद्यात्वरूपपरविद्यात्वे सम्भवति । नान्यथा । विषयभेदे अधिकार्यैक्यायोगात् । अतस्तदन्यथानुपपत्त्या ऋगादीनां परविद्यात्वे तात्पर्यमवगम्यत इति । किं तदधिकार्यैक्यप्रतिपादकवाक्यमित्यत आह— **तेषामिति** ।। ननु शिरोव्रतमित्यथर्व-वेदसंस्कार उक्तः । तेनाथर्ववेदसंस्कारवतामथर्ववेदरूपब्रह्मविद्यायामधिकरः सिद्ध्यति । नतु स्वस्ववेदाध्ययनाद्यङ्गसंस्कारवतां सर्ववेदगतब्रह्मविद्यास्वधिकार इत्यत आह— **शिरोव्रतमित्यु-पलक्षणत्वेनेति** ।। उपलक्षकत्वसमर्थनाय स्वस्व-वेदाध्ययनाद्यङ्गसंस्कारस्यैव सर्वविद्याधिकारत्वे प्रमाणमाह— **स्ववेदेति** ।।

## उपनिषत्

**यत् तदद्रेश्यमग्राह्यमगोत्रमवर्ण मचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः ।। ६ ।।**

**व्या.टी.**——अक्षरस्वरूपं निरूपयति— **यत्तदित्यादिना** ।। अद्रेश्यमदृश्यम् । विभुं समर्थम् । अक्षरस्यादृश्यत्वे कथं यया तदक्षरमधिगम्यत इत्युक्तिरित्यत आह— **यद्भूतयोनिं परिपश्यन्ति धीरा इति** ।। अधीराणामदृश्यमित्यर्थत्वान्न विरोध इत्यर्थः ।। ६ ।।

**ध.टी.**——यत्तत्पूर्वोक्तमक्षरं अद्रेश्यञ्च लक्षणाच्चक्षुषा अदृश्यम् । अग्राह्यं हस्तेन । अगोत्रं विश्वामित्रादिगोत्रशून्यम् । अवर्णं प्राकृतवर्णशून्यम् । अचक्षुःश्रोत्रं तदुपलक्षितप्राकृतज्ञानेन्द्रियशून्यम् । अपाणिपादं तदुपलक्षितप्राकृतकर्मेन्द्रियशून्यम् । नित्यं स्वरूपतो देहतश्चाविनाशि । सर्वगतमित्यनेन पौनरुक्त्यपरिहाराय विभुं समर्थमिति व्याख्यातम् । सर्वगतं सर्वत्र व्याप्तम् । सुसूक्ष्मं जीवादप्यतिशयेन सूक्ष्मम् । अव्ययं गुणतो नाशशून्यम् । यद्भूतयोनिं परिपश्यन्ति धीराः तदक्षरमित्यन्वयः ।। ६ ।।

**न.टी.**——अक्षरस्वरूपं निरूपयति— **यत्तदित्यादिना** ।। अद्रेश्यमदृश्यम् । विभुं समर्थम् । अक्षरस्यादृश्यत्वे कथं यया तदक्षरमधिगम्यत इत्युक्तिरित्यत आह— **यद्भूतयोनिं परिपश्यन्ति धीरा इति** ।। अधीराणामदृश्यमित्यर्थत्वान्न विरोध इत्यर्थः । यद्भतयोनिमित्यक्षरस्य द्रष्टृत्वमुक्तम् ।। ६ ।।

**रा.खं.**——कीदृशं तदक्षरमित्यतस्तन्महिमानमाह— **यत्तदिति** ।। यदक्षरमद्रेश्यं दृष्ट्युपलक्षितबाह्येन्द्रियाविषयः, अग्राह्यं मनसोऽप्यविषयः। साकल्येनेति वा, अयोग्यैरिति वा योज्यम् । यद्वा, दृश्यादन्यददृश्यम् । ग्राह्यादन्यदग्राह्यमित्यर्थः।

न विद्यते गोत्रं वर्णो वा यस्य तदगोत्रम् अवर्णम् । अचक्षुःश्रोत्रमित्यादेः प्राकृतचक्षुरादिशून्यमित्यर्थः । नित्यं देहतोऽपि नाशरहितम् । विभुं समर्थम् । सर्वगतं सर्वव्यापि । सर्वगतत्वे प्रतिहतिः स्यादित्यत आह— **सुसूक्ष्ममिति** ।। अत्यन्ताप्रतिघम् । 'सूक्ष्मं तु तदर्हत्वात्' इत्युक्तेः । तत् त्वया पृष्टमक्षरमिति पूर्वं श्रुततत्पदस्यान्वयः । अद्रेश्यमित्युक्तिर्न सर्वथेति भावेनाक्षरस्य गुणान्तरमाह— **तदव्ययमित्यादिना** ।। यदक्षरं भूतानां प्राणिनां योनिं कारणं धीरा ज्ञानिनः परिपश्यन्ति अव्ययं शश्वदेकप्रकारभूतं, तत् प्रागुक्तमक्षरमित्यर्थः । तथाच सूत्रं 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति ।। ६ ।।

**स.टी.**——यया तदक्षरमधिगम्यते इत्युक्तं अक्षरस्वरूपं निरूपयति— **यत्तदद्रेश्यमिति** ।। अद्रेश्यमदृश्यं निरुक्तत्वादृकारस्य रेफभावः । विभुं समर्थं विविधोऽभवदिति विभुम् । अत एव गीताभाष्ये विविधमासीदिति विभुः । तथाहि वारुणशाखायां विभुं प्रभुं प्रथमं मेहनावत इति स ह्येव प्राभवद्विविधोऽभवदिति इत्यभाषत । अगोत्रं गोत्राद्यत्यन्ताभाववत् । अदृश्यत्वे यया तदक्षरमधिगम्यत इत्युक्तिविरोधः। अत आह— **यद्भूतेति** ।। अधीराणामदृश्यमित्यर्थान्न विरोधः ।। ६ ।।

**श्री.टी.**——प्रसिद्धाकारादेरत्रोक्ताक्षरत्वशंकानिरासायाक्षरस्वरूपं निरूपयति ।। **यत्तदद्रेश्यमित्यादिना** ।। यत्तत्पूर्वोक्तमक्षरं अद्रेश्यमदृश्यं अग्राह्यं केनापि गृहीतुमशक्यं, अगोत्रं भारद्वाजादिप्रसिद्धगोत्रशून्यं अवर्णं प्राकृतवर्णशून्यं अचक्षुःश्रोत्रं तदुपलक्षितप्राकृतज्ञानेन्द्रियरहितं, अपाणिपादं तदुपलक्षितप्राकृतकर्मेन्द्रियरहितं, अपाणिपादं पाणिपादाद्युपलक्षितप्राकृतशरीररहितमित्यर्थः । नित्यं स्वरूपतो देहतश्चाविनाशि । विभुं समर्थम् । सर्वगतं सर्वत्र व्याप्तम् । सुसूक्ष्मं जीवादप्यतिशयेन सूक्ष्मम् । अव्ययं गुणतो नाशशून्यम् । नन्वेवमक्षरस्यादृश्यत्वे "यया तदक्षरमधिगम्यत" इति दृश्यत्वोक्तिर्विरुद्धा स्यादित्यत आह— **यद्भूतयोनिमिति** ।। भूतयोनिं जगत्कारणं यदक्षरं तद्धीराः परिपश्यन्ति । अनेनाधीराणामदृश्यमित्यर्थत्वान्न विरोध इति भावः ।। ६ ।।

**उ.टी.**—यदिदं अथ परा यया तदक्षरमधिगम्यत इति ऋगादिवेदानामेव विष्णुबोधकत्वमुक्तं तत्समर्थयन्नेवाक्षरमहिमानमाह— **यत्तदिति** ।। अत्र मन्त्रे यच्छब्दद्वयं यस्मादित्यर्थे आद्यस्तच्छब्दः प्रकृताक्षरपरामर्शकः । तस्मादित्यर्थकश्च । द्वितीयस्तच्छब्दः प्रसिद्धार्थकः । तृतीयस्त्वक्षरपरामर्शकः । तथाचेयं योजना— यत् यस्मात् तत् अक्षरं अद्रेश्यमदृश्यं प्रत्यक्षावेद्यम् । अग्राह्यं अनुमानपौरुषेयागमावेद्यम् । अगोत्रं यमधिकृत्य प्रवराध्याये प्रवरा उच्यन्ते तद्गोत्रमित्युच्यते, तद्रहितम् । अवर्णं ब्राह्मणादिवर्णरहितम् । प्राकृतभौतिकशुक्लादिवर्णरहितमिति वा । अचक्षुःश्रोत्रं जडज्ञानेन्द्रियरहितम् । अपाणिपादं जडकर्मेन्द्रियरहितमिति । तत् प्रसिद्धम् । यद्यस्माच्च धीराः धैर्यवन्तः । तत् अक्षरं नित्यं आद्यन्तशून्यं विभुं सर्वेश्वरं सर्वगतं व्याप्तं सुसूक्ष्मं अत्यन्ताणुरूपं अव्ययं व्येति विविधं विकारं प्राप्नोतीति व्ययम् । तस्मादन्यदव्ययम् । जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यतीति वार्ष्यायणिवाक्योक्तषड्भावविकाररहितम् । उपादानधर्मिणो धर्म्यन्तरात्मना परिवर्तो जनिः । देहाद्यधिष्ठानेनावस्थानमस्तित्वम् । अवयवोपचयो वृद्धिः । धर्मलक्षणावस्थानामन्यथात्वं विपरिणामः । अवयवापचयोऽपक्षयः । स्वोपादानमात्रत्वापत्तिर्विनाशः । एते च विकाराः भावस्यैवेति षड्भावविकारा इति प्रसिद्धिरिति बोध्यम् । नच नित्यमित्यनेनांशेन पुनरुक्तिः । तत्र स्वरूपलाभतन्नाशयोर्निषेधात् । अत्र तु भावविकाररूपोत्पत्तिविनाशौ निषिध्येते इति नोक्तदोषः । भूतयोनिं सर्वभूतोत्पत्तिस्थितिलयकारणम् । परिपश्यन्ति जानन्ति । तस्मात्तदक्षरं ऋगादिपरविद्ययैवाधिगम्यत इति युक्तमित्यर्थः । अत्र सामान्यसिद्धिपरिशेषाभ्यामक्षरस्यागमैकवेद्यत्वं समर्थितम् । तथाहि—धीरास्तावदक्षरं नित्यत्वादिना जानन्ति। तत्र ज्ञानं न प्रत्यक्षजन्यम् । अक्षरस्यातीन्द्रियत्वात् । तदाह— **अदृश्यमिति** ।। नाप्यनुमानेन वा पौरुषेयागमेन वा जन्यम् । अक्षरस्याग्राह्यत्वात् । तदप्याह— **अग्राह्यमिति** ।। किन्तु ऋगादिपरविद्याजन्यम् । तदयं प्रयोगः— अक्षरज्ञानं परविद्याजन्यम् । तदन्याजन्यत्वे सति जन्यत्वादिति बोध्यम् । अत्र विभुमिति पुल्लिङ्गसमर्थनाय नित्यमित्यादिपदानि द्वितीयान्तत्वेन योजितानीति ज्ञेयम् ।। ६ ।।

**आ.टी.**——अविद्याप्रतिपाद्यमक्षरं कीदृशमित्यतस्तत्स्वरूपमाह— **यत्तदित्यादिना** ।। धीषु रमन्त इति धीराः ज्ञानिनः भक्त्या तत्प्रसादेन यद्ब्रह्म परिपश्यन्ति सम्यक्पश्यन्ति । तदेवादृश्यत्वादिगुणकमक्षरमित्यर्थः । अद्रेश्यमदृश्यम् । अग्राह्यं गृहीतुमशक्यम् । अगोत्रं गोत्रहीनम् । अवर्णं शुक्लादि, ब्राह्मणादिवर्णहीनम् । अचक्षुःश्रोत्रं प्राकृतचक्षुःश्रोत्रपाणिपादादिहीनम् । नित्यं चतुर्विधनाशशून्यम् । विभुं समर्थम् । सर्वगतं व्याप्तम् । सुसूक्ष्मं मनआद्यगोचरम् । तदेव गुणादिह्रासहीनमव्ययम् । यच्च भूतयोनिं स्वदेहादेव जीवजातोत्पादकं पश्यन्ति । तदेव प्रसादाभावे जीवप्रयत्नेन दर्शनाद्यविषय इत्यर्थः ।। ६ ।।

**गू.टी.**——अक्षरस्वरूपमाह— **यत्तदित्यादिना** ।। यत् ज्ञानरूपं 'इण् गतौ' इति धातोः । ततत्वात् तत् । अद्रेश्यमदृश्यम् । हस्तादिभिर्गृहीतुमशक्यमग्राह्यम् । ऋषिकुलेऽज्ञातत्वादगोत्रम् । गोत्रा भूमिस्तच्छून्यो निराश्रय इत्यर्थ इति वा । ब्रह्मत्वादिभिः शुक्लादिभिर्वा शून्यमवर्णम् । चक्षुः श्रोत्रपाणिपादादिरहितम् । नित्यं स्वरूपतः । विभुं समर्थम् । विविधं भवतीति विभुः तं वा । सर्वगतं सर्वव्याप्तम् । अदृश्यत्वे हेतुमाह— **सुसूक्ष्मम्** ।। अत्यन्तसूक्ष्ममिति । अव्ययं गुणादितोऽपि व्ययरहितम् । भूतानां योनिः स्वदेहादेवोत्पादकः । तं धीराः वेदार्थश्रवणमननरूपधीराः यत् यस्मात् श्रीहरिप्रसादात् पश्यन्ति साक्षात्कुर्वन्ति तदक्षरमिति पूर्वेणान्वयः । पूर्वमधीरानपेक्ष्यादृश्यत्वमतो न विरोधः । चिदानन्दरूपदेहेन्द्रियादिमत्त्वेऽपि प्राकृतदेहादिराहित्यात् अचक्षुरित्यादि ।। ६ ।।

## उपनिषत्

**यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात्केशलोमानि**
**तथाऽक्षरात्सम्भवतीह विश्वम् ।। ७ ।।**

**व्या.टी.**——यद्भूतयोनिमित्यक्षरस्य स्रष्टृत्वमुक्तम् । तत्र संहर्तृत्वस्यानुक्तत्वादन्यत्संहर्त्रिति प्रतीयते । तां निवारयन् स्रष्टृत्वं संहर्तृत्वप्रकारं सदृष्टान्तमाह— **यथोर्णनाभिः सृजते गृह्णते चेति** ।। किमनुसृत्य सृजतीत्यतो दृष्टान्तेनाह— **यथा पृथिव्यामोषधयः सम्भवन्तीति** ।। यथा पृथिवी शाल्यादिनानाबीजानि अपेक्ष्य तत्तदंकुरादीन् जनयति । तथा चेतनानां विविधकर्माण्यपेक्ष्य तत्तत्सृजतीत्यर्थः । तत्तत्स्रष्टृत्वं च न कुलालादिवत् क्लेशेनेति दृष्टान्तेनाह— **यथा सत इति** ।। सतश्चेतनाधिष्ठितात्पुरुषाद्देहाद्यथा केशलोमानि अनायासेन भवन्ति तथा विश्वं जगदपि अनायासेनाक्षरादिह सम्भवतीत्यर्थः ।। ७ ।।

**ध.टी.**——**यथा पृथिव्यामोषधयः सम्भवन्तीति** ।। **केशलोमानीति** ।। शिरोरुहाः केशाः देहजानि लोमानीत्यर्थः ।। ७ ।।

**वामन.टी.**——यत्तत्परविद्यावेद्यमक्षरं यद्भूतयोनिमिति सर्वकारणमुक्तम् । तद्दृष्टान्ततोऽपि व्याचष्टे— **यथोर्णनाभिरिति** ।। ७ ।।

**न.टी.**——तत्र संहर्तृत्वस्यानुक्तत्वादन्यसंहर्त्रिति प्रतीयते, तन्निवारयन् स्रष्टृत्वं संहर्तृत्वप्रकारं सदृष्टान्तमाह— **यथोर्णनाभिः सृजते गृह्णते चेति** ।। किमनुसृत्य सृजतीत्यतो दृष्टान्तेनाह— **यथा पृथिव्यामोषधयः सम्भवन्तीति** ।। यथा पृथिवी शल्यादिनानाबीजान्यपेक्ष्य तत्तदंकुरान् जनयति तथा चेतनानां विविधकर्माण्यनुसृत्य तत्तत्सृजतीत्यर्थः । तत्तत्स्रष्टृत्वं च न कुलालवत्क्लेशेनेति दृष्टान्तेनाह— **यथा सत इति** ।। सतश्चेतनाधिष्ठितात् पुरुषाद्देहात् । यथा केशलोमानि अनायासेन भवन्ति तथा विश्वं जगदपि अनायासेनाक्षरादिह सम्भवतीत्यर्थः ।। ७ ।।

**रा.खं.**——यद्भूतयोनिमित्युक्तभूतकारणत्वं संहर्तृत्वस्योपलक्षणमित्युपेत्य तदुभयप्रकारं दृष्टान्तपूर्वं व्यनक्ति— **यथेति** ।। ऊर्णनाभिर्जन्तुविशेषस्स्वोपभुक्तवस्तूनि तन्त्वात्मना स्वोदरे परिणतानि सृजते बहिर्निष्कासयति । गृह्णते

गृह्णाति च । तन्त्वाद्याकारतया बहिर्निष्कासितं पुनरन्तस्स्वोदरे गृह्णाति । तथा विश्वं लये निगीर्णं सत् अक्षराद्बहिर्देशे सम्भवतीत्यर्थः । नतु विश्वात्मना परिणममानत्वं, नवा तदात्मना विवर्तत्वं च भूतयोनित्वमित्यर्थः । एतच्चोपलक्षणम् । ऊर्णनाभिना तन्तुराशिरिव संह्रियते चेत्यपि ध्येयम् । नानाविधसृष्टौ वैषम्यादिदोष किन्नेत्यत उक्तम्— **यथा पृथिव्यामिति** ।। यथा पृथिवी शाल्यादिनानाबीजान्यपेक्ष्य नानाविधांकुरान् जनयति तथा जीवानां नानाविधकर्माण्यनुसृत्य नानाविधजीवान् सृजतीत्यर्थः । तथाच सूत्रं 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति । ननु अक्षरस्य विश्वसृष्ट्यादिना फलसत्त्वेऽपूर्णताप्राप्तिः । तदसत्त्वे प्रेक्षावतस्तत्र प्रवृत्त्ययोग इत्यत उक्तम्— **यथा सत इति** ।। यथा सतश्चेतनाधिष्ठितात् पुरुषाद्देहात् केशलोमान्यनायासेन भवन्ति तथाऽक्षरादनायासेन विश्वं सम्भवतीत्यर्थः । अत्यायाससाध्ये हि फलापेक्षा । अनायाससाध्येऽङ्गुलिचालनादौ लोके प्रेक्षावतामपि न फलापेक्षाऽस्तीति भावः । शिरोरुहाः केशाः, देहजानि लोमानीति विवेकः ।। ७ ।।

**स.टी.**——यद्भूतयोनिमित्येतत्संहर्तृत्वस्योपलक्षणमित्यभिप्रेत्य दृष्टान्तेनोपपादयति-— **यथोर्णनाभिरिति** ।। सृजते सृजति । गृह्णते गृह्णीते एकवचनस्य बहुवचनादेशः । तिङां तिङ् इत्युक्तेः । किमनुसृत्य सृजतीत्यतो दृष्टान्तमाह— **यथा पृथिव्यामिति** ।। यथा पृथिवी शाल्यादिनानाबीजान्यपेक्ष्य तत्तदंकुराञ्जनयति । तथा चेतनानां त्रिविधकर्माण्यनुसृत्य तत्तत्सृजतीत्यर्थः । तत्तत्सृष्टत्वं च कुलालादिवन्नायासेनेत्याह— **यथा सत इति** ।। यथा सतः चेतनाधिष्ठितात्पुरुषाद्देहात्केशलोमान्यनायासेन भवन्ति तथा विश्वं जगदपि अक्षरादनायासेन सम्भवतीत्यर्थः । इदं च यत्तदद्रेश्यमित्यादिप्रतिपादितमदृश्यत्वादिकं यथोर्णनाभिरित्यादिनोपपादितं जगत्कर्तृत्वादिकं च विष्णोरेव । यया तदक्षरमधिगम्यत इति अदृश्यत्वादिगुणकस्य परविद्याविषयत्वोक्तेः । परविद्याविषयत्वं च मोक्षसाधनज्ञानविषयत्वम् । तच्च "तमेवं विद्वानमृत इह भवति" "तत्कर्म हरितोषं यदि"त्यादिना विष्णोरेवावगमि । तथाच सूत्रम् "अदृश्यत्वादिगुणको धर्मोक्तेरि"ति । तथापि "यथा पृथिव्यामोषधय"

इति दृष्टान्तोक्त्या परिणामिनी जगत्प्रकृतिरेवात्र प्रतिपाद्यास्तु । नैष दोषः । परविद्याविषयत्वलक्षणसिद्धान्तसाधकेन हेतुनैतत्प्रतिपाद्यतानिरासात् ।। ७ ।।

**श्री.टी.**—यद्भूतयोनिमित्यक्षरस्य भूतस्रष्टृत्वमुक्तं, तथाच संहर्तृत्वं तदन्यस्यैवेति प्राप्नोति लोके पितुरन्यस्यैव मारकत्वदर्शनादित्याशंक्य विष्णौ लोकपितृवैलक्षण्याद्युक्तं तस्य संहर्तृत्वमिति भावेन स्रष्टृत्वं संहर्तृत्वं च सदृष्टान्तमुपपादयति— **यथेति** ।। स दृष्टान्तो यथा । ऊर्णनाभिः स्वभुक्तमन्नादिकं तन्त्वाद्याकारेण सृजते पुनर्गृह्णते । संहरति चेति द्रष्टव्यम् । स्रष्टृत्वं पुनः सदृष्टान्तमुपपादयति— **यथा पृथिव्यामिति** ।। कुलालवन्नाक्षरस्य क्लेशेन स्रष्टृत्वमिति सदृष्टान्तमाह— **यथासत इति** ।। पुरुषाद्देहात् केशलोमानि अनायासेन भवन्तीत्यर्थः । मृतदेहाल्लोमाद्यनुत्पत्तेः सत इत्युक्तम् । चेतनाधिष्ठितादित्यर्थः ।। ७ ।।

**उ.टी.**—भूतयोनिमित्युक्तं सर्वोत्पत्तिकारणत्वं दृष्टान्तपूर्वकमाह— **यथेति** ।। यथोर्णनाभ्युपभुक्तान्नपरिणततच्छरीरधातवस्तन्त्वाकारेण परिणता भवन्ति । तत्रोर्णनाभिः कर्ता भवति । तथा महाप्रलये परमेश्वरेण निगीर्णं महदादिकार्यं तच्छरीररूपकप्रधानतां गच्छति । तत्र प्रधानं पुनर्महदाद्याकारेण परिणमते तत्रेश्वरः कर्ता भवतीत्याशयेनोर्णनाभिदृष्टान्तोपादानम् । उत्पद्यमानं च कार्यं तदाश्रिततयैवोत्पद्यते । नतु घटादिवदन्याश्रिततयेत्यभिप्रेत्य द्वितीयदृष्टान्त उक्तः । न केवलमीश्वरः कुलालादिवत्कर्ता । अपितु यथा जीवो देहाधिष्ठातृत्वेन केशादिकर्ता तथेश्वरोऽधिष्ठातृत्वेनापि कर्तेति भावेनोक्तम्— **यथा सत इति** ।। यद्वा कुलालवत्क्लेशेन स्रष्टृत्वं नास्तीति भावेनोक्तम्— **यथा सत इति** ।। ततश्चायमक्षरार्थः । यथोर्णनाभिः कीटविशेषः ऊर्णरूपं स्वकार्यं सृजते । आत्मनेपदं छान्दसम् । उत्पादयति । गृह्णते । अत्र बहुवचनं छान्दसम् । गृह्णाति विनाशयतीति यावत् । तथाक्षरमपि विश्वं सृजति गृह्णाति च । यथौषधयः पृथिव्यां तदाश्रयेण सम्भवन्ति तथा विश्वमपि इहाक्षरे सम्भवन्ति । उत्पन्नं सत् तदाश्रितमेव तिष्ठतीति यावत् । यथा सतो जीवतः मृतव्यावृत्त्यर्थमिदम् । पुरुषात्केशलोमानि शिरोरुहाः केशाः ।

“कचः केशः शिरोरुह” इति कोशात् । तनूरुहाणि लोमानि । तनूरुहं रोमलोमेति कोशात् । भवन्ति । तथाक्षराद्विश्वमपि सम्भवतीति ।। ७ ।।

**आ.टी.——**भूतयोनिमिति ब्रह्मणः स्रष्टृत्वमुक्तम् । संहर्तृत्वं चास्तीति तदुभयं दृष्टान्तेनोपपादयति— **यथोर्णनाभिरिति** ।। ऊर्णनाभिः कुविन्दोपपदकीटविशेषः । तन्तून् सृजते गृह्णते नाशयति च । तथाक्षरं भूतसृष्ट्यादिकं करोति । किमनुसृत्य सृजत इत्यतो दृष्टान्तेनाह— **यथेति** ।। यथा पृथिवी शल्यादिबीजान्यपेक्ष्य स्वाधारेणैव तदंकुरान् जनयति तथा चेतनानां विविधकर्माण्यपेक्ष्य स्वाधारेण प्रकृत्यादीन्युपादानीकृत्य ब्रह्मादिदेहान्सृजतीत्यर्थः । तत्स्रष्टृत्वं कुलालादिवन्न क्लेशेनेत्याह— **यथेति** ।। सतश्चेतनाधिष्ठितात्पुरुषाद्देहात्केशलोमान्यनायासेन भवन्ति तथा विश्वं जगदप्यनायासेनाक्षरादिह सम्भवतीत्यर्थः ।। ७ ।।

**गू.टी.——**यद्भूतयोनिमित्यक्षरस्य स्रष्टृत्वमुक्तं तत्र संहर्तृत्वस्यानुक्तत्वादन्यत्संहर्त्रिति प्रतीयते । तां निवारयन् स्रष्टृत्वसंहर्तृत्वप्रकारं सदृष्टान्तमाह— **यथेति** ।। व्याध इव मशकादिबन्धनाय गवाक्षजालकर्ता कीटविशेष ऊर्णनाभिः यथा स्वभुक्तमन्नं ऊर्णनामकतन्त्वाकारेण स्वनाभ्यां स्थितं गुदद्वारेण सृजते बहिः क्षिपति गृह्णाति पुनरन्तर्गमयति । तथा प्रलये स्वोदरे स्थितं स्वभुक्तं विश्वं जडाजडं सूक्ष्मं सृष्टौ स्थूलरूपेण सृजते बहिः क्षिपति पुनरन्तर्गमयति । तथा प्रलये स्वोदरे स्थिते स्वभुक्तविश्वं जगत् सूक्ष्मं सृष्टौ स्थूलरूपेण सृजते बहिःक्षिपति प्रलये पुनरन्तर्नयति तथेति शेषः । किमनुसृत्येत्यतो दृष्टान्तान्तरमाह— **यथेति** ।। यथा शाल्यादिनानाबीजान्यपेक्ष्य ओषधयः पृथिव्याधारेण जायन्ते । तथा हिरण्यगर्भादिकर्मानुसारेण हर्याधारेण चेतनाचेतनजगज्जन्यते । तत्स्रष्टृत्वं च न कुलालादिवत्क्लेशेनेति दृष्टान्तेनाह— **यथेति** ।। सतो विद्यमानाज्जीवतः पुरुषाच्छरीराच्चेतनाद्वा यथा केशलोमान्यनायासेन भवन्ति तथा विश्वं जगदप्यनायासेनाक्षराद्भवति ।। ७ ।।

## उपनिषत्

**तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।**
**अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ।। ८ ।।**

**व्या.टी.**——यद्यप्यूर्णनाभ्युपभुक्तमन्नमेव तन्त्वाकारेण परिणमते नतूर्णनाभिश्चेतनः । तथापि यथा पृथिव्यामित्यादिदृष्टान्तोक्त्या परिणामिकर्तृत्वं प्रतीयते तन्निवारयितुमाह-– **तपसेति** ।। तपसा आलोचनेन ज्ञानेन विचारेणेति यावत् । चीयते सम्बद्ध्यते ब्रह्म । ज्ञानवतः कारणस्य परिणामिकर्तृत्वमयुक्तमित्यर्थः । विचारानन्तरभाविसृष्टिक्रममाह— **ततोऽन्नमित्यादिना** ।। अत्र देवता जडानि च ग्राह्याणि । कर्म च जातम् । कर्मसु निमित्तेषु अमृतं स्वर्गादिकं च जातमिति योज्यम् ।। ८ ।।

**ध.टि.**—— ।। **ततोऽन्नमित्यादिनेति** ।। ततो विरिञ्चानन्तरं ततो ब्रह्मणः अन्नम् । अन्नात्प्राणः शरीरो वायुः । मनः मनोबुद्धिरहंकारः च्चित्तं चेतनेति पञ्चविधम् । सत्यं यथार्थवचनम् । लोकाः गोलोकाः इति श्रुत्यर्थः । अत्र अन्नादिशब्दैः जडमात्रप्रतीतौ सत्यामाह— **अत्र देवा जडानि चेति** ।। कर्मस्वित्यनुवादादाह-– **कर्म चेति** ।। निमित्तेषु तत्फलभूतमिति शेषः । मन्वन्तरकालपर्यन्तं स्वर्गादिस्थानां मरणशून्यत्वेन स्वर्गादेरमृतशब्दितत्वमित्यभिप्रेत्याह— **अमृतं स्वर्गादिकमिति** ।। ८ ।।

**वामन.टी.**——एवमप्यक्षरशब्देनोपादानकारणं प्रधानमत्रोच्यतामित्यत आह— **तपसेति** ।। अत्र तपो नाम विश्वं सृजानीत्यालोचनम् । नह्यालोचनशक्तिरुपादानस्य भवति । अतो नेदम् ।। ८ ।।

**न.टी.**——यद्यप्यूर्णनाभ्युपभुक्तमन्नमेव तन्त्वाकारेण परिणमते न ऊर्णनाभिश्चेतनः । तथापि यथा पृथिव्यामित्यादिदृष्टान्तोक्त्या परिणामिकर्तृत्वं प्रतीयते तन्निवारयितुमाह-– **तपसेति** ।। तपसा आलोचनेन ज्ञानेन विचारेणेति यावत् । चीयते सम्बद्ध्यते ब्रह्म । ज्ञानवतः कारणस्य परिणामिकर्तृत्वमयुक्तमित्यर्थः । विचारानन्तरभाविनं

सृष्टिक्रममाह— **ततोऽन्नमित्यादिना** ।। अत्र देवा जडानि च ग्राह्याणि । कर्म च जातम् । कर्मसु निमित्तेष्वेष्वमृतं स्वर्गादि च जातमिति योज्यम् ।। ८ ।।

**रा.खं.**——यथा पृथिव्यामिति दृष्टान्तोक्त्या प्राप्तपरिणामशंकां निरस्यन्नक्षराद्विश्वसम्भवक्रमं व्यनक्ति— **तपसेति** ।। अक्षराख्यं ब्रह्म तपसा ज्ञानेन चीयते सम्बद्ध्यते । ब्रह्म विश्वं सृजानीति व्यचारयदिति यावत् । ज्ञानरूपविचारवतो न परिणामितेति भावः । ततो विचारानन्तरमिति, विचारितवतो ब्रह्मण इति वा । अत्रान्नादिपदैर्जडं तदभिमानिदेवता च ग्राह्या । लोका जायन्त इत्यनुषङ्गः । तदनन्तरं कर्म जायत इति शेषः । जातेषु कर्मसु निमित्तभूतेषु अमृतं स्वर्गादिफलं जायत इत्यनुषङ्गः ।। ८ ।।

**स.टी.**——युक्त्यन्तरेणापि प्रकृतिपरतां निवारयितुमुपक्रमते— **तपसेति** ।। तपसाऽलोचनेन । ज्ञानेन विचारेणेति यावत् । ब्रह्म चीयते सम्बद्ध्यते । विचारानन्तरं सृष्टिक्रममाह— **ततोऽन्नमित्यादिना** ।। अत्रान्नादिशब्दैर्देवा जडानि च ग्राह्याणि । कर्म चाजनि । कर्मसु निमित्तेषु अमृतं स्वर्गादिकं च जातम् । एवञ्च तपसा चीयत इति ज्ञानाश्रयत्वप्रतीतेर्जडप्रकृतिनिरासः ।। ८ ।।

**श्री.टी.**——नन्वत्रोर्णनाभ्युपभुक्तान्नस्यैव तन्त्वाकारेण परिणामेनोर्णनाभेश्चेतनस्य तदभावात्तद्दृष्टान्तोक्त्याक्षरस्य निमित्तत्वप्रतीतेस्तद्दृष्टान्तोपादानमेव युक्तं नतु पृथिव्यादिदृष्टान्तोपादानं तेनोपादानत्वस्यैव प्रतीतेरित्याशंकाज्ञानपूर्वकं स्रष्टृत्वोपपादनेन निराकरोति— **तपसेति** ।। अक्षरशब्दोक्तं ब्रह्म आदौ तपसा चीयते सम्बद्ध्यते । तत्तप्यतेति यावत् । ततस्तपोयुक्ताद्ब्रह्मणः सकाशादन्नमभिजायते । अत्रान्नादिशब्दैर्देवाः जडानि च गृह्यन्ते । कर्मस्वित्यनुवादात्कर्म च जातमिति वक्तव्यम् । कर्मसु निमित्तभूतेषु सृष्टेषु सत्सु तत्फलभूतममृतं स्वर्गो मन्वन्तरकालपर्यन्तं मरणशून्यत्वेन तस्यामृतशब्दवाच्यत्वात्तदादिकं जातमित्यर्थः ।।

**उ.टी.**——यथा पृथिव्यामिति दृष्टान्तोक्त्या प्राप्तपरिणामिकारणत्वशंकां निरस्यन्नक्षरा-

द्विश्वसम्भवक्रमं दर्शयति— **तपसेति** ।। ब्रह्म अक्षराख्यम् । तपसा आलोचनेन चीयते सम्बद्ध्यते । ब्रह्म विश्वमहं स्त्रक्ष्यामीत्यालोचयामासेति यावत् । अन्नात्प्राणः मनः सत्यं लोकाः कर्माणीति शेषः । जायन्ते । कर्मसु जातेषु निमित्तप्राप्त्या अमृतं तत्फलभूतं स्वर्गादिकं च जायत इत्यनुषङ्गः । अत्रान्नादिपदैः देवाः जडानि च ग्राह्याणि ।। ८ ।।

**आ.टी.——**यद्यप्यूर्णनाभ्युपभुक्तमन्नं तन्त्वाकारेण परिणमते । नतूर्णनाभिश्चेतनः । तथापि यथा पृथिव्यामिति दृष्टान्तोक्त्या परिणामिकर्तृत्वं प्रतीयते । तन्निवारयितुमाह-– **तपसेति** ।। परं ब्रह्म तपसा आलोचनेन विचारेण चीयते संयुज्यते । एवञ्च विचारकर्तुः कारणस्य न परिणामो युक्त इति भावः । विचारानन्तरं किमभूदिति तत्राह— **तत इति** ।। विचारानन्तरं ब्रह्मणोऽन्नं जडं तदभिमानी ब्रह्मा च जायत इत्यर्थः । अन्नात् प्राणो मुख्यश्चात्मनः शिवाद्याः सत्यं पुमाद्याः इन्द्रियाभिमानिनः । लोका गोलकाभिमानिनश्च कर्माभिमानिनः पुष्कराद्याः कर्मसु निमित्तेषु सत्सु अमृतं तत्फलं स्वर्गादिकं च जातम् । अत्र प्राणादिति कर्मप्रतिपाद्यं तयोर्निमित्तत्वकथनेन पूर्वपूर्वं निमित्तीकृत्य उत्तरोत्तरं जायत इति ज्ञेयम् ।।

**गू.टी.——**इह सर्वकाले पृथिव्यादिदृष्टान्तेन परिणामित्वं प्रतीयते तन्निराकर्तुमाह-– **तपसेति** ।। तपसा आलोचनेन ज्ञानेन विचारेणेति यावत् । चीयते सम्बद्ध्यते ब्रह्म । स्त्रक्ष्येऽहं जगदिति विचारं चकार ब्रह्मेत्यर्थः । ज्ञानादिमतः कारणस्य न परिणामिकर्तृत्वं युक्तमित्यर्थः । विचारानन्तरभाविनं सृष्टिक्रममाह— **ततोऽन्नमित्यादिना** ।। अत्रान्नाद्यभिमानिनोऽन्यत्रोक्ताः ब्रह्मादयः जडानि च ग्राह्याणि । लोकानन्तरं कर्म जातमिति ग्राह्यम् । ततः कर्मसु निमित्तेषु अमृतं स्वर्गादि च जातम् । आदावन्नादित्यन्ते च कर्मसु इति निमित्तत्वश्रवणत्तन्मध्येऽपि निमित्तत्वं ग्राह्यम् । अन्नादिभ्यः प्राणादयो जाता इति । तत्र चैतत् ब्रह्म उपनिषद्वक्तृत्वेन प्रकृतम् ।। ८ ।।

## उपनिषत्

**यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।**

**तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते ।। ९ ।।**

**व्या.टी.**——तपसा चीयत इत्युक्त्या पूर्वं ज्ञानाभावप्रतीतिं निवारयन् तपसः सन्तापात्मकत्वप्रतीतिं च निवारयति— **यः सर्वज्ञ इत्यादिना** ।। कस्यादि-सृष्टिरित्यत आह— **तस्मादिति** ।। ९ ।।

**ध.टि.——यः सर्वज्ञ इत्यादिनेति** ।। यः परमात्मा सामान्यतः सर्वं जानातीति सर्वज्ञः । विशेषतः सर्वं वेत्तीति सर्ववित् । यस्य तपः ज्ञानमयं ज्ञानात्मकम् । तस्मात्परमात्मनः एतत्कार्यभूतं चतुर्मुखाख्यं ब्रह्म । नामशब्दात्मकः प्रपञ्चः रूपं अर्थात्मकप्रपञ्चः अन्नं सर्वभोज्यञ्च जायते जज्ञे इति श्रुत्यर्थः ।। ९ ।।

**न.टी.**——तपसा चीयत इत्युक्त्या पूर्वं ज्ञानाभावप्रतीतिस्तां निवारयंस्तपसः सन्तापात्मकत्वप्रतीतिं च निवारयति— **यः सर्वज्ञ इत्यादिना** ।। कस्यादि-सृष्टिरित्यत आह— **तस्मादिति** ।। ९ ।।

**रा.खं.**——तपसा चीयत इत्युक्त्या प्राज्ज्ञानं विनेति प्राप्तशंकां निरस्यंस्तप-स्स्वरूपोक्तिपूर्वं प्रथमतस्सृष्टं चाह— **यस्सर्वज्ञ इत्यादिना** ।। सर्वं जानातीति सर्वज्ञः । सर्वं वेत्तीति सर्ववित् । ज्ञानवेदनयोस्सामान्यविशेष-त्वेनापौनरुक्त्यम् । सर्वं विन्दत इति वा सर्ववित् । 'विदॢ लाभ' इति धातोः क्विप् । सर्वं लभत आप्तकाम इत्यर्थः । हेतुगर्भमिदं द्वयम् । सर्वज्ञत्वादाप्तकामत्वा-द्यस्य तपो ज्ञानमयं ज्ञानात्मकं नाऽलोचनात्मकं, नापि सन्तापात्मकमिति । अज्ञो ह्यालोचयति । अनाप्तकामस्तु तप्यति । नित्यसिद्धसर्वविषयकमपि ज्ञानं सिसृक्षारूपविशेषात्मना कालविशेषे व्यज्यत इति, 'तपसा चीयत' इति, 'सोऽकामयत' इति, 'तदैक्षत' इति, 'स ईक्षाञ्चक्रे' 'तपस्तप्त्वा' इत्यादिरूपेण श्रुतिषूच्यत इति भावः । तस्मा-त्सर्वज्ञाद् ब्रह्मणः नामरूपशब्दितशब्दप्रपञ्चार्थप्रपञ्चाभिमानितयाऽभेदोपचारेण नामरूपमन्नमित्युक्तम्, एतत् ब्रह्म चतुर्मुखाख्यं जायत इत्यर्थः ।। ९ ।।

**स.टी.**——ननु ब्रह्मणस्तपसेत्यालोचनेन ज्ञानाभ्युपगमेऽज्ञानप्रसङ्गः । यतोऽज्ञ एवालोचयते । नैष दोषः । तपःशब्देन ज्ञानसाधनस्यात्रानभिधानात् । सर्वज्ञस्य विष्णोः ज्ञानसाधनव्यापाराश्रयत्वायोगात् । तदेतदाह— **यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इति** ।। सर्वज्ञः सर्वविदिति सर्वसामान्यविशेषाकारज्ञानवत्तोच्यते । 'विद्लृ लाभ' इत्यस्येदं वा छन्दसि रूपम् । आप्तकाम इत्यर्थः । तस्माद्यस्य तपो ज्ञानस्वरूपं न त्वालोचनात्मकं सन्तापात्मकं वा । अज्ञो ह्यालोचयते । अप्राप्त-कामश्च तपस्यतीत्यर्थः । इत्थञ्च तपसा चीयत इति तपः नालोचनात्मकं न वा सन्तापात्मकम् । कुतः यः सर्वज्ञ इति स्वभावसिद्धसर्वज्ञत्वात् । एवञ्च सार्वज्ञ-विशेषणेनैव प्रकृतिनिरासः । अत एव भाष्यटीकायां तपसा चीयते ब्रह्मेत्यत्रा-ज्ञानप्रतीतौ तन्निरासाय यस्य ज्ञानमयं तप इत्युक्तार्थे हेतुतयाऽदृश्यत्वादिगुणकस्य सार्वज्ञ्यविशेषणोक्तेर्नाचेतनप्रकृतेरदृश्यत्वादिगुणकत्वमित्यटीकत । अथ हिरण्य-गर्भस्यैवादृश्यत्वादिकमस्तु । स ब्रह्मविद्यामित्यादि ब्रह्मशब्दात् । नच ब्रह्मशब्दो विष्णोर्मुख्यत इति तद्ग्रहणम् । तत्परतः पराभिधानात् । नैष दोषः । परविद्या-विषयत्वलिङ्गेन पूर्वाद्धिरण्यगर्भस्यापि निराकृतत्वात् । युक्त्यन्तरेणापि निराकुरुते-– **तस्मादिति** ।। तस्मादक्षरशब्दवाच्याद् ब्रह्मणः एतद्ब्रह्म चतुर्मुखः जायते । तस्य यन्नाम यच्च रूपं तदपि जायते । तथा नामरूपम् । तदात्मकं यदन्नमद्यत इत्यन्नम् । जायते इत्यर्थः । एवं च सर्वं जगच्च हिरण्यगर्भस्याक्षराज्ञातत्वाभिधानेन भेदव्यपदेशान्न हिरण्यगर्भोऽपि अदृश्यत्वादिगुणकः । तदेतदसुसूत्रत् "भेदव्यप-देशाभ्यां च नेतरावि"ति । अभाषत च "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप" इति विशेषणान्न प्रकृतिः । तस्मादेतद्ब्रह्मनाम रूपमन्नं च जायत इति भेदव्यपदेशान्न विरिञ्च इति । अत एवास्मादक्षरादेतद्ब्रह्म चतुर्मुखाख्यं जायते इति विरिञ्चस्य तज्जन्यता । तस्माद्भेदव्यपदेशान्नासावप्यदृश्यत्वादिगुणक इत्यर्थ इत्यटीकत ।।

**व.टी.**——तपसा चीयते ब्रह्मेत्यत्र ब्रह्मण आलोचनपूर्वकं सृष्टिकर्तृत्वमुक्तम् । तेन तस्याज्ञानित्वशंका स्यात् । सर्वज्ञस्य तदसम्भवादित्यत उच्यते— **यः सर्वज्ञ इति** ।। ९ ।।

**श्री.टी.**——अत्र तपसा चीयते ब्रह्मेत्युक्तम् । तत्र 'तप आलोचने' 'तप सन्ताप' इति धातोरालोचनात्मकं सन्तापात्मकं वा तपो ब्रह्मणः प्रतीयते । तदयुक्तम् । तथात्वे ब्रह्मणोऽज्ञानित्वाप्राप्तकामत्वयोः प्राप्तेरतस्तपसेत्यस्याभिप्रायमाह— **यः सर्वज्ञ इत्यादिना** ।। सर्वज्ञः सर्वविदिति जगति सामान्यविशेषाकारयोः सत्वाज्जगन्निष्ठौ यौ सामान्यविशेषाकारौ तद्विषयकज्ञानवत्तोच्यते । यद्वा 'विदॢ लाभ' इति धातोः सर्वं लब्धमनेनेति व्युत्पत्त्या सर्ववित् आप्तकाम इत्यर्थः । अयं भावः । यस्य तपो ज्ञानमयं ज्ञानस्वरूपं नत्वालोचनात्मकं कुतः यतोऽयं सर्वज्ञः । अज्ञो ह्यालोचयते तथा यस्य तपो ज्ञानमयमेव नतु सन्तापात्मकं कुतः यतोऽयं सर्ववित् आप्तकामः अप्राप्तकाम एव हि लोके तपस्यतीति । तस्मादक्षरशब्दवाच्याद्ब्रह्मणः सकाशादेतद्ब्रह्म चतुर्मुखाख्यं जायते । तस्य यन्नाम यच्च रूपं तदपि जायते तथा नामरूपं तदात्मकं यत् अन्नं अद्यत इत्यन्नं पूर्वानुक्तं सर्वं जगत् तदपि जायत इत्यर्थः । तथाचैवं ज्ञानपूर्वकं जगत्स्रष्टुरक्षर-नामकस्य ब्रह्मणो न पृथिव्यादिदृष्टान्तेन परिणामिकारणत्वं मन्तव्यम्। किन्तु कारणत्वमात्र एव पृथिव्यादिदृष्टान्तस्य तात्पर्यमिति भावः । यथोक्तं तत्त्वप्रका-शिकायाम्— यदपि पृथिव्यादिदृष्टान्तेन जगत्कारणत्ववचनं तत्कारणत्व-मात्रतात्पर्यमिति ।। ९ ।।

**उ.टी.**—ननु तपसा चीयत इति ब्रह्मण आलोचनमुक्तम् । तदयुक्तम् । भूत्वा भवनं गीताभाष्यादावुपपादितम् । तदभिप्रायेण तपसा चीयत इत्यादौ ज्ञानात्मक-तपसः कादाचित्कत्वोक्तौ बाधकाभावादिति ज्ञेयम् । तस्मादुक्तविशेषणविशिष्टा-दक्षरात् एतद्ब्रह्म नामरूपादिकं च जायत इति योज्यम् ।। ९ ।।

**आ.टी.**——तपसा चीयत इत्युक्त्या पूर्वज्ञानाभावः प्रतीयते । तां निवारयंस्तपसः सन्तापकत्वप्रतीतिं च परिहरन् सर्वलाभं चाह— **य इति** ।। यस्य ब्रह्मणः ज्ञानरूपमेव तपः न सन्तापरूपम् । स ईश्वरः सर्वज्ञः स एव सर्वदा सर्ववित् सर्वलाभवान् । 'विदॢ लाभे' 'विदि सत्तायाम्' । सर्वज्ञत्वेन सदास्तीत्यर्थः ।

सर्वविषयकसामान्यज्ञानविशेषज्ञानवानिति वा । कस्याऽऽदिसृष्टिरित्यत आह- – **तस्मादिति** ।। आलोचनयुक्तात्परब्रह्मणः एतद् ब्रह्म चतुर्मुखाख्यं ब्रह्म जायते । तस्माच्चतुर्मुखात् नाम नामात्मकं जायते । रूपं रूपात्मकं जगत् । एतत्सर्वं परब्रह्मणोऽन्नं अद्यमानं जायते । "यस्य ब्रह्म च क्षत्रं चे"त्यादि श्रुतेः ।।

**गू.टी.**——विरिञ्चाख्यं ब्रह्मैतस्मादक्षरात्साक्षाज्जातम् । आदौ च ततो विरिञ्च-द्वारा नामरूपात्मकं विश्वमन्नं पृथिव्यादिकं च जातमित्यर्थः । यद्वा ब्रह्मनाम ब्रह्मेति नामकं ब्रह्मस्वरूपमन्नम् । चस्त्वर्थेऽवधारणे वा । विरिञ्चाभिमन्यमानमन्नं तु तस्मादेव साक्षाज्जायते इति । यतः कारणात् यस्मान्नामादि विश्वं जायतेऽतस्तदक्षरं ब्रह्म । सृष्ट्या बृंहयतीति ब्रह्माभूदिति वा ।। ९ ।।

**।। इति प्रथमखण्डमन्त्रार्थः ।।**

## भाष्यम्

**एतद्ब्रह्म चतुर्मुखः ।।**

**व्या.टी.**——तपसा चीयते ब्रह्मेत्युक्तं ब्रह्म तस्मादेतद्ब्रह्मनामेत्युक्तमिति प्रतीतिं निवारयति— **एतद्ब्रह्म चतुर्मुख इति** ।।

**ध.टि.**—— ।। **निवारयतीति** ।। तथात्वे स्वयं तपः कृत्वा स्वस्मादेव स्वयमुत्पन्न इत्यर्थप्राप्तेस्तस्य च बाधितत्वादिति भावः ।। **तां प्रतीतिं निवारयन्निति** ।। तथा तत्तच्छब्दापूर्वप्रकृतपरामर्शकत्वेऽनुपपत्तेः । "भगवत्प्रतीतिकामैस्तु कार्यं कर्माखिलैर्नृभिरि"त्यादिवाक्यानुसारेण सत्यकामास्सत्यनामकभगवत्प्रतीतिकामा-स्तानि कर्माण्याचरथेति अवश्यं तदर्थस्य वक्तव्यत्वेनैकप्रकारेणोक्तसत्यशब्दस्या-नेकार्थकल्पनापत्तेश्चेति भावः ।।

**स.टी.**——तदिदमभिप्रेत्य बभाषे— **एतद्ब्रह्म चतुर्मुख इति** ।।

**व.टी.**——तत्र तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत इत्युत्पत्तिमत्त्वेनोक्तब्रह्म किमित्यत आह— **एतदिति** ।। विशेषितत्वादेव परब्रह्मापेक्षया अर्वाचीन-मित्यर्थः ।।

**श्री.टी.**——तस्मादेतद्ब्रह्मनामेत्यत्रैतद्ब्रह्मपदेन तपसा चीयते ब्रह्मेत्युक्तमेव ब्रह्म परामृश्यत इति प्रतीयते तदयुक्तम् । स्वयं तपः कृत्वा स्वस्मादेव स्वयमुत्पन्न इत्यस्य बाधितत्वादतस्तदनूद्य व्याचष्टे— **एतद्ब्रह्मेति** ।।

**उ.टी.**——ननु तपसा चीयते ब्रह्मेत्युक्तमेव ब्रह्म तस्मादेतद्ब्रह्मनामेत्युच्यते । नचैतद्युक्तम् । एकस्यैव जन्यजनकभावायोगादित्यतः एतद्ब्रह्मेत्यनूद्य व्याचष्टे-— **एतद्ब्रह्म चतुर्मुख इति**।। तत्र निर्विशेषणब्रह्मशब्दप्रयोगात् ब्रह्मशब्दस्य परब्रह्मार्थकत्वेऽपि प्रकृते सविशेषणब्रह्मशब्दप्रयोगात् चतुर्मुखार्थकत्वमङ्गीकार्यमिति भावः ।। ९ ।।

**।। इति प्रथमखण्डभाष्यार्थः ।।**

# अथ द्वितीयः खण्डः

## उपनिषत्

**तदेतत् सत्यम् ।**

**मन्त्रेषु कर्माणि कवयो यान्य-**
**पश्यंस्तानि त्रेतायां बहुधा सन्ततानि।**
**तान्याचरथ नियतं सत्यकामा**
**एष वः पन्थाः सुकृतस्य लोके ।।**

**व्या.टी.**—परविद्याया अपरविद्या अङ्गमित्युक्तं तत्प्रकारं दर्शयति— **तदेतत्सत्यमित्यादिना** ।। तस्यैवं योजना । कवयो मन्त्रेषु यानि कर्माण्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि । सत्यकामाः सत्यस्य ज्ञानार्थिनः सन्तो यूयं तान्याचरथ । सत्यं नाम किमित्यतो यदेतदक्षरं प्रकृतं तदेतत्सत्यमिति । कर्मादिकं ब्रह्मज्ञानकारणमित्यर्थः । एष भगवज्ज्ञानार्थमनुष्ठितः कर्मसन्दर्भो लोके वः सुकृतस्य लोकस्य उपपन्नः पन्थाः ।। १ ।।

**ध.टि.**— ।। **बहुधा सन्ततानीति** ।। कृतयुगे विष्णुपरिवारतयेज्यसर्वदेवस्थितेन्द्रादिनामकविष्णुमात्रोद्देश्यकत्वेनैकविधत्वेन स्थितानि कर्माणि त्रेतायां पृथक्पृथक्तत्तद्देवतोद्देश्यकत्वेन अत एव विष्णौ समर्पणादिमत्त्वेन बहुधा सन्ततानीत्यर्थः । परविद्याया अपरविद्या अङ्गमित्येतत्कथं दर्शितं भवतीत्यतः फलितार्थमाह— **कर्मादिकमिति** ।। **सुकृतस्येति** ।। ज्ञानद्वारा निवृत्तकर्मसाध्यस्येत्यर्थः ।। १ ।।

**वामन.टी.**—तथाऽचरणं हि विशिष्टं विशिष्टफलमित्याह— **एष व इति** ।। एष भगवद्यज्ञः स्वजन्यज्ञानसाधितस्य विष्णोर्लोकस्य गमनाय मार्गः उपायो भवति, साधनसाधनत्वात् ।। १ ।।

**न.टी.**——परविद्याया अपरविद्या अङ्गमित्युक्तं तत्प्रकारं दर्शयति— **तदेतत्सत्यमित्यादिना** ।। तस्यैवं योजना । कवयो मन्त्रेषु यानि कर्माण्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । सत्यकामाः सत्यस्य ज्ञानार्थिनः सन्तः यूयं तान्याचरथ । सत्यं नाम किमित्यतो यदेतदक्षरं प्रकृतं तदेतत्सत्यमिति । कर्मादिकं ब्रह्मज्ञानकारणमित्यर्थः । एषः भगवज्ज्ञानार्थमनुष्ठितः कर्मसन्दर्भः लोके वः सुकृतस्य लोकस्य उपपन्नः पन्थाः ।। १ ।।

**रा.खं.**——कर्मदेवतादिज्ञानं यज्ज्ञानार्थं सदनल्पास्थिरफलवद्भवति तन्मे ब्रूहीति पृष्टवन्तं शौनकं प्रति अङ्गिरा ब्रह्मज्ञानार्थं सत्तादृशफलवद्भवतीति भावेन ब्रह्मस्वरूपं लेशेन निरूप्य इदानीं यज्ज्ञानार्थं सदित्युक्तं तज्ज्ञानार्थत्वप्रकारमाह— **तदेतत्सत्यमित्यादिना** ।। तदेतत्परविद्याविषयतयाऽदृश्यत्वादिगुणकतयोक्तमक्षरं सत्यमपराधीनस्वरूपं सर्वसत्यताप्रदं चेत्यर्थः । कवयो ज्ञानिनो मन्त्रेषु यानि कर्माणि समाधौ मनसा अपश्यन् तानि त्रेतायां त्रेतायुगे बहुधा सन्ततानि कृतयुग इव विष्ण्वेकविषयकाणि नासन् । किन्तु 'त्रेतादौ तदशक्त्या हि धर्मोऽन्यस्सम्प्रवर्तते' इति, 'पृथक् पृथक् च त्रेतायां यजन्ते देवतागणान्' इति च स्मृत्या कृतयुग इव विष्ण्वेकनिष्ठतां विना नानाप्रकारेण तत्तद्देवतोद्देशेन कृत्वाऽन्ते विष्णावर्पयन्तीति बहुधा प्रवर्तितान्यासन्नित्यर्थः । सत्यकामास्सत्याख्यभगवज्ज्ञानकामास्सन्तो यूयं तानि कर्माणि नियतं यथा भवति तथाऽऽचरथानुतिष्ठत । तथाहि—कर्मदेवतादिज्ञानं 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः' इत्यादिसूत्रोक्तदिशा तदनुष्ठानेनान्तःकरणशुद्धिद्वारा ब्रह्मज्ञानहेतुश्रवणाद्यङ्गं सद् ब्रह्मज्ञानं जनयित्वा अनन्तफलवद्भवति । अपरममुख्यवृत्त्या कर्मदेवतादिस्वरूपप्रतिपादकमपि ऋगादिकं परममुख्यवृत्त्याऽक्षरबोधकत्वे परविद्यैव भवतीति भावेनाह— **एष व इति** ।। एषः भगवज्ज्ञानोद्देश्यकः कर्माचारो, वो युष्माकं, सुकृतस्य लोके लोकस्य पन्था मार्ग इत्यर्थः । आचरथेति बहुवचनोक्त्या प्रष्टा शौनक उपलक्षणमिति सूचितम् ।। १ ।।

**स.टी.**——ऋगादीनामेव भगवदुद्देशेन कर्मादिप्रतिपादनदशायां परविद्यात्वं तदनुद्देशेन कर्मादिप्रतिपादनवेलायां अपरविद्यात्वमिति दर्शयति— **तदेतत्सत्यमिति** ।। कवयो ज्ञानिनः । मन्त्रेषु कर्माणि यान्यपश्यन् तानि कृते एकप्रकारेणैव सन्ततानीति शेषः । एकप्रकारत्वं चन्द्राग्न्यादिस्थिततन्नामकभगवदुद्देशेनैव प्रवृत्तत्वम् । तानि त्रेतायां बहुधा सन्ततानि त्रेतायां कृतयुगवदेव यजन्ति केचित् । अन्ये पृथक्तानि दृष्ट्वा ते विष्णावर्पयन्ते । अन्ये नार्पयन्ति चेति बहुधा सन्ततानि । तानि कृतयुगे अनुष्ठितानि त्रेतायां सद्भिरनुष्ठितानि निवृत्तकर्माणि सत्यकामाः भगवत्प्रीतिकामाः आचरथ आचरत । एवं भगवदुद्देशेन कर्मकरणे तदपरविद्यापि परविद्या भवति । सत्यं किमित्यत उक्तं एष भगवदुद्देशेन कृतो धर्मः सुकृतस्य लोके पुण्यसाध्यलोकविषये यथा मार्गः तदेतत्सत्यमिति भगवानित्यर्थः । भगवदुद्देशेन कर्मकरणे तु तानि कर्माणि क्षीणफलकत्वेन "प्लवा ह्येते अदृढा" इति निन्दाविषया भवन्ति । तदा साऽपरविद्या भवति । ननु कृते कर्मणामेकविषयत्वेन सन्ततत्वं कथम् । इन्द्रादिनामभिर्यजनात् । नैष दोषः । "यमिन्द्रमाहुर्वरुणं यमाहुरि"ति । "यो देवानां देवतमो जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमी"ति इन्द्रादिनामकभगवद्रूपेभ्यः इन्द्रादिस्थितभगवद्रूपविशेषेभ्यश्च हवनात्। तदिदमभिप्रेत्याभाषिष्ट स्ववचनप्रमाणाभ्याम् । त्रेतायां बहुधा सन्ततानि ।।

**व.टी.**——कर्मणां ब्रह्मार्थत्वे कर्मप्रतिपादकवेदादीनामपि परविद्यात्वमेवेत्युक्तं द्वे विद्ये वेदितव्य इत्यादिना । तत्र कर्मणां ब्रह्मार्थत्वं केन प्रकारेणेत्यतः एकेन प्रकारेण तावत्तन्निरूप्यते— **तदेतत्सत्यमित्यादिना** ।। १ ।।

**श्री.टी.**——अपरविद्यया विज्ञातं कर्मादिकं परविद्याविषयपरमात्मज्ञानेन सफलं भवतीत्येवमपरविद्या परविद्याङ्गमित्युक्तम् । तत्कथमित्यतस्तत्प्रकारं दर्शयति-- **तदेतत्सत्यमित्यादिना** ।। कवयो ज्ञानिनो मन्त्रेषु यानि कर्माण्यपश्यन्प्रतिपाद्यत्वेन ज्ञातवन्तस्तानि कर्माणि त्रेतायां बहुधा सन्ततानि कृतयुगे भगवन्मात्रविषयत्वेन सन्ततानि त्रेतायां बहुधा भगवत्तदितरदेवताविषयकत्वेन

सन्ततानि सम्यक्प्रवृत्तानीत्यर्थः । अतः हे सत्यकामाः सत्यस्यापरोक्षज्ञानद्वारा भगवत्प्रीतिकामाः यूयं नियतं नियमेन तानि कर्माण्याचरथ ।। १ ।।

**उ.टी.**—ननु कर्मादिकं केन प्रमाणेन विज्ञातं भवतीति प्रश्ने अपरविद्यया विज्ञातं भवतीति प्रत्युत्तरमभिप्रेत्यापरविद्या निरूपिता । एवं विज्ञातं च कर्मादिकं कस्मिन्विज्ञाते सति सफलं भवतीति प्रश्ने परविद्याविषयपरमात्मज्ञानेन सफलं भवतीति प्रत्युत्तरमभिप्रेत्य परविद्यामुक्त्वा तद्विषयः परमात्मा संक्षेपविस्तराभ्यां निरूपितः । तत्र कर्मादिकं भगवज्ज्ञानेन सफलं भवतीत्ययुक्तम् । अन्यज्ञानेनान्यस्य साफल्ये परमात्मज्ञानेन निषिद्धकर्मणोऽपि साफल्यं स्यादित्यतिप्रसङ्गादित्याशंक्य कर्मादिकं परमात्मज्ञानमुत्पाद्य तत्फलेन सफलं भवति । नच निषिद्धकर्म परमात्मज्ञानोत्पादकम् । तद्विरोधात् । अतो नातिप्रसङ्ग इति भावेन परमात्मज्ञानोद्देशेन स्ववर्णाश्रमोचितकर्माणि कर्तव्यानीति विधातुं भगवत्स्तुतिरूपं मङ्गलमाचरति— **तदेतदिति** ।। तत्परविद्यागम्यं एतत् अदृश्यत्वादिगुणमक्षरं सत्यमेव नत्वर्थान्तरमित्यर्थः । एवं मङ्गलं कृत्वा इदानीं परमात्मप्रीत्युद्देशेन विहितकर्माणि कर्तव्यानीत्याह— **मन्त्रेष्विति** ।। तदयं मन्त्रार्थः— कवयो ज्ञानिनो मन्त्रेषु यानि कर्माणि समाधौ मनसाऽपश्यन् प्रतिपाद्यत्वेन ज्ञातवन्तः । तानि यद्यपि त्रेतायां त्रेतायुगे बहुधा भागवतैः प्रतिक्षणं भगवद्विषयत्वेन त्रैविद्यैरन्ते भगवत्समर्पणेन द्वेषिभिरन्ते समर्पणं विनैवेत्येवंप्रकारत्रयेण सन्ततानि प्रवर्तितानि । तथाच स्मृतिः । एवं त्रेतायां केचिदन्ये पृथक्तानिष्ट्वा विष्णावर्पयन्ते नचान्य इति । कृतयुगे तु नैवम् । किन्तु सर्वाण्यपि कर्माणि भगवद्विषयत्वेनैव प्रवर्तितानीत्यपि ग्राह्यम् । तथापि हे सत्यकामाः भगवत्प्रीतिकामाः शौनकाद्याः सर्वेषां गृहस्थाश्रमवतां संग्रहाय सत्यकामा इति निरंकुशबहुवचनेन सम्बोधनमिदम् । अन्यथा सम्बोध्यस्य शौनकस्यैकत्वाद्बहुवचनान्तसम्बोधनानुपपत्तिः । यूयं तानि मन्त्रोक्तसकलकर्माणि अग्निहोत्रादिगृहस्थकर्माणि शमादियतिकर्माणि च । एषां च कर्मत्वं श्रुत्यादिना कर्तव्यतयोक्तत्वं नतु परिस्पन्दत्वम् । शमादीनां तदभावात् ।

नियतमिति क्रियाविशेषणम् । नियमेन भगवद्विषयत्वेनैव । आचरथ । लकार-व्यत्ययः छान्दसः । कुरुतेत्यर्थः । नन्वेतावता यथा कृतादियुगे भागवतैः कर्माणि कृतानि तथैव भवद्भिरपि कर्माणि कर्तव्यानीत्युक्तम् । तत्कुतः । यानि त्रेतायां बहुधा सन्ततानि तान्येव कुतो न कर्तव्यानीत्याशंक्य त्रेतायुगानुष्ठितद्वितीयतृतीयप्रकाराभ्यां कर्मानुष्ठाने मोक्षो न भवति । अनर्थस्य वक्ष्यमाणत्वात् । किन्तु कृतयुगानुष्ठितप्रकारेण त्रेतायुगे भागवतानुष्ठितप्रकारेण चानुष्ठानेन मोक्षो भवति । अतो भगवद्विषयत्वेनैव कर्माणि कर्तव्यानीति भावेनाह— **एष इति** ।। एषः भगवत्प्रीत्युद्देशेन कर्माचारः । पन्था इति विधेयानुसारेणैष इत्युक्तम् । वः युष्माकम् । सुकृतशब्दो भगवदर्थः । "तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत" इत्यादिश्रुतेः । लोकशब्दस्तु ज्ञानार्थः । 'लुक्दर्शन' इत्यस्माद्धातोर्भावे घञि कृते तदर्थलाभात् । लोकस्तु भुवने जन इति कोशानुसारेण रूढ्या लोकशब्दः प्रसिद्धलोकवाची च । तदयमर्थः—सुकृतस्य ब्रह्मणः । लोक इति षष्ठ्यर्थे सप्तमी । लोकस्य ज्ञानस्य तद्द्वारा श्वेतद्वीपादिपरब्रह्मलोकस्य च । पन्थाः हेतुरित्यर्थः । त्रैविद्यानुष्ठितप्रकारेण द्वेष्यनुष्ठितप्रकारेण च कर्मानुष्ठानं त्विमं लोकं हीनतरं वाविशन्तीति वक्ष्यमाणरीत्याऽनर्थहेतुरित्येतत्सूचनाय च तानि त्रेतायामित्याद्युक्तम् । अतः परब्रह्मलोककामैर्भवद्भिस्तज्ज्ञानद्वारा तल्लोकप्राप्तिहेतुत्वाद्भगवद्विषयत्वेनैव कर्माणि कर्तव्यानीति भावः ।। १ ।।

**आ.टी.**——अपरविद्या परविद्याङ्गमित्युक्तं प्रपञ्चयति— **तदेतत्सत्यमित्यादिना** ।। यदेतत्परविद्यावेद्यमक्षरं ब्रह्म तदेतत्सत्यं साधुगुणयुक्तत्वात् । "तत्सत्यं स आत्मेति" श्रुतेः । कवयो ज्ञानिनः सत्यकामाः ब्रह्मज्ञानादिकामास्सन्तः मन्त्रेषु ऋगादिषु ब्रह्मज्ञानाङ्गत्वेन यानि अग्निहोत्राश्वमेधादिकर्माणि अपश्यन् तानि च त्रेतायां बहुधा सन्ततानि विष्णुतदितरविषयकत्वेन बहुविधान्यासन् । कृते तु विष्ण्वैकविषयकान्यासुः । यूयं तु सत्यकामा एव तान्याचरथ ज्ञानार्थमेव कुरुत । एष एवं क्रियमाणः सुकृतस्य पन्थाः कर्ममार्गे लोके लोकविषये

पर्याप्तो भवति । "आत्मानमेव लोकमुपासीते"ति श्रुतेः । ब्रह्मज्ञाने तल्लोके वा कारणं भवतीत्यर्थः । एवं चेत्सा ऋगाद्यपरविद्यैव परविद्या भवति ।। १ ।।

**गू.टी.**——अपरविद्या परविद्याया अङ्गमित्युक्तम् । तत्प्रकारं दर्शयति— **तदेतदित्यादिना** ।। कवयः कर्माचारविधिज्ञाः । "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादिमन्त्रेषु यानि कर्माणि ज्योतिष्टोमादीनि अपश्यन् प्रतिपाद्यतया जानन्ति । तानि कर्माणि त्रेतायां युगे बहुधा सन्ततानि । अधिकारिणां सत्वादितस्तत्त्रैविध्येन हरिदेवदीनदेवविषयत्वेन बहुप्रकारेण व्याप्तानीत्यर्थः । कृते त्वधिकारिणां सात्त्विकत्वेनेन्द्रादिनामत्वेनापि हरिमेव यजन्तीत्येकप्रकारत्वात् । द्वापरादौ च पुनः सत्त्वसत्त्वाद्यवान्तरभेदेन देवो देवराक्षसादित्वेन बहुविधानीति च ज्ञेयम् । तत्र च शक्तैस्त्रेतादावपि कार्तयुगधर्मः कार्यः । अशक्तैस्त्रेताद्युगानुसारीति यतोऽतो यूयं तु सत्यस्य साधुगुणयुक्तस्य कामाः तद्दानाद्यर्थिनस्सन्तः तानि कर्माण्याचरथ । भगवज्ज्ञानार्थमनुष्ठितः कर्मसन्दर्भः इह लोके वः सुकृतस्य पुण्यप्राप्यस्य लोकस्य ज्ञानस्य मोक्षस्य वा पन्थाः उपपन्नमार्गः ।। १ ।।

## भाष्यम्

**तदेतत्सत्यं भगवान् । तत्कामाः कर्माण्याचरथ । तदा सापि परविद्या, अन्यथा 'प्लवा ह्येते अदृढा यज्ञरूपाः' ।**

**व्या.टी.**——तदेतत्सत्यं मन्त्रेष्वित्यत्र सत्यं यथार्थमिति प्रतीयते । तां निवारयति-— **तदेतदिति** ।। सत्यकामा इत्यत्रापि अन्यथाप्रतीतिं निवारयन् अन्वयं दर्शयन् अभिप्रायमाह— **तदिति** ।। तत्कामाः सत्यनामकभगवत्कामाः "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यत्र कर्मणां निन्दितत्वात् । भगवत्कामाः कर्माण्याचरेथेति कथं व्याख्यानं युक्तमित्यतस्तस्य भावार्थमाह— **अन्यथेति** ।। कर्मणां भगवद्विषयत्वाभावे इत्यर्थः ।।

**ध.टि.**——।। **तदेतदितीति** ।। अत्र निर्दुःखनित्यनिरतिशयानन्दानुभवरूप-

त्वाद्भगवान्सत्यमित्युच्यत इत्यर्थः ।। यथोक्तं भागवततात्पर्ये "सत्यं परं धीमही" त्यत्र सत्यं निर्दुःखनिरतिशयानन्दानुभवरूपमिति ।। **अन्वयं प्रदृश्येति** ।। सत्य-कामास्तान्याचरथेत्यन्वयः । तानीत्यस्यार्थतो ग्रहणम् ।। **कर्माणीति** ।। तथाच कामाः अपरोक्षज्ञानद्वारा सत्यनामकभगवत्प्रीतिकामाः । कर्माण्याचरथेत्युक्ते किं तत्सत्यमित्याकांक्षायां यदेतत्पूर्वप्रकृतमक्षरनामकं परब्रह्म तदेव सत्यमित्युच्यत इत्युक्तमङ्गिरसेत्यर्थः । तदेतत्सत्यं यथा सुदीप्तादित्युत्तरत्र त्वेतादृशबाधकाभावात् तत्राबाधितत्वार्थक एव सत्यशब्द इत्यवगन्तव्यम् ।। **अभिप्रायमाहेति** ।। तदा सापि परविद्येत्यनेनेत्यर्थः । तदा भगवत्प्रीत्यर्थं कर्मप्रतिपादनदशायां कर्म-प्रतिपादिकापि सा विद्या परविद्यैव भगवत्येव मुख्यतस्तात्पर्यादिति तदर्थः । तत्कामाः सत्यनामकभगवत्कामा इत्यर्थं वदन्नेव प्रतीकं गृह्णाति ।। **तत्कामा इति** ।। भगवद्विषयत्वाभावे काम्यकर्मत्वे इति यावत् । भाष्य यज्ञरूपा इत्या-दिना निन्दाप्रतीतेरिति शेषः । तथाच तदानीं अपरविद्येति भावः ।।

**वामन.टी.**—यदिदं ब्रह्मादिजगतो जनकत्वेनोक्तं तदेतत् सर्वगुणत्वान्निर्दोष-त्वाच्च सत्यमित्युक्तम् । स च भगवान् विष्णुरेव । अथ कवयो ब्रह्मादयो यानि कर्माणि मन्त्रेष्ववान्तरार्थत्वेनापश्यन् तानि कर्माणि भगवत्प्रसादकामा भूत्वा तदर्थत्वेनाचरथ । कर्मश्रुतेरपि इत्थं यदा योजना तदा साऽपि परविद्यैव स्यात् । अन्यकर्मविषयत्वेन योजनायां त्वपरविद्यैव सा स्यात् । एते यज्ञा नाम स्वर्गाख्यपारगमनागमनहेतुत्वेन प्लवोपमत्वात् प्लवाः अदृढाः अस्थिरफल-प्रदाः ।।

**वा.टी.**—तदा सापि परविद्येत्यत्र सापि कर्मविद्यापि परविद्या, परा विद्या ययेति व्युत्पत्त्या परविद्याङ्गत्वात् परविद्येत्युच्यते । अन्यथा सत्याख्यविष्णुविषय-तयाऽकरणे एते विष्ण्वनर्पितकर्मविधयः अदृढा वृथा इत्यर्थः । इदं चोत्तरवल्ल्यर्थ-प्रदर्शनं भाष्यकृता स्वोक्तस्थिरीकरणाय कृतमिति ज्ञेयम् । एष वः पन्था इत्यत्र सुकृतः शोभनतया कृतः सुकृतिभिरङ्गीकृतः पुण्यः निवृत्तरूपपुण्यसाध्यः ।

अधुना श्रुतिः स्वोक्तभगवत्पूजात्मककर्मणि श्रद्धाजननाय शुष्ककर्ममार्गं निन्दति — **प्लवा इति** ।।

**स.टी.**——तदेतत्सत्यमिति वाक्ये तच्छब्देनादृश्यत्वादिगुणकपञ्चम्यन्तनिर्दिष्टतच्छब्दार्थप्रत्यभिज्ञानात्, एतच्छब्दस्य हिरण्यगर्भकारणपरामर्शकत्वात्, सत्यशब्दस्यापि भगवत्परत्वोपपत्तेः । तदेतदभिप्रेत्याभाषिष्ट— **तदेतत्सत्यं भगवानिति** ।।

**व.टी.**——तत्र सत्यं नाम किमित्यत आह— **तदेतदिति** ।। अस्तु सत्यं भगवान् । ततश्च कर्मणां ब्रह्मार्थत्वे किमायातमित्यत उच्यते । मन्त्रेषु कर्माणीत्यादि । तत्र तान्याचरथ नियतं सत्यकामा इत्येतद्व्याख्याति— **तत्कामा इति** ।। तत्कामत्वेऽन्यकरणेऽपि किमायातमित्यतः श्रुत्यभिप्रायं दर्शयति भाष्यकारः— **तदेति** ।। मन्त्रब्राह्मणादिषु यानि कर्माणि प्रतिपादितानि तेषां कर्मणां ब्रह्मप्रीत्यर्थत्वेन कारणेन तत्प्रतिपादका मन्त्रादयोऽपि परविद्या एवेत्यर्थः । ननु "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यनेन यज्ञादिकर्मणां निन्दितत्वात् कथं तत्प्रतिपादकविद्यानां परविद्यात्वमित्यत आह— **अन्यथेति** ।।

**श्री.टी.**——किं तत्सत्यमित्यत उक्तम् ।। **तदेतदिति** ।। यदक्षरं प्रकृतं तदेतदक्षरमेव सत्यम् । तथाच नित्यनिरतिशयानन्दानुभवरूपत्वाद्भगवानेव सत्यशब्दार्थ इत्यर्थः । एषः ज्ञानद्वारा भगवत्प्रीत्यर्थमनुष्ठितो निवृत्तकर्मसन्दर्भो वो भवतां सुकृतस्य सुकृतलभ्यस्य लोके लोकस्य । यद्वा सुकृतस्य फलभूते लोके लोकप्राप्तिविषये तदर्थमिति यावत् । पन्थाः मार्गोऽपरोक्षज्ञानद्वारा भवतीत्यर्थः । यथोक्तं तत्त्वप्रकाशिकायाम्—यदपि पृथिव्यादिदृष्टान्तेन जगत्कारणत्ववचनं तत्कारणत्वमात्रतात्पर्यमिति । तदेतत्सत्यमिति वाक्यं तदेतद्वक्ष्यमाणं प्रमेयं सत्यं यथार्थं न मृषेति परेण व्याख्यातम् । तदसत् । तथात्वे पूर्वप्रकृतपरामर्शकतच्छब्दानुपपत्तेः । "भगवत्प्रीतिकामैस्तु कार्यं कर्माखिलैर्नृभिरि"त्यादिवाक्यानुसारेण सत्यनामकभगवत्प्रीतिकामास्तानि कर्माण्याचरथेत्यवश्यं तदर्थस्य

वक्तव्यत्वे एकप्रकरणोक्तसत्यशब्दस्यानेकार्थकल्पनापत्तेरित्याशयेन तद्वाक्यं सम्यग्व्याचष्टे — **तदेतदित्यादिना** ।। निर्दुःखनित्यनिरतिशयानन्दानुभवरूपत्वा-द्भगवान्सत्यमित्युच्यत इत्यर्थः । यथोक्तं भागवततात्पर्ये—सत्यं परं धीमहीत्यत्र सत्यं निरतिशयानन्दानुभवरूपमिति । तत्कामाः अपरोक्षज्ञानद्वारा तत्प्रीतिकामाः । तथाच सत्यकामाः कर्माण्याचरथेति उक्ते किं तत्सत्यमित्यपेक्षायां यदेतत्सर्वं प्रकृतमक्षरनामकं परं ब्रह्म तदेव सत्यमित्युच्यत इत्युक्तमङ्गिरसेत्यर्थः । "तदेतत्सत्यं यथा सुदीप्तात्पावकादि"त्युत्तरत्र तु एतादृशबाधकाभावात्तत्राबाधितत्वार्थक एव सत्यशब्द इत्यवगन्तव्यम् । ननु सत्यनामकभगवत्प्रीतिकामाः कर्माण्याचरथेति व्याख्यानमयुक्तम् । "प्लवा ह्येते अदृढा यज्ञरूपा" इत्यादिनोत्तरत्र कर्मणां निन्दित-त्वादिति चेत्तत्राह-- **तदा सापीति** ।। भगवत्प्रीत्यर्थं कर्मप्रतिपादनदशायां कर्मप्रतिपादिकापि सा विद्या परविद्यैव । अन्यथा भगवत्प्रीत्यर्थत्वेन तद्विषयक-निवृत्तकर्माऽप्रतिपादकत्वे काम्यकर्मप्रतिपादकत्वमिति यावत् । प्लवा इत्यादि निन्दा प्रवृत्तेति शेषः । तथा सा तदानीमपरविद्येति भावः । एष वः पुण्यः सुकृतो ब्रह्मलोक इति यज्ञादिकाम्यकर्मणां ब्रह्मलोकप्राप्तिरुच्यते तदनुपपन्नम् ।।

**उ.टी.**—अत्र सत्यवचनादिरूपार्थान्तरप्रतीतिनिरासाय सत्यशब्दं व्याचष्टे— **तदेतत्सत्यं भगवानिति** ।। अत्र सत्यं भगवानित्येव वक्तव्ये यदधिकमुक्तं तदुक्तवाक्यस्थसत्यशब्दव्याख्यानमेतदिति प्रदर्शनार्थम् । सत्यशब्दस्य भगवद्वाचित्वे प्रमाणं त्वग्रे वक्ष्यत इति ध्येयम् । अत्र सत्यवचनकामा इति प्रतीतिनिरासाय सत्यकामा इत्येतद्व्याकुर्वन्नेव व्यवहितत्वादन्वयमपि दर्शयति— **तत्कामाः कर्माण्याचरथेति** ।। तत्कामाः भगवत्प्रीतिकामा इत्यर्थः । तदुक्तम् "भगवत्प्रीति-कामैस्तु कार्यं कर्माखिलैर्नृभिः" इति । सत्यवचनकामा इत्यर्थाङ्गीकारे प्रकृतपरि-त्यागाप्रकृतस्वीकारप्रसङ्ग इति भावः । यद्यप्याचरथेति लट्प्रत्ययान्तं न विधाना-नुकूलं तथापि व्यत्ययेन विध्यर्थकं भवति। आचरतेति लोट्प्रत्ययान्तपाठस्तु स्पष्ट एवेति ज्ञेयम् । प्राक् ऋगाद्याः यदा विष्णोर्वाचकाः तदा परविद्या इत्युक्त्वा

समर्थितम् । इदानीमृगादीनामेव परविद्यात्वे एतन्मन्त्रसूचितं युक्त्यन्तरमप्याह- — **तदेति** ।। यदा भगवत्प्रीत्यर्थं कर्माणि विधत्ते तदेत्यर्थः ।। **सापीति** ।। कर्मविधायकविद्यापीत्यर्थः ।। **परविद्येति** ।। वाक्यसमन्वयेन ब्रह्मप्रतिपादकत्वा-दिति भावः । अयमाशयः—परविद्या नाम ब्रह्मतात्पर्यकविद्या । प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति ज्ञापकात् । कर्मविधायकविद्यापि ब्रह्मण्येव महातात्पर्यवती । ब्रह्मप्रीत्युद्देशेन कर्मविधानात् । अतः कर्मविद्यायाः अवान्तरतात्पर्येण कर्म-विधायकत्वेऽपि ब्रह्मण्येव महातात्पर्यवत्त्वात्कर्मप्रतिपादकऋगादीनामेव वाक्य-समन्वयेन परविद्यात्वं सिद्ध्यतीति । ननु तथापि कर्माण्याचरथेति विधानमयुक्तम् । प्लवा ह्येत इति वक्ष्यमाणमन्त्रैः कर्मणां निन्दितत्वादित्यत आह— **अन्यथेति** ।। कर्मणां भगवद्विषयकत्वाभाव इत्यर्थः । यज्ञरूपा इत्यतः परमित्युच्यन्त इति शेषः । तथाच भगवदविषयककर्मनिन्दा प्लवा इत्यादिमन्त्रैः क्रियते । अतो भगव-द्विषयककर्मविधानेऽपि नोक्तदोष इति भावः । अत्र मन्त्रे कृते त्वेकप्रकारेणैव सन्ततानीत्याद्युत्तरभाष्यानुसारेण प्रथमार्धे कृते त्वेकप्रकारेणैव सन्ततानीत्यध्या-हार्यम् । यद्यपि तथापीति च ।। १ ।।

## उपनिषत्

**यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।**
**तदाऽऽज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ।। २ ।।**

**व्या.टी.**——भगवज्ज्ञानकारणं कर्मेति प्रकृतम् । तदाचरणप्रकारमाह— **यदे-त्यादिना** ।। लेलायते परिवर्तते । आज्यभागावन्तरेणाज्यभागयोर्मध्ये ।। २ ।।

**ध.टि.**——**आज्यभागयोर्मध्य इति** ।। आदावेकामाज्याहुतिं दत्वा अनन्तरं क्षीरचर्वाद्यवदानं दत्वा पुनरप्याज्याहुतिं दद्यादित्यर्थः । उत्तरमाग्नेयं दक्षिणं सौम्यमित्युक्ताज्यभागयोर्मध्ये प्रधानाहुतीः प्रक्षिपेदिति वा ।। २ ।।

**वामन.टी.**—कर्माचरणप्रकारमपि संक्षेपेणाह— **यदेति** ।। यदा हव्यवाहने इन्धनैः समिद्धे सति तदर्चिः लेलायते इन्धनरसास्वादनमारभते तदानीं आज्यभागौ चक्षुर्होमौ कृत्वा तयोर्मध्यभागे वदनस्थाने प्रयाजाख्या आहुतीर्जुहुयात् । एवं ह्यग्निहोत्रिणो दर्शपूर्णमासादिषु साधारणो नियमः ।। २ ।।

**न.टी.**—भगवज्ज्ञानकारणं कर्मेति प्रकृतं तदाचरणप्रकारमाह— **यदेत्यादिना** ।। लेलायते परिवर्तते । आज्यभागावन्तरेण आज्यभागयोर्मध्ये ।। २ ।।

**रा.खं.**—कर्माचरणप्रकारमाह— **यदेत्यादिना** ।। लेलायते परिवर्तते । अर्चिर्ज्वाला । समिद्धे, 'इन्धी दीप्तौ', सम्यक् दीप्यमान इत्यर्थः । आज्यभागावन्तरेण आज्यभागयोर्मध्ये आहुतीः प्रधानहोमान् प्रतिपादयेत् कुर्यात् तदा एषः कर्माचारस्सुकृतस्य पन्था इति योजना । आज्यभागाख्यहोमौ पार्श्वयोः कृत्वा मध्ये होमाः कार्या इत्यर्थः ।। २ ।।

**स.टी.**—"कृते त्वेके"त्यारभ्य "विष्णावर्पयन्ते नचान्य" इति ब्रह्माण्ड इत्यन्तेन प्रकृतकर्माचरण इत्थंभावानाह— **यदेति** ।। हव्यवाहने अग्नौ सम्यगिद्धे सति ञी इन्धी दीप्तौ ञीत क्तः । यदा अर्चिर्ज्वाला लेलायते दीप्यते । 'लेला दीप्तावि'ति कण्ड्वादिः । 'ला परिवर्तन' इत्यस्याभ्युपगमे अभ्यासैत्वाद्यनुपपत्तिः । तदार्चिषि आज्यभागावन्तरेण आज्यभागयोर्मध्ये आहुतीः प्रतिपादयेत् दद्यात् ।। २ ।।

**श्री.टी.**—प्रकृतकर्माचरणप्रकारं दर्शयति— **यदेति** ।। हव्यवाहनेऽग्नौ समिद्धे फूत्कारादिना सम्यगिद्धे सति यदार्चिर्ज्वाला लेलायते 'ली परिवर्तन' इति धातोः परिवर्तते तदा तस्मिन्नर्चिषि आज्यभागावन्तरेण आज्यभागयोर्मध्ये आहुतीः क्षीरचरुपुरोडाशाद्याहुतीः प्रतिपादयेद्दद्यात् । आदावेकमाज्याहुतिं हुत्वानन्तरं क्षीरचर्वाद्यवदानं दत्वा पुनरप्याज्याहुतिं दद्यादित्यर्थः । अनेनाग्निहोत्रकरणमुक्तं वेदितव्यम् ।। २ ।।

**उ.टी.**—कर्माण्याचरथेत्यत्र कर्मशब्देन कर्तव्यतया श्रुत्याद्युक्तधर्ममात्रं विवक्षितम् । अन्यथा शमादियतिधर्माणामसंग्रहापत्तेः । तच्च कर्मानेकविधम् । देवयज्ञब्रह्मयज्ञादि-भेदात् । तत्र देवयज्ञो नाम अग्निहोत्रादिहोमः । तं सप्रकारं प्रपञ्चयति— **यदेति** ।। अत्र समिद्ध इत्यनेन आघारादिसमिन्धनान्तमङ्गजातं सूचयति । ततश्च समिद्धे आघारादिसमिन्धनान्ताङ्गयुक्ते हव्यवाहने अग्नौ यदार्चिर्ज्वाला । वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिरित्यमरोक्तेः । लेलायते दीप्यते । 'लेला दीप्तावि'-त्यस्मात्कण्ड्वादिभ्यो यगि'ति यक्प्रत्यये "सनाद्यन्ता धातव" इति धातुसंज्ञायां लट्प्रत्यये व्यत्ययेन तस्यात्मनेपदे च सति रूपमेतत् । तदा आज्यभागावन्तरेण । अथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युरिति कोशादन्तरेणेत्यस्य मध्य इत्यर्थः । तद्योगे आज्यभागाविति द्वितीया । 'अन्तरान्तरेण युक्त' इति तद्विधानात् । ततश्चाज्यभागयोर्मध्य इत्यर्थः । अनेन पूर्वमाज्यभागो होतव्यः । ततश्चर्वाद्याहुतिः । ततः पुनराज्यभागो होतव्य इति होमप्रकारं सूचयति । आहुतीः आहूयन्ते दीयन्ते एता इत्याहुतयः । होमाङ्गद्रव्याणि । तत्र समिधो ब्रह्मचारिकर्तृकहोमाङ्ग-द्रव्याणि । व्रीहियवपयोदध्यादीनि गृहस्थादिकर्तृकहोमाङ्गानि । तानि द्रव्याणि यथायथं प्रतिपादयेत् । दानपर्यायेषु स्पर्शनं प्रतिपादनमिति पाठाद्दद्यादित्यर्थः ।। २ ।।

**आ.टी.**—परम्परया ब्रह्मज्ञानकारणं कर्मेति प्रकृतं तदाचरणप्रकारमाह— **यदेत्यादिना** ।। हव्यवाहनेऽग्नौ सम्यगिद्धे देदीप्यमाने तत्रापि यदार्चिर्जिह्वारूपं लेग्लुक्यते परिवर्तते तदा आज्यभागौ वसुरूपौ ईशान्याग्नेयविदिशोर्हुत्वा त एव तावन्तरेण विनाग्नेर्मध्यभाग इत्यर्थः । आहुतीः तत्तत्कर्म प्रधानाहुतीः प्रतिपादयेत् प्रक्षिपेत् ।। २ ।।

**गू.टी.**—भगवज्ज्ञानकारणं कर्मेति प्रकृतम् । तदाचरणप्रकारमाह— **यदेत्या-दिना** ।। यदा समिद्धे देदीप्यमाने हव्यवाहने अर्चिः लेलीयते परिवर्तते तदाऽऽज्य-भागावन्तरेण आज्यभागयोर्मध्ये आहुतीर्दद्यात् ।। २ ।।

## उपनिषत्

**यस्याग्निहोत्रमदर्शमपौर्ण-**
**मासमनाग्रयणमतिथिवर्जितं च ।**
**अहुतमवैश्वदेवमविधिना हुत-**
**मासप्तमांस्तस्य लोकान् हिनस्ति ।। ३ ।।**

**व्या.टी.**—प्रकृतस्याग्निहोत्रस्येतिकर्तव्यतां तदभावेऽनर्थकथनेनाह— **यस्येत्यादिना** ।। अदर्शपौर्णमासं अमावास्यापौर्णमास्योर्विशेषहोमरहितमित्यर्थः । नूतनधान्यहोमरहितमनाग्रयणम् । अहुतं तत्तत्कालहोमरहितम् । अवैश्वदेवं विश्वेदेवपूजारहितम् । आसम्यक् ऊर्ध्वान् सप्तमान् ऊर्ध्वसप्तलोकप्राप्तिस्तस्य न भवतीत्यर्थः ।। ३ ।।

**ध.टि.**—**विश्वेदेवपूजारहितमिति** ।। अविधिना हुतं विधिमतिक्रम्य हुतं सत्तस्य पुंसः आसप्तमान् भुवर्लोकापेक्षया सप्तमं वैकुण्ठं मर्यादीकृत्य विद्यमानान् सप्तलोकान् । आङो मर्यादार्थत्वे व्याख्यानमेतत् । अभिविध्यर्थत्वे तु भूलोकमारभ्य सप्तमभूतसत्यपर्यन्तान् भुवर्लोकमारभ्य सप्तमभूतवैकुण्ठलोकपर्यन्तान् लोकानिति वा । पुण्यवशेन प्रसक्तान् हिनस्ति विनाशयतीत्यर्थः । एतद्वाक्यं प्रकारान्तरेण व्याचष्टे— **आसम्यगित्यादिना** ।। ३ ।।

**वामन.टी.**—अथ तस्य दर्शादिनियमवर्जनेन महानेव दोष इत्याह— **यस्येति** ।। अतो विधिवदेव सर्वमनुष्ठेयमित्यर्थः ।। ३ ।।

**न.टी.**—प्रकृतस्याग्निहोत्रस्येति कर्तव्यं तदभावेऽनर्थकथनेनाह— **यस्येत्यादिना** ।। **अदर्शमपौर्णमासमिति** । अमावास्यापौर्णमास्योर्विशेषहोमरहितमित्यर्थः । नूतनधान्यहोमरहितमनाग्रयणम् । अहुतं तत्तत्कालहोमरहितम् । अवैश्वदेवं विश्वेदेवपूजारहितम् । आ सम्यक् ऊर्ध्वान् सप्तमान् लोकान् । ऊर्ध्वसप्तलोकप्राप्तिस्तस्य न भवतीत्यर्थः ।। ३ ।।

**रा.खं.**—अग्नौ क्रियमाणकर्मण इतिकर्तव्यतां विपक्षेऽनर्थकथनेनाह— **यस्येति**।। यस्य पुरुषस्याग्निहोत्रं दर्शपौर्णमासाग्रयणाख्येष्टित्रयानुष्ठानरहितमहुतं काले हुतं न भवति, अवैश्वदेवं वैश्वदेवकर्मरहितं, अविधिना हुतं च तस्य तत्कर्म आसप्तमान् भूलोकमारभ्य सप्तमभूतसत्यलोकपर्यन्तान् लोकान्, भुवर्लोकमारभ्य सप्तमभूत-वैकुण्ठलोकपर्यन्तानिति वा, हिनस्ति हिंसि हिंसायां नाशयति, ऊर्ध्वलोकास्तस्य न भवन्तीत्यर्थः । अतो दर्शपौर्णमासादिकमाहिताग्निना काले काले कार्यमिति भावः ।। ३ ।।

**स.टी.**—विपक्षे बाधकमुखेन कर्मकरण इत्थम्भावान्तरमाह— **यस्येति** ।। यस्याधिकारिणः अग्निहोत्रं अदर्शपौर्णमासं दर्शपूर्णमासरहितम् । अनाग्रायणं आग्रायणेष्टिविवर्जितम् । अतिथिवर्जितं तत्पूजारहितम् । अहुतं काले होमरहितम् । अवैश्वदेवं वैश्वदेवरहितम् । अविधिना हुतं विधिमतिक्रम्य हुतम् । तस्य आसप्तमान् लोकान् हिनस्ति विनाशयति । हिंसि हिंसायाम् । रुधादिभ्य श्नम् । श्नान्नलोपः ।। ३ ।।

**श्री.टी.**—तदेवाग्निहोत्रं सेतिकर्तव्यमन्यथानर्थकथनपूर्वकं निरूपयति— **यस्येति** ।। करणे षष्ठी । येन पुरुषेणाग्निहोत्रं अदर्शपौर्णमासं अमावास्यापौर्ण-मास्ययोः पिण्डपितृयज्ञादिविशेषहोमरहितम् । अनाग्रायणं नूतनधान्यसंस्काराय क्रियमाणाग्रायणेष्टिरहितम् । अतिथिवर्जितं तत्पूजारहितम् । अहुतं कालहोम-रहितम् । अवैश्वदेवं वैश्वदेवरहितम् । अविधिना हुतं विधिमतिक्रम्य हुतं सत् तस्य पुंसः सप्तमान् ऊर्ध्वान् सप्तलोकान् पुण्यवशेन प्रसक्तान् आ सम्यक् हिनस्ति विनाशयति । ऊर्ध्वसप्तलोकप्राप्तिस्तस्य न भवतीत्यर्थः । तथाचाग्निहोत्रं कुर्वता दर्शपौर्णमास्यादीनि कार्याणि तेषां तदङ्गत्वादित्युक्तं भवति ।। ३ ।।

**उ.टी.**—एवं ब्रह्मचर्याद्याश्रमत्रययोग्या अग्निकार्योपासनाग्निहोत्रादिहोमा विहिताः । तेषां च नित्यत्वं विधिपूर्वकत्वं च समर्थनीयम् । एवमग्निहोत्रस्य दर्शादिसाहित्य

एव सफलत्वं नान्यथा अतस्तदपि समर्थनीयम् । तदर्थं विपक्षे बाधकमाह— **यस्येति** ।। कर्तरि षष्ठीयम् । अहुतमित्यत्र हुतमिति भावे क्तः । अर्थाभावेऽव्ययीभावोऽयम् । होमाभाव इत्यर्थः ।। **सप्तमानिति** ।। सप्तजिह्वा अस्य सन्तीति सप्तमानग्निः । 'मादुपधायाश्च मतोर्वोऽयवादिभ्य' इति मतुप्प्रत्ययमकारस्य वत्वाभावः । यवादिशब्दात्तन्निषेधात् । ततश्च यवमानितिवत्सप्तमानिति मतुप्प्रत्ययान्तरूपं युक्तम् । तदयमर्थः—सप्तमानग्निः यस्याधिकारिणः अहुतं होमाभावः येनाधिकारसत्त्वेऽपि अग्निकार्यादिहोमो न क्रियत इति यावत् । तस्य लोकान् स्वर्गादीन् । आ सम्यक् । हिनस्ति नाशयति । प्रतिबन्धको भवतीति यावत् । तदुक्तम्—-"नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तमे"ति । एवं सप्तमान् अग्निः यस्य येन अविधिना हुतं गृह्याद्युक्तविधिना अहुतम् । भावे क्तः । अग्निकार्यादिहोमो न कृतः । तस्य लोकान् हिनस्ति । एवं यस्याग्निहोत्रं अदर्शमपौर्णमासं च । दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् इति कोशात् । दर्शयागरहितं पौर्णमासयागरहितं च । अनाग्रयणं आग्रयणेष्टिरहितं आग्रयणनामकनूतनधान्यद्रव्यकेष्टिरहितम् । अतिथिवर्जितम् । स्वयमेव गृहं प्रत्यागतोऽतिथिः । अतिथिर्ना गृहागत इति कोशात् । तत्पूजारूपमनुष्ययज्ञरहितम् । अवैश्वदेवं वैश्वदेवपदमुपलक्षणम् । वैश्वदेववरुणप्रघाससाकमेधसुनासीरीयाख्यचातुर्मास्येष्टिरहितम् । यद्वा वैश्वदेवहोमरहितम् । उपलक्षणमेतत् । श्राद्धादिपितृयज्ञरहितम् । बलिहरणाख्यभूतयज्ञरहितम् । वेदाभ्यासाख्यब्रह्मयज्ञरहितं च । तस्य लोकान्हिनस्तीति पूर्ववत् । तथाचाग्निकार्यौपासनाद्यकरणे विधिं विनैव होमकरणे चानर्थसद्भावादग्निकार्यादिहोमा नित्या विधिपूर्वकं कर्तव्याश्च ।। ३ ।।

**आ.टी.**——प्रकृताग्निहोत्रस्येतिकर्तव्यं तदकरणे प्रत्यवायपूर्वकमाह— **यस्येत्यादिना** ।। अदर्शपूर्णमासं दर्शे यागत्रयं पौर्णमास्यां च यागत्रयं कार्यं तद्रहितमित्यर्थः । शरदादौ नूतनधान्यहोमः आग्रायणमुच्यते, तद्धीनमनाग्रायणम् । अतिथिपूजादिरहितम् । अहुतं तत्तत्कालहोमरहितम् । अवैश्वदेवं विश्वेदेवपूजा-

रहितम् । विष्णूद्दिष्टत्वादिविधिराहित्येन हुतं यस्य कर्तुरेतादृशमग्निहोत्रं भवति तस्य कुले पूर्वोत्तरान् आसप्तमान् सप्तमपर्यन्तपुरुषान् प्रति लोकानूर्ध्वलोकान् हिनस्ति । तेषामूर्ध्वलोकप्राप्तिर्नास्तीत्यर्थः ।। ३ ।।

**गू.टी.**—प्रकृतस्याग्निहोत्रस्येतिकर्तव्यं तदभावेऽनर्थकथनेनाह— **यस्येत्यादिना** ।। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति श्रुतेर्दर्शपूर्णमास्योः प्रत्येकं यागत्रयं विहितम् । तद्रहितं अदर्शपूर्णमासम् । नूतनधान्यहोमरहितमनाग्रयणम् । अतिथिपूजारहितम् । अहुतं तत्तत्कालहोमरहितं वैश्वदेवाख्यकर्मरहितं सर्वदेवपूजारहितम् । विश्वो देवः पूर्णो देवः हरिः तत्पूजारहितं वा । ईदृशमग्निहोत्रं यस्य येन विधिना चहुतं तस्य आसम्यक् ऊर्ध्वान् सप्तमान् लोकान् हिनस्ति । स्वर्गादूर्ध्वलोकप्राप्तिस्तस्य न भवतीत्यर्थः ।। ३ ।।

## उपनिषत्

**काली कराली च मनोजवा च**
**सुलोहिता या च सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वरुची च देवी**
**लेलायमाना इति सप्त जिह्वाः ।। ४ ।।**

**व्या.टि.**—कुत्र होमः कार्य इत्यपेक्षायां यदा लेलायते ह्यर्चिरित्युक्तमधिकरणं विवृण्वन्नाह— **कालीति** ।। ४ ।।

**ध.टि.**— ।। **कालीतीति** ।। 'दिवु क्रीडे'त्यादि धातोः देवीः द्योतमानेत्यर्थः । इदं कालीत्याद्युक्तसप्तजिह्वानामपि विशेषणम् । अत एवोत्तरत्रैतेषु यश्चरते भ्राजमानेष्वित्युक्तम् । एवंनामकाः लेलीयमानाः परिवर्तमानाः हव्यवाहनस्य सप्तजिह्वा इत्यर्थः ।। ४ ।।

**वामन.टी.**—अग्नेरर्चिषो विशेषानाह— **कालीति** ।। ४ ।।

**रा.खं.**——कुत्र होतव्यमित्यपेक्षायां यदा लेलायत इत्युक्तमधिकरणं विवृणोति — **कालीति** ।। विश्वरुची च देवीत्येका, भ्राजमानेषु दीप्यमानासु एतेषु एतासु जिह्वासु व्यत्ययात्, यथाकालमाहुतयः आहुतीः हूयमानहवींषि आददायन् आददानो यश्चरते कर्म कुरुते, यद्वा चरत इत्यस्य विवरणं—यथाकालं कालमनतिक्रम्य आहुतयः आहुतीः आददायन् आददानः कुर्वन्निति यावत् ।। ४ ।।

**स.टी.**——उक्तं होमाधिकरणं विवृणुते— **कालीति** ।। देवी द्योतमानेति सप्तजिह्वानां विशेषणम् ।। ४ ।।

**श्री.टी.**——कुत्र होमः कर्तव्य इत्याकांक्षायां यदा लेलायते ह्यर्चिरित्युक्तमधिकरणं विवृण्वन्नाह — **कालीत्यादिना** ।। 'दिवु क्रीडे'त्यादि धातोर्देवी द्योतमानेत्यर्थः । इदं कालीत्याद्युक्तसप्तजिह्वानामपि विशेषणम् । अत एवोत्तरत्रैतेषु यश्चरते भ्राजमानेष्वित्युक्तम् । इति एवं नामकाः लेलायमानाः परिवर्तमानाः हव्यवाहस्य सप्तजिह्वा इत्यर्थः ।। ४ ।।

**उ.टी.**—एवं दर्शादिहोमाख्यदेवयज्ञं वेदपाठाख्यब्रह्मयज्ञं श्राद्धादिपितृयज्ञं बलिहरणरूपभूतयज्ञं अतिथिपूजात्मकमनुष्ययज्ञं च विनाऽग्निहोत्रकरणेऽनर्थसद्भावात् दर्शादिसहितमेवाग्निहोत्रं कर्तव्यमिति भावः । यदा लेलायत इत्युक्तं विशदयन्नेव कर्मफलमप्याह— **कालीति मन्त्रद्वयेन** ।। या सुधूम्रवर्णा सा चेति योज्यम् । देवी द्योतमाना । विश्वरुची चेत्यन्वयः । इति अनेन प्रकारेण । सप्त लेलायमानाः दीप्यमानाः अग्नेर्जिह्वाः यास्सन्ति ।। ४ ।।

**आ.टी.**——दीप्ताग्निमध्ये होमः कार्य इत्युक्तं विवृणोति— **कालीति** ।। चशब्दः समुच्चये । या काली देवी सैका । या च कराली देवी साऽपरा । एवं मनोजवा सुलोहिता सुधूम्रवर्णा विष्फुलिङ्गिनी विश्वरूपा चेति सप्तजिह्वाः अग्नेः ताश्च लेलीयमानाः परिवर्तमानाः ।। ४ ।।

**गू.टी.**—यदा लेलायते ह्यर्चिरिति सुजिह्वा होतव्यमित्युक्ता जिह्वा आह— **कालीति** ।। कालीत्यादयः सप्तदेव्यः प्रकाशमानाः लेलायमानाः परिवर्तमानाः सप्त जिह्वाः सन्ति ।। ४ ।।

## उपनिषत्

**एतेषु यश्चरते भ्राजमानेषु**
**यथाकालं चाहुतयो ह्याददायन् ।**
**तं नयन्त्येताः सूर्यस्य रश्मयो**
**यत्र देवानां पतिरेकोऽधिवासः ।। ५ ।।**

**व्या.टि.**—भ्राजमानास्वेतासु जिह्वासु विषये । यश्चरत इत्युक्तमाचरणमेवाह- — **यथाकालमिति** ।। कालमनुसृत्येत्यर्थः । आददायन् आददत् । यथाकालं होतुः फलमाह— **तमिति** ।। एताः एते प्रसिद्धाः सूर्यस्य रश्मयः सूर्यरश्मिस्था देवाः । देवानां पतिरेको मुख्यः अधिवसन्त्यनेनेत्यधिवासः । मुख्याश्रय इति यावत् । यत्र तत्र तं नयन्तीति योजना ।। ५ ।।

**ध.टि.**—जिह्वाशब्दस्य स्त्रीलिङ्गत्वादाह— **भ्राजमानास्विति** ।। सप्तसु प्रथमेत्युक्तेः श्रुतौ आहुतयः आहुतीरित्यर्थः ।। ५ ।।

**वामन.टी.**—विष्णुयाजिनस्तल्लोकगतिप्रकारमाह— **एतेष्विति** ।। य एतेषु सप्तजिह्वात्मकेष्वर्चिषु भ्राजमानेषु दर्शाद्युक्ताहुतीश्चरते जुहोति, अथ यथाकालं सायम्प्रातरग्निहोत्राहुतीश्च अग्न्यादिदेवता आदापयन् तत्तन्मन्त्रेण जुहोति । अथच रुद्रादीन्द्रान्तानां कलाख्यदेवतानां समुदायः कालमित्युच्यते । अतस्तदनुसारेणेति यथाकालशब्दार्थः । तथाहि श्रुतिः— 'यो वा अग्निहोत्रं वैश्वदेवं षोडशकालं पशुषु प्रतिष्ठितं वेद' इत्याद्युक्त्वा 'रौद्रं गविसत्, वायव्यमुपासवसृष्टम्, आश्विनं दुह्यमानम्, सौम्यं दुग्धम्, वारुणमधिश्रितम्, पौष्णं समुदयन्तम्, मारुतं विष्यन्दमानम्, वैश्वदेवं बिन्दुमत्, मैत्रं शरो गृहीतम्, द्यावा-

पृथिवीयमुद्वासितम्, सावित्रं प्रक्रान्तम्, वैष्णवं ह्रियमाणम्, बार्हस्पत्यमुपसन्नम्, अग्नेः पूर्वाहुतिः, प्रजापतेरुत्तरा, ऐन्द्रं हुतम्, एतद्वा अग्निहोत्रं वैश्वदेवं षोडशकलम्' इत्यादिका । अग्नेरर्चिर्होमादिकमपि सूर्यरश्म्यनुसन्धानेन प्रातरग्निहोत्रम् । तथाच श्रुतिः 'उद्यन्नु खलु वा आदित्य आहवनीयेऽनु रश्मीन् सन्दधाति' इत्यादिका । 'तस्मादुदिते होतव्यम्' इति चोपरि । 'तं नयन्ति' इत्यादेरयमर्थः। तमेवं जुह्वतं यजमानमेता आहुतिमिश्राः सूर्यस्य रश्मयो देवाधिपतेर्विष्णोर्लोकं नयन्ति ।। ५ ।।

**न.टी.**——कुत्र होमः कार्य इत्यपेक्षायां यदा लेलायते ह्यर्चिरित्युक्तं अधिकरणं विवृण्वन्नाह— **कालीति** ।। भ्राजमानास्वेतासु जिह्वासु विषये । यश्चरत इत्युक्तमाचरणमेवाह— **यथाकालमिति ।।** कालमनुसृत्येति ।। आददायन् आददत् । यथाकालं होतुः फलमाह— **तमिति** ।। एताः एते प्रसिद्धाः सूर्यस्य रश्मयः सूर्यस्य रश्मिषु स्थिताः देवाः । देवानां पतिरेको मुख्यः । अधिवसन्त्यनेनेत्यधिवासो मुख्यश्रय इति यावत् । यत्र तत्र तं नयन्तीति योजना ।। ५ ।।

**रा.खं.**——यथाकालं सत्यज्ञानकामनयोक्तस्थानेषु होतुः फलमाह— **तमिति**।। एता एते प्रसिद्धाः सूर्यस्य रश्मयः रश्मिषु स्थिता देवाः, देवानां पतिरेको मुख्यः अधिवासोऽधिवसन्त्यत्रेत्यधिवासो मुख्याश्रयो यत्र तिष्ठति तत्र तं नयन्तीति ।। ५ ।।

**स.टी.**—— भ्राजमाने भ्राजमानेषु भ्राजमानासु । एतेषु एतासु पृथगाज्याहुतयो आज्याहुतीः आददायन् ददातेर्यङन्तात् लडादेशः छान्दसः ईत्वाभावश्च यथाकालं होतुः फलमाह— **तमिति** ।। तमधिकारिणं एता एते आहुतयः आहुतयः सन्तीत्याहुतयः मत्वर्थ इकारप्रत्ययः । स्वीकृताहुतय इति यावत् । सूर्यस्य रश्मयः रश्मिषु स्थिताः देवाः देवानां पतिः । अधिवसन्त्येनमित्यधिवासः । देवानां मुख्याश्रयः यत्र तत्र तं नयन्तीति योजना ।। ५ ।।

**श्री.टी.**——यो यजमानः भ्राजमानेषु 'भ्राजृ दीप्तौ' लिङ्गव्यत्ययेन दीप्यमानासु एतेषु एतासु सप्तजिह्वासु चरते । चरणमेव विवृणोति । यथाकालं तत्तत्कालानुसारेण आहुतयः आहुतीः देवतोद्देशेन आददायन् आददन् वर्तते । त एता गृहीताहुतयः सूर्यस्य रश्मयः सूर्यरश्मिषु स्थिता देवाः यत्र लोके देवानां पतिरेकः प्रधानः अधिवासोऽधिकाश्रयो मुख्याश्रय इति यावत् । वर्तते तत्र लोके तं लोकमिति यावत् । नयन्ति ।। ५ ।।

**उ.टी.**——भ्राजमानेषु भ्राजमानासु एतेषु एतासु जिह्वासु लिङ्गव्यत्ययश्छान्दसः । सामान्ये नपुंसकं वा । यः पुरुषः यथाकालं तत्तत्कर्माङ्गत्वेन विहित-कालमनतिक्रम्य आहुतयः व्यत्ययेन द्वितीयार्थे प्रथमा आहुतीः । आददायन् आसम्यक् मन्त्रो-च्चारणादिपूर्वकं ददायन् ददत्सन् । गुणरत्नमहोदधौ कण्ड्वादिराकृतिगण इत्युक्तम् । तेन कण्ड्वादिगणेऽपठितादपि ददा इत्यस्मात् आङ्पूर्वकात् 'कण्ड्वादिभ्यो यगि'ति यक्प्रत्यये 'सनाद्यन्ता धातव' इति धातुसंज्ञायां लट्प्रत्यये तस्य शत्रादेशे चाददायन्निति रूपं बोध्यम् । चरते करोति । कर्माणीति शेषः । तं नयन्तीत्यन्वयः । तत्र द्वे वाक्ये । सूर्यस्य रश्मय इत्येतद्विनैकं वाक्यं फलकथनार्थम् । अपरं वाक्यं एता इत्येतत्पदं विना तत्साधनकथनार्थम् । तथाहि—भागवतकर्मकर्तारो द्विविधाः । अप्रतीकालम्बनाः प्रतीकालम्बनाश्चेति । तत्राद्याः व्याप्तदर्शिनो देवादयः । यथोक्तम्—

अप्रतीका देवता हि ऋषीणां शतमेव च ।
राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ।।
एतेऽधिकारिणो व्याप्तदर्शनेऽन्ये नतु क्वचित् ।। इति ।।

प्रतीकालम्बनास्तु द्विविधाः । देहालम्बनाः प्रतीकालम्बनाश्चेति । तत्र ये देहान्तर्गत-भगवद्दर्शिनः ऋष्यादयो मध्यमाधिकारिणस्ते देहालम्बनाः । मध्यमाधिकारिणं देहान्तर्दर्शित्वं चोक्तं तत्त्वप्रकाशिकायाम् । आत्मन्येवात्मानं पश्येदित्यनेन मध्यमा-धिकारित्वं सूचितमिति । मनुष्योत्तमास्तु प्रतिमालम्बनाः । तत्रैता आहुतयः । आहुतिशब्दो भावसाधनः । होमा इत्यर्थः । स्ववर्णाश्रमोचितयज्ञदानतपःकर्मा-

णीति परमार्थः । तं यजमानम् । अप्रतीकालम्बनमिति यावत् । यत्र वैकुण्ठे देवानामेकः पतिः मुख्यस्वामी विष्णुः अधिवासः अधिको वासो यस्य सः इतरलोकापेक्षया आधिक्येन वसति । तं विष्णुलोकं नयन्ति प्रापयन्ति । "अप्रतीकाश्रया ये हि ते यान्ति हरिमेव तु" इत्युक्तेः । एवं तं देहालम्बनं प्रतिमालम्बनं च यजमानम् । यत्र सत्यलोके देवानां पतिः चतुर्मुखोऽधिवासः। उक्तार्थमेतत् । तं सत्यलोकं नयन्ति । तदुक्तं । प्रतीकं देहादिकं तद्गतमेव ये नराः उपासते ते पुरतः समाप्नुयुः । ब्रह्माणमिति । इयांस्तु विशेषः—देहालम्बनः सत्यलोकमेव गच्छति । "स्वदेहे ब्रह्म दृष्ट्वैव गच्छेद्ब्रह्मसलोकतामि"त्युक्तेः । प्रतिमालम्बनास्तु महरादिलोके वसन्ति । "अपक्का ये न ते यान्ति वायुं वा हरिमेव वा । स्थनमात्राश्रिता" इत्युक्तेः । प्रतिमालम्बनोऽपि महरादिलोके बहुकालमुषित्वा संकर्षणमुखाग्निना भूलोकादिदाहे जायमाने सत्यलोकमेव गच्छति । तेन देहादिकमित्यनुव्याख्याने प्रतिमालम्बनस्य विष्णुलोकप्राप्तेः पूर्वं चतुर्मुखलोक-प्राप्त्युक्तावपि न विरोध इति ध्येयम् । ज्ञानफलेनैव कर्मणां सफलत्वमिति दर्शयितुं कर्मणां विष्ण्वादिलोकप्राप्तिहेतुत्वोक्तिरिति ध्येयम् । ननु कथमुक्तयजमानस्य विष्ण्वादिलोकप्राप्तिः । देहाद्यनिष्टवत्वभावादित्यतो द्वितीयं वाक्यं चरमदेहनाशो-पपादनार्थं प्रवृत्तम् । तत्र सूर्यस्य सूरिप्राप्यत्वेन सूर्यनामकस्य विष्णोः रश्मयः तेजांसि यत्र हृदयदेशे देवानामेकः पतिः विष्णुरधिवसति । तं हृदयदेशं नयन्ति । धातूनामनेकार्थत्वात् प्रकाशयन्ति । तदा देवानामित्याद्युक्तो हृदयस्थो विष्णुस्तं त्रिविधं यजमानमादाय स्वतेजःप्रकाशितहृदयाग्रद्वारेण नयन्ति । वचनव्यत्ययः नयति । हृदयाद्बहिर्निष्क्रामति । यथोक्तं—

..........तदा विष्णोः स्वतेजसा ।
द्योतते हृदयाग्रं च तेन द्वारेण केशवः ।।
निष्क्रामेज्जीवमादाय.......... ।। इति ।। ५ ।।

**आ.टी.**——भ्राजमानेषु पूतेषु देदीप्यमानासु एतासु जिह्वासु यथाकालं विहितकाले आहुतयः आहुतीः आददायन् हावयन् यः पुमांश्चरते अग्निहोत्रं करोति । तं

निष्कामकर्मकर्तारं सूर्यस्यैताः रश्मयः रश्म्यभिमानिदेवाः यत्र यस्मिन्देशे देवानां स्वेषामधिवास आश्रयः एको मुख्यः पतिः स्वामी सूर्योऽस्ति तत्र नयन्ति ।। ५ ।।

**गू.टी.**——भ्राजमानेषु एतेषु जिह्वारूपवस्तुषु यथाकालं कालमनुसृत्य आहुतयः आहुतीः आददायन् आददत् यो यजमानश्चरते कर्म करोति तं एता एते प्रसिद्धाः सूर्यस्य रश्मयः सूर्यरश्मिस्थाः देवाः । देवानां पतिः एको मुख्यः अधिवसन्त्यनेनेत्यधिवासः मुख्याश्रयो हरिः यत्र लोकोऽस्ति तत्र नयन्तीति योजना ।। ५ ।।

## उपनिषत्

**एह्येहीति तमाहुतयः सुवर्चसः**
**सूर्यस्य रश्मिभिर्यजमानं वहन्ति।**
**प्रियां वाचमभिवन्दन्त्योऽर्चयन्त्य**
**एष वः पुण्यः सुकृतो ब्रह्मलोकः ।। ६ ।।**

**व्या.टि.**——नयनप्रकारमेव विवृण्वन्नाह— **एहीति** ।। आहुतयः स्वीकृताहुतयः एष वः पुण्य इत्यादिकां प्रियां वाचमभिवदन्त्योऽर्चयन्त्यः सुवर्चसो देवताः । स्वाधिष्ठितैः सूर्यस्य रश्मिभिः यजमानं एह्येहीत्युक्त्वा वहन्तीति योजना ।। ६ ।।

**ध.टि.**——।। **वहन्तीति** ।। विमानारोहणेन नयन्तीत्यर्थः ।। ६ ।।

**न.टी.**——नयनप्रकारमेव विवृण्वन्नाह— **एहीति** ।। आहुतयः स्वीकृताहुतयः एष वः पुण्य इत्यादिकां प्रियां वाचमभिवदन्त्योऽर्चन्त्यः सुवर्चसो देवताः स्वाधिष्ठितैः सूर्यरश्मिभिः यजमानं एह्योहीत्युक्त्वा वहन्तीति योजना ।। ६ ।।

**रा.खं.**——नयनप्रकारमेवाह— **एह्येहीति** ।। आहुतयः आहूयमानाः, स्वीकृतहविर्भागा इति यावत्, सुवर्चसः शोभनवर्चस्काः देवाः स्वाधिष्ठानभूतैस्सूर्यस्य रश्मिभि-

र्यजमानं वहन्ति । कथम्? एह्येहि वः पुण्यः पुण्यसाध्यः, तस्य विवरणम्—सुकृतः ब्रह्मलोकः परब्रह्मलोक इति प्रियां वाचमभिवदन्त्योऽभिवदन्तः अर्चयन्त्यः पूजयन्तः वहन्तीति ।। ६ ।।

**स.टी.**——नयनप्रकारमेव विवृणुते— **एहीति** ।। आहुतयः स्वीकृताहुतयः एष वः पुण्य इत्यादिकां प्रियां वाचं अभिवदन्त्यश्चार्चयन्त्यः सुवर्चसः दैवाधिष्ठितैः सूर्यस्य रश्मिभिः यजमानमेहीत्युक्त्वा वहन्तीति योजना । सत्यं भगवान् तत्कामाः कर्माण्याचरथेति यदभ्यधाः तदयुक्तमिवाभाति । तत्र सत्यपदस्य भगवद्विषयकत्वे प्रमाणाभावात् । प्रत्युत तस्मादेतद्ब्रह्मनाम रूपमन्नं च जायत इति ब्रह्मशब्देन हिरण्यगर्भस्य प्रसक्तत्वाच्च सत्य इति वायुस्तदिति प्राण इति श्रुतेः इत्यैतरेय-भाष्याभिधानेनोमागिरीशन्यायेन वायुवाचकशब्दस्य हिरण्यगर्भे प्रवृत्तिसम्भवाच्च । नैष दोषः । एष वः पुण्यः सुकृतो ब्रह्मलोक इति विष्णुलोकस्य प्राप्यत्वश्रवणेन तत्साधनभूतसत्यादिगोचरकर्मणोऽपि भगवद्विषयकताया एव वक्तव्यत्वात् ।। ६ ।।

**व.टी.**——भगवदर्थत्वेन कृतानामृषिः फलमाह— **एष वः पुण्यः सुकृतो ब्रह्मलोक इति** ।। ६ ।।

**श्री.टी.**——नयनप्रकारमेव विवृण्वन्नाह— **एह्येहीति** ।। तं यजमानमाहुतयः स्वीकृताहुतयः भगवद्विषयकपुण्यकर्मानुष्ठातॄणां भवतामेषः प्रमाणप्रमितः पुण्यः भगवद्विषयकपुण्यकर्मानुष्ठानलभ्यो ब्रह्मलोकः परब्रह्मलोकः सु सम्यक् कृतः सिद्धोऽस्ति । अतस्तं प्रति त्वमेह्येहीति प्रियां वाचमभिवदन्त्यः अर्चयन्त्यस्तं पूजयन्त्यः सुवर्चसः सुष्ठु वर्चोविशेषवत्यो देवताः स्वाधिष्ठितैः सूर्यस्य रश्मिभिः तन्मार्गविशेषैरिति यावत् । सूर्यद्वारेणेति वक्ष्यमाणत्वात् । वहन्ति नयन्ति ब्रह्मलोकं प्रापयन्तीत्यर्थः ।। ६ ।।

**उ.टी.**—एवं हृदयादुत्क्रमणमुक्तम् । इदानीं हृदयादुत्क्रान्तस्य देहादुत्क्रान्तिं विष्ण्वादिलोकप्राप्त्यर्थमर्चिरादिमार्गं चाह— **एह्येहीति** ।। अत्रापि वाक्यद्वयम् ।

निष्कामकर्मकर्तारं सूर्यस्यैताः रश्मयः रश्म्यभिमानिदेवाः यत्र यस्मिन्देशे देवानां स्वेषामधिवास आश्रयः एको मुख्यः पतिः स्वामी सूर्योऽस्ति तत्र नयन्ति ।। ५ ।।

**गू.टी.**——भ्राजमानेषु एतेषु जिह्वारूपवस्तुषु यथाकालं कालमनुसृत्य आहुतयः आहुतीः आददायन् आददत् यो यजमानश्चरते कर्म करोति तं एता एते प्रसिद्धाः सूर्यस्य रश्मयः सूर्यरश्मिस्थाः देवाः । देवानां पतिः एको मुख्यः अधिवसन्त्यनेने-त्यधिवासः मुख्याश्रयो हरिः यत्र लोकोऽस्ति तत्र नयन्तीति योजना ।। ५ ।।

## उपनिषत्

**एह्येहीति तमाहुतयः सुवर्चसः**
**सूर्यस्य रश्मिभिर्यजमानं वहन्ति।**
**प्रियां वाचमभिवन्दन्त्योऽर्चयन्त्य**
**एष वः पुण्यः सुकृतो ब्रह्मलोकः ।। ६ ।।**

**व्या.टि.**——नयनप्रकारमेव विवृण्वन्नाह— **एहीति** ।। आहुतयः स्वीकृताहुतयः एष वः पुण्य इत्यादिकां प्रियां वाचमभिवदन्त्योऽर्चयन्त्यः सुवर्चसो देवताः । स्वाधिष्ठितैः सूर्यस्य रश्मिभिः यजमानं एह्येहीत्युक्त्वा वहन्तीति योजना ।। ६ ।।

**ध.टि.**——।। **वहन्तीति** ।। विमानारोहणेन नयन्तीत्यर्थः ।। ६ ।।

**न.टी.**——नयनप्रकारमेव विवृण्वन्नाह— **एहीति** ।। आहुतयः स्वीकृताहुतयः एष वः पुण्य इत्यादिकां प्रियां वाचमभिवदन्त्योऽर्चन्त्यः सुवर्चसो देवताः स्वाधिष्ठितैः सूर्यरश्मिभिः यजमानं एह्योहीत्युक्त्वा वहन्तीति योजना ।। ६ ।।

**रा.खं.**——नयनप्रकारमेवाह— **एह्येहीति** ।। आहुतयः आहूयमानाः, स्वीकृतहवि-र्भागा इति यावत्, सुवर्चसः शोभनवर्चस्काः देवाः स्वाधिष्ठानभूतैस्सूर्यस्य रश्मिभि-

र्यजमानं वहन्ति । कथम्? एह्येहि वः पुण्यः पुण्यसाध्यः, तस्य विवरणम्—सुकृतः ब्रह्मलोकः परब्रह्मलोक इति प्रियां वाचमभिवदन्त्योऽभिवदन्तः अर्चयन्त्यः पूजयन्तः वहन्तीति ।। ६ ।।

**स.टी.**——नयनप्रकारमेव विवृणुते— **एहीति** ।। आहुतयः स्वीकृताहुतयः एष वः पुण्य इत्यादिकां प्रियां वाचं अभिवदन्त्यश्चार्चयन्त्यः सुवर्चसः दैवाधिष्ठितैः सूर्यस्य रश्मिभिः यजमानमेहीत्युक्त्वा वहन्तीति योजना । सत्यं भगवान् तत्कामाः कर्माण्याचरथेति यदभ्यधाः तदयुक्तमिवाभाति । तत्र सत्यपदस्य भगवद्विषयकत्वे प्रमाणाभावात् । प्रत्युत तस्मादेतद्ब्रह्मनाम रूपमन्नं च जायत इति ब्रह्मशब्देन हिरण्यगर्भस्य प्रसक्तत्वाच्च सत्य इति वायुस्तदिति प्राण इति श्रुतेः इत्यैतरेय-भाष्याभिधानेनोमागिरीशन्यायेन वायुवाचकशब्दस्य हिरण्यगर्भे प्रवृत्तिसम्भवाच्च । नैष दोषः । एष वः पुण्यः सुकृतो ब्रह्मलोक इति विष्णुलोकस्य प्राप्यत्वश्रवणेन तत्साधनभूतसत्यादिगोचरकर्मणोऽपि भगवद्विषयकताया एव वक्तव्यत्वात् ।। ६ ।।

**व.टी.**——भगवदर्थत्वेन कृतानामृषिः फलमाह— **एष वः पुण्यः सुकृतो ब्रह्मलोक इति** ।। ६ ।।

**श्री.टी.**——नयनप्रकारमेव विवृण्वन्नाह— **एह्येहीति** ।। तं यजमानमाहुतयः स्वीकृताहुतयः भगवद्विषयकपुण्यकर्मानुष्ठातॄणां भवतामेषः प्रमाणप्रमितः पुण्यः भगवद्विषयकपुण्यकर्मानुष्ठानलभ्यो ब्रह्मलोकः परब्रह्मलोकः सु सम्यक् कृतः सिद्धोऽस्ति । अतस्तं प्रति त्वमेह्येहीति प्रियां वाचमभिवदन्त्यः अर्चयन्त्यस्तं पूजयन्त्यः सुवर्चसः सुष्ठु वर्चोविशेषवत्यो देवताः स्वाधिष्ठितैः सूर्यस्य रश्मिभिः तन्मार्गविशेषैरिति यावत् । सूर्यद्वारेणेति वक्ष्यमाणत्वात् । वहन्ति नयन्ति ब्रह्मलोकं प्रापयन्तीत्यर्थः ।। ६ ।।

**उ.टी.**—एवं हृदयादुत्क्रमणमुक्तम् । इदानीं हृदयादुत्क्रान्तस्य देहादुत्क्रान्तिं विष्ण्वादिलोकप्राप्त्यर्थमर्चिरादिमार्गं चाह— **एह्येहीति** ।। अत्रापि वाक्यद्वयम् ।

तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्तीत्येकवाक्यं देहादुत्क्रान्तिप्रतिपादकम् । तस्यायमर्थः—सुवर्चसः शोभनं वर्चो यासां तथाविधाः आहुतयः। भागवतकर्माणीति यावत् । तं त्रिविधं यजमानम् । सूर्यस्य प्रसिद्धस्य । रश्मिभिः नाडीस्थरश्मिभिः । तदुक्तम्— सहस्रं वा आदित्यस्य रश्मयः आसु नाडीष्वातताः तत्र श्वेतः सुषुम्नो ब्रह्मयानः । "सुषुम्नायामाततः तेन प्रकाशेनैव निष्क्रामति" इति । ततश्च नाडीस्थरश्मिप्रकाशितनाड्यन्तर्मार्गेणेति लभ्यते । देहादुत्क्रान्तं त्रिविधं यजमानम् । तं बुद्धिस्थं तुरीयं वहन्ति प्रापयन्ति । भागवतकर्मसामर्थ्येन हृदयादुत्क्रान्तो जीवः सूर्यरश्मिप्रकाशितनाड्यन्तर्मार्गेण गच्छन् देहादुत्क्रम्य तुरीयं प्राप्नोतीति यावत् । तदुक्तम्—

विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः ।
मुक्तानां प्राप्यरूपोऽसौ........... ।। इति ।।

अत्र नाडीष्वपि विशेषोऽस्ति । सुषुम्ना पञ्चप्रभेदयुक्ता ।

मध्ये सुषुम्ना विज्ञेया वज्रिकार्याप्रकाशिनी ।
वैद्युता ब्रह्मनाडीति सैवं पञ्चप्रभेदिनी ।।

पृष्ठवामाग्रदक्षान्तर्भेदादिति । तथाचाप्रतीकालम्बनः सुषुम्नामध्यगतब्रह्मनाड्यन्तर्मार्गेण गच्छन् मूर्घ्नो निष्क्रामति । तदुक्तम् "विष्णोर्लोकं परं गच्छन्निष्क्रमेन्मूर्ध्न एव तु" इति । अत्र गच्छन्नित्यतः प्राक् ब्रह्मनाड्यन्तर्मार्गेणेति शेषः । तेनाभिमतार्थसिद्धिः । देहालम्बनस्तु ब्रह्मनाडीभिन्नसुषुम्नाप्रभेदनाड्यन्तर्मार्गेण गच्छन्देहादुत्क्रामति । "तथैव ब्रह्मणो लोकं सुषुम्नायाविभेदतः" इत्युक्तेः । प्रतिमालम्बनस्तु पिङ्गलानाड्यन्तर्मार्गेण गच्छन्देहादुत्क्रामति । "देवयानं पिङ्गलाभिर्विषुवत्तां सुषुम्नया" इति भागवते । सुषुम्नया केचिद्गच्छन्तीत्येव सुषुम्नया ये गच्छन्ति तद्भिन्नानां पिङ्गलानाड्या गमनोक्त्या परिशेषादिति ज्ञेयम् । एवं देहादुत्क्राम्य तुरीयं प्राप्तस्य ज्ञानिनोऽर्चिरादिमार्गं प्रतिपादयितुं सूर्यरश्मिभिरित्येतद्विना अपरं वाक्यम् । तस्यार्थः—सुवर्चसः मार्गप्रापकत्वं सूचयितुं विशेषणमेतत् । आहुतयः आहूयते हविरादिकमाभ्य इति सम्प्रदाने क्तिन्प्रत्ययः । होमसम्प्रदानदेवता अर्चिराद्याः

केषाञ्चिद्धोमसम्प्रदानत्वाभावेऽपि छत्रिन्यायेन होमसम्प्रदानत्वं युक्तमिति बोध्यम् । अर्चिरादिदेवाश्च ।

उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः ।।
ततोऽहःपूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ।।
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ।।

इति सूत्रभाष्योक्ता ज्ञेयाः ।। ततश्चार्चिराद्याः प्रधानवाय्वन्ताः देवताः । ब्रह्मलोकः परब्रह्मलोकः यस्मात्सुकृतः पुण्यः भगवद्विषयत्वेन कृतं यत्पुण्यं तेन साध्यः यूयं च भागवतकर्माणः तस्माद्वो युष्माकमप्रतीकालम्बनानाम् । एषः अस्मदधिष्ठित-लोकमार्गेण गम्यः । व इति बहुवचनं गौरवात् । अन्यथा तमित्येकवचनानुपपत्तेः । एवं ब्रह्मलोकश्चतुर्मुखलोकः । वः देहालम्बनानाम् । एषः अस्मदधिष्ठितलोक-मार्गेण गम्यः । एवमेव महरादिलोकः । वः प्रतिमालम्बनानाम् । एषः अस्मद-धिष्ठितलोकमार्गेण गम्यः । तस्मात् हे अप्रतीकालम्बन । हे देहालम्बन । हे प्रतिमालम्बन । त्वं अस्मल्लोकमेहि । आदराद्विर्वचनम् । 'सम्भ्रमस्त्वादरे भय' इति आदरभयरूपसम्भ्रमेण प्रवृत्तौ द्वे वाच्ये इति वार्तिकात् । एह्येहीति तं यजमानं प्रति । प्रियां वाचमभिवदन्त्यः अर्चयन्त्यः स्वलोकप्राप्तं यजमानं पूजयन्त्यश्च सत्यस्तं बुद्धिस्थं उत्तरोत्तरलोकस्थं आतिवाहिकादिदेवं विष्ण्वादिकं च वहन्ति प्रापयन्ति । अत्र प्रधानवायोः साक्षादेव परापरब्रह्मप्रापकत्वम् । अर्चिरादीनां त्वातिवाहिकादिदेवताप्राणद्वारा परब्रह्मादिप्रापकत्वम् । तेन वहन्तीत्यादिबहुवचनोपपत्तिरिति विवेचनीयम् ।। ६ ।।

**आ.टी.**——आहुतयः ये पूर्वमाहुताः स्वीकृताहुतयश्च ते सुवर्चसः सुकान्तिमन्तो देवाः सूर्यरश्म्यभिमानिदेवैः करणैः पुण्यः पावनः एषः सुकृतः ज्ञानपूर्वकनिष्काम-यज्ञप्राप्यो ब्रह्मलोकः परब्रह्मलोकः वः युष्माकं प्राप्तस्तं प्रति 'त्वं एहि एहि' इति

प्रियां वाचं वाक्यं अभिवदन्त्यः अर्चयन्त्यः वाचिकादिपूजां कुर्वन्तः सन्तः तं यजमानं तं लोकं वहन्ति प्रापयन्ति ।। ६ ।।

**गू.टी.**——नयनप्रकारमेव विवृण्वन्नाह— **एहीति** ।। आहुतयः स्वीकृताहुतयो देवाः । एषः पुण्यः पुण्य लक्ष्यः ब्रह्मलोको हरिलोकः वः सुकृतः युष्माकं प्राप्त इत्यादिप्रियां वा चमभिवदन्त्यः वाचा चार्चयन्त्यः सुवर्चसश्च देवताः स्वाधिष्ठितैः सूर्यस्य रश्मिभिः तं यजमानं गुहीत्युक्त्वा वहन्ति । ब्रह्मलोकं वहन्तीत्यर्थः ।। ६ ।।

## भाष्यम्

**भगवद्विषयत्वेन कृते एष वः पुण्यः सुकृतो ब्रह्मलोकः । परब्रह्मलोकः ।**

**निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ।**
**निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ।।**
**—इति व्यासस्मृतौ ।।**

**स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते ।।**
**— इति च श्रुतिः ।।**

**'सहयज्ञाः प्रजाः सृष्ट्वा' इत्युक्त्वा,**

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।। इति च ।।**

**यान्ति मद्याजिनोऽपि माम् ।। इति च ।**

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। इति च ।।**

**यस्त्वात्मरतिः इत्युक्त्वा कुर्याद्विद्वांस्तथा सक्तः इत्येवोक्तत्वाच्च ।**

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ।। इति च ।।**

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।।**

**इत्युक्तत्वाच्च नात्राश्रमान्तरविरोधः । त्रेतायां बहुधा सन्ततानि, कृते त्वेकप्रकारेणैव सन्ततानि ।**

**अग्निष्टोमादिभिर्यज्ञैः सर्वदेवस्थितं हरिम् ।**
**यजन्ति तांश्च कारित्वाद्वसुस्तस्मात्तथायजत् ।।**

**पृथक् पृथक् च त्रेतायां यजन्ते देवतागणान् ।**
**यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः ।। इति पाद्मे ।।**

**यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः ।**
**यो देवानां देवतमो जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमि ।।**

**एवं वायोः पितरं विष्णुमेव**
**यजन्ति देवैः सह ये कृते जनाः ।**
**एवं त्रेतायां केचिदन्ये पृथक् ता-**
**निष्ठा विष्णावपर्यन्ते नचान्ये ।। —इति च ब्रह्माण्डे ।।**

**व्या.टी.**—एष वः पुण्य इत्यत्र यज्ञादिसामर्थ्यादेव ब्रह्मलोको भवतीति प्रतीयते तां निवारयन्नाह— **भगवदिति** ।। कृते कर्मणीति शेषः । ब्रह्मलोकः चतुर्मुखलोक इति प्रतीतिं निवारयति— **परेति** । भगवद्विषयतया कर्म कर्तुः परब्रह्मप्राप्तिर्भवतीति कुतः सिद्धम् । येन कर्म तथा करणीयमित्यत आह— **निष्काममिति** ।। कर्मेति ग्राह्यम् । तत्रैवार्थे श्रुतिं पठति— **स य इति** ।। लोकमाश्रयम् । ननु मुमुक्षोः कर्मैव नापेक्षितं मोक्षस्य नैष्कर्म्यसिद्धत्वादित्यत आह— **सहेति** ।। सह यज्ञा इत्युपक्रम्य स्वकर्मकर्तुश्चक्रप्रवर्तकत्वेन मुच्यन्ते तेऽपि कर्मभिरिति फलमुक्त्वा एवं प्रवर्तितं चक्रमिति स्वकर्माकरणेन चक्राप्रवर्तकस्य निन्दितत्वाच्च न मुक्तेः कर्मानपेक्षेत्यर्थः । मुमुक्षोर्ब्रह्मप्राप्त्यै सर्वथा कर्मणा भाव्यमित्येतत्प्रमाणान्तराभ्यां समर्थयते— **यान्तीति** ।। **अहं हीति** ।। यद्वा स्वकर्म भगवद्विषयं कृतं तत्प्राप्तिकारणमित्येतत्प्रमाणाभ्यां द्रढयन्नाह— **यान्तीति** ।। **अहं हीति** ।।

ननु मुमुक्षोर्ज्ञानिनः स्वकर्म नापेक्षितम् । तस्य यस्त्वात्मरतिरेव स्यादित्यत्र तन्निषेधादिति । मैवम् । तस्य मुक्तविषयत्वात् । कुत एवं कल्प्यमित्यत आह-— **यस्त्विति** ।। यस्त्वात्मरतिरित्युक्त्वाप्युत्तरत्र कुर्याद्विद्वानित्युक्तत्वात्तन्मुक्त-विषयमवगम्यत इत्यर्थः । कुर्याद्विद्वानिति विधिसरूपं न विधिः । अकरणे बाधकाभावादित्यत आह— **ये त्विति** ।। ननु मुमुक्षोः कर्मणः कर्तव्यत्वे यत्याश्रमिणस्तदभावात्तस्य मोक्षो न स्यादित्यतो विरोधं व्यवस्थापकवाक्यं पठित्वा शमयति— **लोक इति** ।। अस्मिंल्लोके द्विविधा मुमुक्षुजनास्सन्ति । ज्ञानयोगिनः कर्मयोगिनश्चेति । ज्ञानप्रचुरयोगेन साङ्ख्यानां सनकादीनां ज्ञानयोगिनां निष्ठा पुरा मया प्रोक्ता । कर्मप्रचुरयोगेन जनकादीनां कर्मयोगिनामिति निष्ठा-द्वयस्योक्तत्वात् यतेरपि स्वाश्रमोचितकर्मभावान्नोक्तविरोध इत्यनुवदंस्त्रेतायामित्यस्य व्यावर्त्यमाह— **त्रेतायामिति** ।। एकप्रकारेण एकविषयकत्वेन । एकप्रकारेण सन्ततत्वं साधितमपि प्रसङ्गात्प्रमाणान्तरेण द्रढयति— **अग्निष्टोमेति** ।। ननु कथं कृते कर्मणामेकविषयत्वेन सन्तत्वम् । इन्द्रादिनामभिर्यजनादित्यत आह-— **यमिन्द्रमिति** ।। एभ्यः एभिर्देवैः सह । तस्मै जुहोमि । इन्द्रादिनाम्नां विष्णु-वाचकत्वाद्देवतादीनां कञ्चुकमात्रत्वात्कर्मणामेकविषयत्वं युक्तमित्यर्थः ।।

**ध.टि.**— ।। **कर्मसामर्थ्यादेव ब्रह्मलोक इति प्रतीयत इति** ।। तथात्वे "ईयुस्त्रीन्कर्मणा लोकान् ज्ञानेनैव तदुत्तरान्" "न कर्मभिस्तां गतिमाप्नुवन्ति" "विद्या तपो योगसमाधि-भाजामि"त्यादिवाक्यविरोधापत्तेरिति भावः ।। **कर्मणीति शेष इति** ।। तथा च वो भवतां एषः प्रमाणप्रमितः पुण्यः भगवद्विषयककर्मा-नुष्ठानपुण्यलभ्यो ब्रह्मलोकः स सम्यक्कृतः । सिद्धोऽस्तीति तद्वाक्यार्थो द्रष्टव्यः। **चतुर्मुखस्य लोक इति प्रतीतिमिति** ।। "देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपी"ति वचनविरोधादित्यभिप्रायः ।। **परेतीति** ।। अत्र ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात् तल्लोक एव ब्रह्मलोकशब्देनोच्यत इत्याशयः । ज्ञानपूर्वकमित्यत्र विशेष्याभावादाह— **कर्मेति ग्राह्यमिति** ।। **स य इतीति** ।। सः प्रसिद्धो योऽधिकारी । लोकं सर्वाश्रयं परमात्मानमुपास्ते जानाति चास्य कर्मज्ञानादि-

पूर्वमनेनानुष्ठितं कर्मेति यावत् । न क्षीयते अपरोक्ष-ज्ञानद्वारा अक्षयभगवल्लोकफलकं भवतीति श्रुत्यर्थो द्रष्टव्यः ।। **नैष्कर्म्यसिद्धत्वादिति** ।। नैष्कर्म्यसिद्धिं परमामित्यादिना न विद्यते कर्म कारणं यस्यासौ निष्कर्मा पुरुषस्तत्सम्बन्धिनी सिद्धिर्हि नैष्कर्म्यसिद्धिरिति मोक्षस्य कर्मानपेक्षत्वावगमादिति भावः ।। **सहेतीति** ।। भाष्ये इत्युक्त्वा इत्येवोक्तत्वाच्च । इति च निन्दनादिति शेषः । तद्व्याचष्टे— **सहयज्ञा इत्यादिना** ।। मुमुक्षुणा वर्णाश्रमविहितस्य कर्मणः कर्तव्यत्वे सहयज्ञा इत्युपक्रम्य सहयज्ञा इत्यादिना स्तुतिनिन्दारूपार्थवादमुक्त्वा स्वकर्मकर्तुः वर्णाश्रमविहितकर्मकर्तुः अन्नाद्भवन्ति भूतानीत्याद्युक्तचक्रप्रवर्तकत्वेन फलमुक्त्वा कर्महानिरूपं मोक्षाख्यफलमुक्त्वा निन्दितत्वादिति । "अघायुरिन्द्रियारामो मोघं पार्थ स जीवती"ति अघायुष्ट्वाद्युक्तेरिति भावः । तथाच काम्यकर्मरहित-पुरुषसिद्धित्वादेव मोक्षस्य नैष्कर्म्यसिद्धित्वं नैष्कर्म्यसिद्धिं परमामित्यत्राभिप्रेतम् । अतो न तद्विरोध इत्यभिप्रायः ।। **यान्तीति** ।। **अहं हीतीति** ।। प्रमाणद्वयस्य प्रतीकग्रहणम् । मद्याजिनः मद्विषयककर्मकर्तारः । अहं हीत्यत्र भगवतः सर्वयज्ञ-भोक्तृत्वेन सर्वकर्मणां भगवद्विषयत्वावगमात् तत्त्वेन तदजानतां लोकाच्च्युतिवचनेन सर्वयज्ञभोक्तृत्वादिना भगवन्तं ज्ञात्वा कर्मकर्तॄणां च्युतिरहितलोकप्राप्तिरर्थसिद्धा च्युतिरहितलोकश्च भगवल्लोक एव नान्यः । तथाच भगवद्विषयककर्मणां भगवल्लोक-प्राप्तिरित्ययमर्थो लभ्यते इति भावः ।। **तन्निषेधादिति** ।। तस्य कार्यं कर्म न विद्यते इति कर्तव्याभावोक्तेरित्यर्थः ।। **यस्त्वात्मरतिरित्युक्त्वापीति** ।। अत्र मुक्तस्यैव कर्तव्याभाव उच्यते ।। यथोक्तम्—

यस्त्वेवात्मरतो मुक्तः क्रिया तस्यैव नास्ति हि ।
अतः कुर्वेव कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् ।। इति ।।

एवमुक्तस्यैव कर्तव्याभावमुक्त्वेत्यर्थः ।। **कुर्याद्विद्वानित्युक्तत्वादिति** ।। कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहमिति ज्ञानिनो असक्त्या कर्मकरणस्योक्तत्वादित्यर्थः ।। भाष्ये अप्येवपदाभ्यां यस्त्विति वाक्यस्य मुक्तपरत्वाभावे भगवदुक्त्योर्विरोधो भवति । नहि व्याहतभाषी भगवानिति सूचयति— **ये त्वितीति** ।। अत्रास्त्येव

**भगवद्विषयककर्मणा** भगवल्लोकप्राप्तिरूपो मोक्षः । तथाहि—

**मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।**

**निराशीर्निर्ममो** भूत्वा युध्यस्व विगतज्वरः ।।

इति **कर्तृत्वाभिमानत्यागपूर्वकं** स्वविषयककर्मकरणरूपस्वमतं भगवताभिधाय

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।

श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।।

इति स्वविषयकर्मानुष्ठातॄणां मोक्षमुक्त्वा असूयया तदनुष्ठानवतां निन्दनाच्च **भगवद्विषयककर्मणा** भगवल्लोको भवतीति सिद्ध्यतीति भावः ।। **तदभावादिति** ।। कर्मकरणे अधिकाराभावेन कर्माभावादित्यर्थः ।। **मोक्षो न स्यादिति** ।। तथाच यत्याश्रमस्याकर्तव्यत्वं स्यात् । नचेष्टापत्तिः । तथाच "तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्"

सन्न्यासस्तु तुरीयो यो निष्क्रियाख्यं स धर्मकृत् ।

न तस्मादुत्तमो लोके धर्मो कश्चन विद्यते ।।

इति यत्याश्रमकर्तव्यताविधायकवाक्यविरोधापत्तेरिति भावः ।। **लोक इतीति** ।। अत्र "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनामि"त्युत्तरार्धमपि पठितव्यम् ।। सनकादीनामित्यादिपदेन सनन्दनादयः । निष्ठा स्थितिः । पुराकल्पादौ । जनकादीनामित्यादिपदेन प्रियव्रतादयो ग्राह्याः । तथाच भगवद्विषयककर्मकरणेन भगवल्लोकप्रात्युक्तिः गृहस्थाश्रमिरूपकर्मयोग्याभिप्रायेणैवेति भावः ।।

यथोक्तम्—

सन्न्यासे तु तुरीये वै प्रीतिर्मम महीयसी ।

येषामत्राधिकारो न तेषां कर्मेति निश्चयः इति ।।

यतेरपि न सर्वथा कर्माभाव इत्याह— **यतेरपीति** ।। **स्वाश्रमोचितकर्मेति** ।। ज्ञानदानस्वभोक्तव्यान्नदानादिकर्मेत्यर्थः ।। **नात्राश्रमान्तरविरोध इति** ।। अस्य गृहस्थाश्रमाद्भिन्नं यदाश्रमान्तरं यत्याश्रमरूपं तस्य कर्तव्यताप्रतिपादकवचनविरोधोऽत्र नेति । एतद्व्याचष्टे— **नोक्तविरोध इति** ।। **त्रेतायामितीति** ।।

अत्र भगवत्तदितरदेवादिविषयकत्वेन त्रेतायां बहुधा सन्ततानि प्रवृत्तानीत्यर्थः । एकविषयकत्वेन भगवन्मात्रविषयकत्वेनैव ।। **अग्निष्टोमेतीति** ।। भाष्ये यजन्ति कार्तयुगा जनाः । तान् सर्वदेवान् । चस्त्वर्थः । ब्रह्माण्डपुराणस्थं वाक्यमुदाहरति भगवान्भाष्यकारः ।। **एवमिति** ।। एवमिति ब्रह्माण्डपुराणे पूर्वोक्तिपरामर्शः । कृतयुगे ये केचिज्जनाः शक्तास्सन्ति त एव वायोः पितरं विष्णुमेव सह यजन्ति । एवं कृतयुग इव त्रेतायामपि विष्णुमेव यजन्तीत्यर्थः ।।

**वा.टी.**—निष्कामं ज्ञानपूर्वं त्वित्यत्र निष्काममैहिकस्वर्गादिफलकामनारहितं ज्ञानपूर्वं विष्णुपूजात्मकत्वज्ञानपूर्वं यत्कर्म तन्निवृत्तमित्युच्यते ।। सहयज्ञाः प्रजाः सृष्ट्वेत्यत्र,

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।।

इत्यारभ्य,

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते तेऽपि कर्मभिः ।।

इति मध्ये यज्ञादिकर्मकर्तॄणां कर्मभिर्मुच्यन्त इति कर्मक्षयाख्यमोक्षरूपफलमुक्त्वा 'एवं प्रवर्तितं चक्रम्' इत्यकरणे प्रत्यवायकथनाच्च निष्कामकर्मणां भगवत्प्राप्तिरूपमोक्षहेतुत्वं सिद्धमिति भावः । यान्ति मद्याजिनोऽपि मामित्यनेन

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ।।

इति वाक्यं सङ्गृह्णाति । अत्र मद्याजिनो मामुद्दिश्य यज्ञकर्तारो मां यान्तीति साक्षात्परब्रह्मरूपिणा कृष्णेनैव स्वविषयकयज्ञकर्तॄणां स्वप्राप्तिरूपफलकथनान्निष्कामकर्मणां ब्रह्मप्राप्तिहेतुत्वसिद्धिः । इदं च 'कर्मणा ज्ञानमातनोति ज्ञानेनामृती भवति' इति 'अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्' 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्याद्यन्यत्राऽचार्यैरेवोदाहृतश्रुतीनां च सङ्ग्राहकम् । एवं तर्हि 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति'

इत्यनित्यफलकथनमनुपपन्नमित्यत उक्तम् ।। **अहं हि सर्वयज्ञानामिति** ।। **सर्वयज्ञानां** भोक्तृत्वेन सर्वयज्ञप्रभुत्वेन च भगवन्तमज्ञात्वा शुष्ककर्मकरणाच्च्यवनमिति भावः । तर्हि यत्याश्रमिणां कर्माभावात्कथं मोक्ष इत्यत आह ।। **लोक इति** ।। साङ्ख्यानां 'ख्या प्रकथने' इति धातोः भगवत्तत्त्वप्रकथनं सङ्ख्या, तत्सम्बन्धिनः साङ्ख्या ज्ञाननिष्ठा इति यावत्, तेषामित्यर्थः । तांश्च कारित्वादित्यत्र तान् देवान् कारित्वादुपकारित्वाद्यजन्त इत्यर्थः । तानि च त्रेतायां बहुधा सन्ततानीत्युपनिषद्वाक्यस्येयं योजना । त्रेतायां केचित्कुशलाः कृतयुगवदिन्द्रादीन् देवान् विष्णोरधिष्ठानतयैव जानन्त इन्द्रादिनामभिरपि विष्णुमेव यजन्ति । अनेनोत्तमानां स्वरूपमुक्तं भवति । केचित्त्वकुशलाः स्वर्गादिफलकामनयेन्द्रादीनेव यजन्ति, हरिं तु सीमाधीश्वरराजवत् सामान्यत एव जानन्ति । नतु तत्तन्नामभिर्यज्ञे दीयमानाहुतीनां भोक्तृतयापि । अनेन मध्यमजीवस्य स्वभाव उक्तो भवति । केचित्तु ततोऽप्यत्यन्ताकुशलाः विष्णोरितरदेवतासाम्यमितरदेवेभ्यो हीनत्वं वा जानन्त अन्यदेवानेव यजन्ति । अनेनाधमप्रकृतिरुक्ता भवति । एवं कर्माणि बहुधा त्रेतायां सन्ततानि । हे सत्यकामा यूयं तत्र कुशलकृतकर्माण्येवाचरथ । नतु मध्यमजीववदधमजीववच्च कर्माण्याचरथेति । यतेरपि न सर्वथा कर्माभाव इत्याह— **यतेरपीति** ।। **स्वाश्रमोचितकर्मेति** ।। ज्ञानदानस्वभोक्तव्यांन्नदानादिकर्मेत्यर्थः ।। **नात्राश्रमान्तरविरोध इति** ।। अस्य गृहस्थाश्रमाद्भिन्नं यदाश्रमान्तरं यत्याश्रमरूपं तस्य कर्तव्यताप्रतिपादकवचनविरोधोऽत्र नेति । एतद्व्याचष्टे— **नोक्तविरोध इति** ।। **त्रेतायामितीति** ।। अत्र भगवत्तदितरदेवादिविषयकत्वेन त्रेतायां बहुधा सन्ततानि प्रवृत्तानीत्यर्थः । एकविषयकत्वेन भगवन्मात्रविषयकत्वेनैव । **अग्निष्टोमेतीति** ।। भाष्ये यजन्ति कार्तयुगा जनाः । तान् सर्वदेवान् । चस्त्वर्थः । कारित्वात् भगवत्पूजाकारित्वात् । अत्रार्थे आचारं प्रमाणयति— **वसुरिति** ।। कृतयुगे स्थितो वसुनामको राजा तथा अग्निष्टोमादिभिः सर्वयज्ञैः सर्वदेवान्तर्गतं हरिं देवांश्च कारित्वेनायजनादित्यर्थः । त्रेतायामुत्पन्ना जनाः इन्द्रचन्द्रादिरूपदेवतागणान् पृथक् पृथग्देवतात्वेन यजन्ते पश्चात् यजनं विष्णौ

समर्पयन्तीति त्रैविद्यतां गता इत्यर्थः । यत एवं ततः कारणात् तानि त्रेतायां बहुधा सन्ततानीति श्रुतावुच्यत इत्यर्थः । प्राज्ञाः शक्ताः केचिज्जनाः त्रेतायामपि यथा कृतयुगे तत्कालीनाः यजन्ते तथा तथैव यजन्त इत्यर्थः । यथोक्तं मुख्यो धर्म इत्यादि इति योजना ।। **यमिन्द्रमितीति** ।। यं भगवन्तं सत्यं वायुम् । ऐतरेयभाष्ये विश्वामित्रमिति खण्डे एतच्छ्रुतिगतसत्यशब्दस्य वायुपरतया व्याख्यातत्वात् । यथोक्तं सत्य इति वायुः । सदिति प्राण इति श्रुतेः।

सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ।।

इति शब्दनिर्णय इति । आहुर्विद्वांस इत्यनेन इन्द्रादिनाम्नां भगवति विद्वद्रूढिरुक्ता । महायोगोऽप्यनेनैव लब्धः । "सा योगादेव लभ्यत" इत्युक्तत्वात् । एवं चन्द्रेन्द्रादिनाम्नां महायोगविद्वद्रूढिभ्यां भगवत्येव मुख्यत्वेन तन्नामोक्ते मन्त्राणामपि मुख्यतो भगवत्परत्वेन कृते युगे कर्मणामेकप्रकारेणैव सन्ततंत्वकथनं युक्तमिति भावः । कृतयुगस्थजनप्रवृत्तिं पुनः श्रुत्या दर्शयति— **यो देवानामिति** ।। देवतमो अतिशयेन देवः । वायोर्जनित्रं जनक इति भाष्ययोजना । सुपां सुपो भवन्तीत्युक्तेराह— **एभ्यः एभिरिति** ।। देवैर्ब्रह्मादिभिः । तस्मै देवानां देवतमाय वायुजनकाय विष्णव एवं सोमं जुहोमि । न देवेभ्य इत्यर्थः । इदं कृतयुगस्थभक्तजनवचनम् । तथाच ब्रह्मादिदेववत्कृतयुगस्थजनस्यापि अनन्ययाजित्वमनेनोक्तं भवतीति भावः । कृतयुगस्थजनप्रवृत्तिपरतायाः अत्र स्पष्टमप्रतिभासादेस्तच्छ्रुत्यर्थनिश्चायकं कृतत्रेतायुगस्थजनप्रवृत्तिप्रदर्शनपरम् ।।

**वामन.टी.—**अदार्ढ्यश्रवणं सर्वकर्मणामपि सममित्यत आह— **भगवदिति** ।। भगवद्विषयत्वेन कृते 'सुकृतो ब्रह्मलोकः' इति विष्णुलोकाख्यं नित्यं फलं सुश्रुतम् । अत्र स्मृतिः प्रमाणमित्याह— **निष्काममिति** ।। अज्ञकृतो भगवद्यज्ञो ज्ञानद्वारेण मोक्षद इति ह्युक्तम् । अथ ज्ञानिकृतो मोक्षे सुखाधिक्यद इत्यत्र श्रुतिमाह— **स य इति** ।। श्रीभगवान् गीतास्वपि 'सह यज्ञाः प्रजाः सृष्ट्वा' इत्यादौ तद्यजनं परं श्रेयस्करमित्युक्त्वा, तदननुवर्तिनं 'अघायुः' इत्या-

दिना विनिनिन्द । "भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्" इति **यज्ञभेदः** फलभेदश्चोक्तः । 'अहं हि' इत्यादिना सर्वयज्ञभुजं विष्णुमजानन्तो यजमानाः पुण्यनाशेन स्वर्गाच्च्यवन्त इति चोक्तम् । एवञ्च ज्ञानिनां पुण्यमेवाक्षयमित्यर्थः । ननु ज्ञानिनः कर्माधिक एव नास्ति । 'तस्य कार्यं न विद्यते' इत्युक्तत्वादित्यत आह— **यस्त्विति** ।। यस्त्वात्मरतिः इत्यादौ ज्ञानिनः कार्यं न विद्यत इत्युक्त्वाऽपि ज्ञानफलवृद्ध्यर्थं 'कुर्याद् विद्वांस्तथाऽसक्तः' इत्येवोक्तत्वाच्च नोक्तविरोधः । अथ विपक्षे दूषणमाह— **ये त्वेतदिति** ।। अथ विदुषः कर्मविधेर्निषेधस्य चान्योन्यविरोधमाशंक्य परिहरति— **लोकेऽस्मिन्निति** ।। विदुषामपि केषाञ्चित् केवलज्ञानयोगेन केषाञ्चित् कर्मयोगेन च सहितेनेति ब्रह्मनिष्ठाया द्वैविध्यस्य चोक्तत्वाच्च गृहस्थानां यतीनां चेत्याश्रमभेदविवक्षया विधिनिषेधयोर्न कश्चिद् विरोधः । 'तानि त्रेतायाम्' इत्यादेरर्थं व्याख्याति— **त्रेतायामिति** ।। कविभिर्मन्त्रेषु दृष्टानि कर्माणि त्रेतायां बहुदेवताविषयत्वेन लोके सन्ततानि । कृते तु एकप्रकारेण विष्णुविषयत्वेनैव व्याप्तानि । अस्मिन्नर्थे अग्निष्टोमादिभिः इत्यादिकं पाद्मवचनमाह । वसुः सत्यवतीजनकः । अत्र पुनर्ब्रह्माण्डवचनं चाह— **यमिन्द्रमिति** ।। अत्र त्वेकेन श्लोकेन याजुषं सोमाहुतिमन्त्रमनुवदति । ये कृतयुगे जनाः ते सर्वेऽपि एवं अनेन प्रधानाहुतिमन्त्रेण इन्द्रादिनामकं वायोर्जनकं विष्णुमेव सर्वदेवैश्च सह यजन्ति । एवं त्रेतायामपि केचिद् विद्वांसः समर्थाः तमेव यजन्ति । अन्ये तद्वदसमर्थाः इन्द्रादीनपि पृथगिष्ट्वा विष्णावर्पयन्ते । अतो विद्वन्मतानुसरणार्थं तान्याचरथ नित्यं सत्यकामा इत्याह ।।

**स.टी.**——भगवद्विषयत्वेन क्रियमाणं कर्म निष्कामं ज्ञानपूर्वमिति चेत्यपि वक्तव्यम् । ब्रह्मलोकप्राप्तिसाधनत्वलिङ्गात् । सस्मरे स्मृतिः श्रुतिश्चाप्यभिशुश्रुवे । "निष्कामं" "स य आत्मानम्" इति । स्यादेतत् । नैते वाक्ये ज्ञानिकर्मणां साफल्यं प्रतिपादयतः । स य आत्मानमित्यत्र तावदुपासककर्मणां अक्षयफलत्वश्रवणात् । इतरत्र च ज्ञानशब्दस्य परोक्षज्ञानार्थत्वस्याप्युपपत्तेरिति । नैष दोषः

ब्रह्मसाक्षात्काररहितेनोपासकेन कृतानि कर्माण्यक्षयफलकानि केन प्रकारेणेति चिन्त्यम् । किमक्षयं मोक्षं कुर्वन्तीति उत स्वर्गादिकम् । नाद्यः । "नान्यः पन्था" इति श्रुतिविरोधात् । न द्वितीयः । "पुण्यजितो लोकः क्षीयत" इति स्वर्गादिफलानां क्षयित्वश्रवणात् । अनेनैवंविन्महत्पुण्यं करोति । "तदेव वीर्यवत्तरं भवती"ति श्रुतिविरोधश्च पक्षद्वयेऽपि । तदेवमज्ञपक्षे वाक्यार्थानुपपत्तेरुपासकपदस्य ज्ञान्युपलक्षणत्वमेव युक्तम् । तथा ब्रह्माभ्येतीति श्रवणाज्ज्ञानपदस्य साक्षात्कार-वाचित्वमेवमुक्तमिति । अत एवानुव्याचक्षीत् । नचात्रोपासकस्यैव फलमक्षय्य-मुच्यते । नहि ज्ञानं विना क्वापि फलस्याक्षयता भवेदिति । अत्र वाक्ये फलं कर्मणाम् । तथा ज्ञानादिपदं परोक्षज्ञानार्थतया न व्याख्येयमित्यपि ग्राह्यमित्यभ्यधुः सुधायाम् । तस्माज्ज्ञानपदमपरोक्षज्ञानपरम् । उपास्त इति कारणेन कार्योप-लक्षणम् । अज्ञपक्षेऽपि नानुपपत्तिः । उपासकेन कृतानि खल्वसंकल्पितफलानि कर्माणि ज्ञानमुपजनयन्ति "कर्मणा ज्ञानमातनोती"ति श्रुतेः । "ज्ञानेन मोक्षो भवती"ति अज्ञकर्मणामपि ज्ञानद्वारेणाक्षयफलत्वोपपत्तेरित्येतत्त्वनुमतमेव यथा चानुव्याचक्षीत् । "ज्ञानद्वारेण नास्मत्पक्षप्रतीपते"ति । तदभाषत— **निष्काम-मिति** ।। ननु कर्माणि न कार्याण्येव । अकरणेनैव मोक्षसिद्धेः । अतस्तान्याचरथेति कथम् । अत्र प्रमाणम् । ज्ञानं मोक्षसाधनम् । किन्तु कर्माकरणमेवेति मत्वा ज्ञानं मोक्षसाधनं भवत्येव । किन्तु कर्मणा बद्ध्यते जन्तुरित्यादेः कर्माणि तत्प्रतिबन्धकानीति मत्वा । आद्येऽपि नैष्कर्म्यशब्दवाच्यतामात्रं मोक्षस्याश्रित्येद-मुच्येत । अथ क्रियाकारकफलरूपस्य संसारस्य कर्मैव बीजाङ्गीकरणे च बीजाभावाङ्गीकारो न भवतीति युक्तिमाश्रित्य । नाद्यः । काम्यकर्मपरित्यागेन प्राप्यतामात्रेण मोक्षस्य नैष्कर्म्यशब्दवाच्यत्वेनान्यथासिद्धेः । न द्वितीयः । प्रतिजन्म-कृतानामनन्तकर्मणां भावेन बीजाभावासिद्धेः । अत एव वाजिगीतत । "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत" इति । सर्वदा स्थूलेन सूक्ष्मेण वा पुरेण युक्तो ननु जीवः पुरुषः । नापि ज्ञानं मोक्षसाधनं भवत्येव "कर्मणा बद्ध्यते" जन्तुरित्यादेः कर्माणि तत्प्रतिबन्धकानीति तृतीयः । कर्मणा बद्ध्यते इत्यादेः

**अवैष्णवकामकर्मविषयत्वात्** । कुतः संकोचः । परेणापि परिस्पन्दमात्रस्य त्यक्तुमशक्यत्वेनासंकुचितार्थतायाः कर्तुमशक्यत्वात् । तर्ह्यत एव बाधकाच्छरीर-मात्रार्थकर्मव्यतिरिक्तकर्मविषयत्वं कल्प्यते । वैय्यर्थ्यात् । एवमपि मनोव्यापारस्या-त्यक्तत्वेन प्रतिबन्धकाभावेन सिद्ध्यति । तस्यैवान्वयव्यतिरेकाभ्यां प्रयोजकत्वा-वधारणात् । बाधकात्संकोचमङ्गीकुर्वाणेनायमपि संकोचोऽङ्गीकार्यः । विधान-सामर्थ्यात् । युद्धादीनामपि तत्तद्वर्णाश्रमोचितत्वात् । नच विधानस्यामुमुक्षु-विषयकत्वम् । कल्पकाभावात् । नच कर्मणा बद्ध्यत इति इदमेव वाक्यं कल्पकम् । तस्यावैष्णवत्वादिधर्मत्यागेन चरितार्थत्वात् । धर्मित्यागापेक्षया धर्मपरित्यागो हि ज्यायान् । अतः कर्म न परित्याज्यमिति । किञ्च स्वस्ववर्णा-श्रमोचितं कर्मावश्यं कर्तव्यम् । अत्र स्तुतिनिन्दापरकृतिपुराकल्परूपार्थवादस्य 'सहयज्ञा' इति चतुर्भिः श्लोकैरेवावगतेः अपि चावश्यं कर्म कर्तव्यम् । तत्करणे चक्रप्रवर्तकत्वलाभात् । विपक्षे अनर्थचक्रं च ।।

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः ।।
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।।

तानि चाक्षराणि भूताभिव्यङ्ग्यानीति । तदभाषत— **सहयज्ञा इति** ।। भगवत्प्राप्तिं कामयमानः कर्म कुर्वीतेत्येवावोचाम । एष वः पुण्यः सुकृतो ब्रह्मलोकः भगवानेव प्राप्य इत्यवोचाम । किन्त्वस्योपबृंहकमिति ब्रूमः । तदभाषत— **यान्ति मद्याजिनोऽपि मामिति चेति** ।। उपलक्षणं चैतत् । त्रेतादिकर्मानुष्ठातॄणां देवादिप्राप्तिरेव भवतीति तात्पर्यम् । तानि त्रेतायां बहुधा सन्ततानीत्यस्योपबृंहकं "देवान्देवयजो" इत्यादि पादत्रयं चावेत । ननु भगवद्भोगनिमित्तं हि सर्वेषां फलम् । स चेत्सर्वत्र समः । तदा सर्वेषां फलसामान्येन भाव्यम् । तदभावश्चेत्तर्ह्यहं क्रतुरित्युक्तं सर्वत्र भगवतो भोक्तृत्वमप्यसत्यमेव स्यादतः कथं फलभेदः विध्यविधिपूर्वकमनुष्ठानादिति ब्रूमः । तदेव कुतः सर्वयज्ञभोक्तृत्वेन प्रभुत्वेन भगवतो ज्ञानाज्ञानाभ्यामिति ब्रूमः । तदिदमभिप्रेत्याभाषत— **अहं हीति** ।।

यथैवमपरोक्षज्ञानिनां कर्माकरणे हानिः । तत्करणे च लाभः । तर्हि अतीव मनः समाधानमसंप्रज्ञातसमाधिलक्षणं न कार्यं प्रसज्यते । तत्र कर्मलोपावश्यम्भावात् नैष दोषः । असम्प्रज्ञातसमाधिस्थतादशायां कर्मलोपेऽप्यहानेः । स्थितप्रज्ञस्यापि देहादिदर्शनवेलायां सर्वापेक्षितभगवत्तुष्ट्यर्थस्वस्ववर्णाश्रमोचितकर्मणः कर्तव्यत्वात् । अत एव पञ्चरात्रे—

स्थितप्रज्ञस्यापि कार्यो देहादिर्दृश्यते तदा ।
स्वधर्मो मम तुष्ट्यर्थः स हि सर्वैरपेक्षित इति ।।

अत एव गीतासु यस्त्वात्मरतिरेव स्यादित्याद्यभिधाय कुर्याद्विद्वांस्तथा सक्त इति स्थितप्रज्ञस्य कर्म कर्तव्यमित्याह । अथ यस्त्वात्मरतिरेवेत्यस्य सम्प्रज्ञात-समाधिस्थस्यैव सम्भवात् । तथापि यत्पतति तदुचितं न विद्यते । एवंविधः कदाचित्तस्य सर्वदा कार्यं न विद्यत इति व्याख्याने ज्ञानिमात्रस्य कार्याभावः सेत्स्यति । नह्येवं यदा तदेति कालावच्छेदशब्दोऽस्ति । आत्मनि रतिर्यस्येति समासस्तु रतेः कर्तारमेवाचष्टे । नैष दोषः । यस्त्वात्मरतिरेव स्यादिति कर्तृशब्दस्य यो भुङ्क्ते स तु न ब्रूयात् । यो वेदान् गृह्णाति स गृहीत्यादिवत् । कालावच्छेदका-भावात् । तथाहि "तस्य कार्यं न विद्यत" इत्युक्तेऽतिप्रसक्तौ सत्यां अन्यव्यावर्तकं यस्त्वात्मरतिरेवेति अनेनाभ्यधात् । व्यावर्तकं च द्विविधं भवति । विशेषणमुप-लक्षणं चेति । तत्र व्यवच्छेद्यसमानकालं विशेषणं यथास्मदुदाहृतं भोजनम् । अन्यथा तु उपलक्षणं यथा त्वदुदाहृतं पतनम् । तत्र विशेषणं मुख्यम् । विशेष-ज्ञानहेतुत्वात् । अन्यदमुख्यं वैपरीत्यात् । मुख्यामुख्ययोश्च मुख्ये कार्यसम्प्रत्ययात् । नचात्र विशेषणत्वग्रहणे बाधकमस्ति । येनोपलक्षणमेतदिति प्रतीमः । अतो असम्प्रज्ञातसमाधिस्थस्यैव कार्याकरणम् । नन्वेवमसम्प्रज्ञातसमाधिस्थस्य कार्याभावे व्याख्यायमाने परोक्षज्ञानरहितस्यापि क्वचिदसम्प्रज्ञातसमाधिः असम्प्रज्ञातसमाधिस्थस्यैव । तर्हि अस्यार्थस्य मानव इति पदेन भगवतैव दर्शितत्वात् । मानवशब्दश्च 'मनु अवबोधन' इति धातोर्भाव उप्रत्ययः । ततो मनुरस्येत्यर्थे मनोरयमाश्रय इत्यर्थे वाण्प्रत्ययः । यद्वा धातोरेवाण्प्रत्ययः ।

मनुष्य इति व्याख्याने ऋष्यादिव्यावृत्तिवैय्यर्थ्यं चापधेयाताम् । यदीयकार्याभावोक्तिर्न ज्ञानिमात्रस्य किन्तु नैव तस्य कृतेनार्थ इत्युत्तरवाक्यं मा स्म संगस्त । असम्प्रज्ञातसमाधेः करणस्यैवाभावेन तत्प्रयोजनाभावकथन-स्यैवायोगात् । ज्ञानिनस्तु करणप्रसक्तिसम्भवेन तत्प्रयोजनप्रतिषेधस्योपपत्तिः । नैष दोषः । तर्ह्यंतीव मनःसमाधानमपि न कार्यमित्याक्षिप्ते तस्य कार्यं न विद्यत इति कुत उदतरत्। किन्तु कर्मकृतिकाले त्वया त्वमुद्बोधनीय इति कश्चित्प्रसक्तः समाहितः योगशास्त्रोदितोपायैस्तेनोद्बोधितः कर्म करोतीति कुतो नोत्तरयति स्मेत्याशंका-निरासायेदमेवमुच्यते इत्यङ्गीकारात् । अत एव गीताभाष्ये तस्य कर्मकाले वक्तव्योऽहमिति कश्चित्प्रत्युक्त्वा तत्कृतावात्मरत्यधिकः समो वा अर्थो नास्ति । नच सन्ध्याद्यकृतौ कश्चिद्दोषोऽस्तीत्यादि । तदिदमभिप्रेत्याभाषत यस्त्वात्मरिरेव स्यादित्युक्त्वापि कुर्याद्विद्वांस्तथा सक्त इत्येवोक्तत्वाच्चेति । अथ,

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ।।

इत्यत्र यतो विद्वत्कृतत्ववेत्तुः महाबाहो इत्युक्तप्रकारं अविद्वत्कर्म न प्रकृतेः क्रियमाणानि इत्युक्तप्रकारम् । अतः सर्वाणि कर्माणि मय्येव सन्न्यस्य भ्रान्त्या जीवेऽध्यारोपितानि मय्येव विसृज्य भगवानेव सर्वाणि कर्माणि करोतीति ज्ञानम् । अथवा सर्वाणि कर्माणि मत्पूजेति समर्पणम् । आत्मानं मामधिकृत्य विद्यमान-मध्यात्मं तच्च तच्चेतश्चाध्यात्मचेत इत्यव्ययीभावगर्भकर्मधारयः । अध्यात्मचेतसे-त्यस्य निराशीरित्यनेनान्वयः । परमात्मलाभेनैतन्नाशरहित इति समासो भगवानेव करोतीति ज्ञानम् । निर्ममत्वं नाहं करोमीति ज्ञानमिति भेदः । विगतज्वरः सन् युध्यस्वेति प्रतिपादिते किं विद्वांस एवं कर्म कुर्वन्तीति मया कर्म कार्यमित्याशंक्य स्वोक्तकर्मकरणाकरणयोः "ये मे मतमिदं नित्यमनुतिष्ठन्ती"ति "ये त्वेतदभ्यसूयन्त" इति श्लोकद्वयेन भगवान्फलं प्रत्यपीपदत् । अत्र तेऽपि मुच्यन्त इति अपि-शब्दोऽश्रावि । स च समुच्चये । समुच्चयश्च ज्ञानमिव कर्मापि पृथक्साधनमिति वा । ज्ञानकर्मसमुच्चय इति वा । तथाच कर्मणा ज्ञानद्वारा मोक्ष इति यदभिप्रागाः

यच्च ज्ञानिना कर्मणा मुक्तावानन्दातिशय इत्यभिप्रागाः तदुभयं चानुपपन्नम् । नैष दोषः । यत्तावदभ्यधाः ज्ञानमिव कर्मापि पृथक्साधनमिति समुच्चयकरोऽपिशब्द इति तन्नोपपद्यते । "निवृत्तादीनि कर्माणि ह्यपरोक्षेशदृष्टय" इति नारायणाष्टाक्षरकल्पे निष्कामनया कृतानि यज्ञादीनि नित्यनैमित्तिकानि च कर्माणि अपरोक्षा च ईशदृष्टिश्च सा तथोक्ता । तादर्थ्ये चतुर्थी ईशापरोक्षज्ञानार्थमेव भवन्तीत्युक्त्या कर्मणां पार्थक्यनिराकरणात् । यच्चाभ्यधाः ज्ञानकर्मसमुच्चयपरोऽपिशब्द इति । तदप्यसत् । तत्रैवापरोक्षशब्ददृष्टिस्तु मुक्तौ किञ्चिन्न मार्ग इत्यनेनापरोक्षज्ञानस्य मुक्तिसाधनविषये चानपरोक्षत्वस्य प्रतिपादनात् कः पुनस्तस्यापिशब्दस्यार्थः । ये त्वनिवृत्तकर्माणस्तेऽपि मुच्यन्ते ज्ञानद्वारा । किम्वपरोक्षज्ञानिन इति कैमुत्य-द्योतनम् । तदिदमभिप्रेत्याभाषत— **ये त्वेतदिति** ।। अतो नोक्तदोष इति शेषः । स्यादेतत् । आश्रमत्रयविहितानि यज्ञादीनि सर्वाणि कर्माणि काम्यानि । फलश्रवणात् । सर्वफले पुण्यलोका भवन्तीत्यादि । तथात्र "तन्नयन्त्येताः सूर्यस्य रश्मय" इत्यादि चतुर्थाश्रमविहितानि शमादीनि अकाम्यानि फलाश्रवणात् । "शान्तो दान्त" इत्युपक्रम्य "आत्मानं पश्येदि"ति ज्ञानार्थत्वश्रवणाच्च । ज्ञानं च काम्यात्कर्मणोऽत्युत्तमम् । ततश्च काम्ये यज्ञादौ तान्याचरथेति नियोजनमयुक्तम् । किन्तु चतुर्थाश्रमं स्वीकृत्य तद्वर्त्मनि नियोक्ष्याम्येव इति नियोक्तव्यम् । ननु कर्मापि ज्ञानार्थं भवति । अथ परा यया तदक्षरमित्युक्तेरिति मतं तदा व्यामिश्रेण वाक्येन बुद्धिमोहनमेवापद्यते । अथैवं यज्ञादिकर्माणि काम्यानि अकाम्यानि च । तत्र यः सकामः तं प्रति नयतीत्युक्तम् । यः पुनः ज्ञानार्थी तमुद्दिश्याथ परेत्युक्तम्। तत्र का व्यामिश्रतेति । तथापि शुद्धेषु निवृत्तलक्षणेषु यत्याश्रमधर्मेषु सत्सु कल्पकेषु स यज्ञादिषु नियोजनमयुक्तमेव । तत्र मनोविक्षेपाभावादत्र तद्भावादिति । किञ्च कामादीनां नरकफलत्वं प्रमितम् । काम्ये कर्मणि ते वर्जनीयाः । ततोऽपि तत्र नियोजनमयुक्तम् । नन्वस्योत्तरं सुखदुःखे इत्यन्यत्रोक्तम् । सत्यम् । तथापि रागादिप्रसक्तिहीनेषु शक्यानुष्ठानेषु यतिधर्मेषु सत्सु अशक्यानुष्ठानेषु यज्ञादिषु नियोजनमयुक्तमेवेति । नैष दोषः । आश्रमत्रयविहितानि यज्ञादीनि न केवलं

शुद्धकाम्यानि । किन्तु कर्तुरिच्छया स्वर्गाद्यर्थानि ज्ञानार्थानि च भवन्ति । अतो बुद्धेः काम्यकर्मणो ज्यायस्त्वेति अकाम्ययज्ञादेर्बुद्ध्यर्थत्वसम्भवात् । तत्र तान्याचरथेति नियोगो वानुपपन्नः । यदत्राभ्यधाद्यतिधर्मान्विना किमेतेनेति तत्रोत्तरम् । अनधिकारिणां यत्याश्रस्वीकाराधिकारो नाधिकारिकाणां तैर्गृहस्थाद्याश्रमं परित्यज्यैव तद्विहितानि कर्माणि निष्कामतयानुष्ठेयानीति ईश्वरनियमः । स चाधिकारिकत्वादिति । अतो यत्याश्रमलक्षणाश्रमान्तरस्वीकारप्रसङ्गेन तान्याचरथेत्युक्तार्थे अभावापादनलक्षणविरोधो नास्ति । तदिदमभिप्रेत्याभाषत— **लोकेऽस्मिन्निति** ।। श्लोकभावस्तु लोके अधिकारिवर्गे द्विविधाः जनास्सन्ति । ज्ञानयोगेन गृहस्थादिकर्मत्यागेन यत्याश्रमपरिग्रहेण । सहार्थे तृतीया वृद्धो यूनेतिवत् । ज्ञाननिष्ठाः सनकादिवदिति यावत् । कर्मयोगेन गृहस्थादिकर्मयुक्ताः । अत्र ज्ञानयोगेनेत्यावर्तते ज्ञाननिष्ठाश्च । तथाच मद्धर्मस्था एव द्विविधा एव अपि जनाः सन्ति । तत्कथमित्याकांक्षायां साङ्ख्यानां योगिनामिति विशेषणद्वयम् । तदर्थश्च सु सम्यक् ख्यातिः ज्ञानं सङ्ख्या तत्र भवा साङ्ख्याः तेषां ज्ञानिनां ज्ञाननिष्ठानां योगिनामुपायिनां गृहस्थाश्रमकर्मवतामिति । साङ्ख्ययोगशब्दौ प्रसिद्धार्थौ किं न स्यातां न निष्ठा स्वरूपेण स्थितिर्मुक्तिः पुरा मया प्रोक्तेति । ततश्च त्वं तु जनकादिवत्सकर्मैव ज्ञानयोग्यो नतु सनकादिवत्तत्त्यागेन । अत आधिकारिकत्वादीश्वरेच्छया लोकसंग्रहार्थत्वाच्च त्वां नियोक्ष्यामीत्यध्याहृत्य योजनेति । अत एव भगवद्गीताभाष्यं प्रववृते । द्विविधा अपि जनाः सन्ति । गृहस्थादिकर्मत्यागेन ज्ञाननिष्ठाः सनकादिवत् । तत्स्था एव ज्ञाननिष्ठाश्च जनकादिवत् । मद्धर्मस्था एवेत्यर्थः । साङ्ख्यानां ज्ञानिनां सनकादीनां योगिनामुपायिनां जनकादीनां ज्ञाननिष्ठा अप्याधिकारिकत्वादीश्वरेच्छया लोकसङ्ग्रहार्थत्वाच्च । येऽपि कर्मयोग्या भवन्ति । तेऽपि योगिनः निष्ठास्थितित्वं तु जनकादिवत्सुकर्मैव ज्ञानयोग्यः नतु सनकादिवत्तत्त्यागेनेत्यर्थः ।।

**व.टी.**——अत्र ब्रह्मलोकशब्देनापरब्रह्मलोकोऽभिधीयत इति प्रतीतिनिरासायाह— **भगवद्विषयत्वेनेति** ।। भगवद्विषयत्वेन कर्मकर्तॄणां परब्रह्मलोक-

प्राप्तिर्भवतीत्यत्र स्मृत्यन्तरसंवादं चाह— **निष्काममिति** ।। अत्रैव श्रुतिं चाह- — **स य इति** ।। ननु भगवद्विषयत्वेन कृतेन कर्मणा परब्रह्मलोकप्राप्तिर्भवती-त्येतन्न युज्यते । मोक्षस्य ज्ञानैकसाध्यत्वेनाकर्मापेक्षित्वादित्याह— **सहेति** ।। भगवद्विषयकर्मिणां परब्रह्मलोकप्राप्तिरेव भवतीत्यत्र वचनान्तरं चाह— **यान्तीति** ।। अहं हि सर्वयज्ञानामित्यत्रापि यद्यावद्विष्णुमविदित्वा यजतामूर्ध्व-लोकच्यवनोक्तेः यथावद्विष्णुज्ञानपूर्वयाजिनां च्युतिरहितलोकप्राप्तिर्भविष्यतीति विज्ञायते । स च मोक्ष एवेति भावः । ननु भगवद्विषयकर्मणा मोक्षो भवतीति गीताभिमतम् । यस्त्वात्मरतिरेव स्यादिति वाक्येन ज्ञानिनां कर्मनिषेधात् । यदि मोक्षार्थं कर्मापेक्षितमिति पक्षः स्यात्तथात्वे ज्ञानिनः कर्तव्यमेव नास्तीति कर्मनिषेधस्यानुपपत्तिप्रसङ्गादित्यत आह— **यस्त्विति** ।। इत्येवोक्तत्वाच्च न ज्ञानिना कर्माभावो गीताभिमत इत्यर्थः । ननु कुर्याद्विद्वानिति न विधिः किन्तु विधिसरूप एव अकरणे प्रत्यवायानुक्तेः । अतः कथं ज्ञानिनामनेन वाक्येन कर्मसिद्धिरित्यत आह— **ये त्विति** ।। ननु यदि सर्वेषामपि कर्म कर्तव्यं तर्हि यत्याश्रमस्वीकारो न स्यादित्यत आह— **लोक इति** ।। त्रेतायां बहुधा सन्त-तानीत्यत्र त्रेताग्रहणस्य कृत्यमाह— **त्रेतायामिति** ।। बहुधेति बहुदेवता-विषयत्वेन । एकप्रकारेणेति विष्ण्वेकविषयत्वेनेत्यर्थः । अत्रैव स्मृतिसम्मति-माह— **अग्निष्टोमादिभिरिति** ।। कृतयुगेऽपि सर्वे हरियाजिनः त्रेतादौ नाना-देवतायाजिन इत्यत्र वचनान्तरं चाह— **यमिन्द्रमिति** ।। यं विष्णुं इन्द्राग्न्या-दिनामवन्तमाहुः । यो वा देवानां देवतमश्च वायोर्मुख्यवायोर्जनित्रं उत्पादकः । तस्मै विष्णवे एभ्यः इन्द्रादिदेवेभ्यश्च सोमं जुहोमीत्यर्थः । ये कृते जनाः कृत-युगोत्पन्ना जनास्ते एवमुक्तेन प्रकारेण सर्वैर्देवैः सह विष्णुमेव यजन्ति । त्रेतादौ तु केचिज्जना एव मुक्तप्रकारेण विष्णुं न यजन्ति । नतु सर्वेऽपि । केचित्तु पृथक् पृथक् तान् विष्णिवतरदेवानिष्ट्वा यज्ञावसाने विष्णुपूजास्त्विति विष्णवे समर्पयन्ति । अन्ये जनास्तु यज्ञावसानेऽपि न हरयेऽर्पयन्तीत्यर्थः ।।

**श्री.टी.**—"ईयुस्त्रीन्कर्मणा लोकान्ज्ञानेनैव तदुत्तरान्" "न कर्मभिस्तां गतिमाप्नुवन्ति विद्या तपो योगसमाधिभाजामि"त्यादिवाक्यविरोधादित्यत आह— **भगवद्विषयत्वेनेति** ।। भगवत्प्रीत्यर्थत्वेन निवृत्तकर्मणि कृते सतीति शेषः । तथा चैतदभिप्रायेणैष व इत्यादिवाक्यं प्रवृत्तमित्यर्थः । एवं च वो भवतामेष प्रमाणप्रमितः पुण्यः भगवद्विषयकपुण्यकर्मानुष्ठानलभ्यो ब्रह्मलोकः सुसम्यक्कृतः सिद्धोऽस्तीति तद्वाक्यार्थो द्रष्टव्यः । ननु तथापि ब्रह्मलोक इति भगवद्विषयककर्मानुष्ठानवतां च चतुर्मुख-लोकप्राप्तिरुच्यमानानुपपन्ना । देवतोद्देशेन कर्मानुष्ठानवतामेव हि देवतालोकप्राप्तिर्न भगवद्विषयककर्मानुष्ठानवताम् । देवान्देवयजो यान्तीत्यादि वचनादित्याशंकापरिहाराय ब्रह्मलोकशब्दं व्याचष्टे— **परब्रह्मलोक इति** ।। ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वात्तल्लोक एव ब्रह्मलोकशब्देनोच्यत इत्याशयः। ननु भगवद्विषयककर्मानुष्ठानवतां भगवल्लोकप्राप्तिर्भवतीत्यत्र किं प्रमाणमित्यत आह— **निष्काममिति** ।। ज्ञानपूर्वं कृतं कर्मेति शेषः । अत्रैव प्रमाणान्तरमाह- — **स य इति** ।। लोकं सर्वाश्रयम् । उपास्ते जानाति च । अस्य कर्म । ज्ञानादिपूर्वकमनेनानुष्ठितं कर्मेति यावत् । न क्षीयते अपरोक्षज्ञानद्वाराऽक्षयभगवल्लोकफलकं भवतीति श्रुत्यर्थोऽत्र द्रष्टव्यः ।। ननु भगवद्विषयककर्मकरणाद्भगवल्लोकप्राप्तिरूपो मोक्षो भवतीत्युक्तम् । तदयुक्तम् । नैष्कर्म्यसिद्धिं परमामित्यादिना मोक्षस्य नैष्कर्म्यसिद्धित्वं तावदवगम्यते । न विद्यते कर्म करणीयं यस्यासौ निष्कर्मा पुरुषस्तत्सम्बन्धिनी सिद्धिर्हि नैष्कर्म्यसिद्धिरतस्तदन्यथानुपपत्त्या मुमुक्षोः कर्मण एवानपेक्षितत्वादित्यत आह— **सह यज्ञा इत्यादिना** ।। इत्युक्त्वा इत्याद्युक्त्वा । इति च निन्दनादिति शेषः । अयमर्थः । मुमुक्षुणावश्यं कर्म कर्तव्यमेव । तथाहि । वर्णाश्रमविहितकर्मकर्तुरन्नाद्भवन्ति भूतानीत्याद्युक्तचक्रप्रवर्तकत्वेन मुच्यन्ते सर्वकिल्बिषैरिति सर्वपापहानिरूपमोक्षमुक्त्वा एवं प्रवर्तितमित्यादिना वर्णाश्रमविहितकर्माकर्तुश्चक्रविघातकत्वेनाघायुष्ट्वाद्युक्त्या तन्निन्दनाच्च मुमुक्षोरवश्यं कर्मापेक्षितमित्यवगम्यत इति । तथाच काम्यकर्मरहिते पुरुषसिद्धित्वादेव मोक्षस्य नैष्कर्म्यसिद्धित्वमित्याशयः । भगवद्विषयककर्मकर्तुर्भगवल्लोकप्राप्ति-

रित्यत्र भगवद्वाक्यमेव प्रमाणयति— **यान्तीति** ।। मद्याजिनः मद्विषयककर्मकर्तारः। किञ्च भगवत एव सर्वयज्ञभोक्तृत्वेन सर्वकर्मणां भगवद्विषयकत्वावगमात्तत्त्वेन तदजानतां लोकाच्च्युतिवचनेन तत्त्वेन तथा ज्ञात्वा तद्विषयककर्मकर्तॄणां च्युति-रहितलोकप्राप्तिरर्थात्सिद्धा । च्युतिरहितलोकश्च भगवल्लोक एव नान्यः । तथाच सिद्धा भगवद्विषयककर्मकर्तॄणां भगवल्लोकप्राप्तिरित्याशयेनाह— **अहं हीति** ।। नन्वथापि मुमुक्षोर्ज्ञानिनः कर्मानपेक्षितं तत्रैव गीतायाम्—

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।।

इति तस्य कर्तव्याभावोक्तेस्तद्विरोधादिति च तत्राह— **यस्त्विति** ।। यस्त्वात्मरतिरेव स्यादिति मुक्तस्यैव कर्तव्याभाव उच्यते । यथोक्तम् ।

यस्त्वेवात्मरतो मुक्तः क्रिया तस्यैव नास्ति हि ।
अतः कुर्वेव कर्माणीत्याह कृष्णोऽर्जुनं स्मयन् । इति ।।

एवं मुक्तस्यैव कर्तव्याभावमुक्त्वा—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसंग्रहम् ।।

इति ज्ञानिनो सक्त्या कर्मकरणस्यैवोक्तत्वेन न तद्विरोध इत्यर्थः । अप्येवम्पदाभ्यां यस्त्विति वाक्यस्य मुक्तपरत्वाभावे भगवद्युक्त्योर्विरोधापत्तेः । नहि व्याहतभाषी भगवानिति सूचयति । किञ्चास्त्येव भगवद्विषयककर्मणा भगवत्प्राप्तिरूपो मोक्षः । तथाहि—

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ।।

इति कर्तृत्वाभिमानत्यागपूर्वकं स्वविषयककर्मकरणरूपं स्वमतं भगवानभिधाय,

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।।

इति स्वविषयककर्मानुतिष्ठतां मोक्षमुक्त्वाऽसूयया तदनुष्ठानरहितानां निन्दनाच्च **भगवद्विषयककर्मणा** भगवल्लोको भवतीति सिद्ध्यतीत्याशयेनाह— **ये त्वेतदिति**।। ननु मुमुक्षोर्मोक्षार्थं भगवद्विषयककर्मणः कर्तव्यत्वे यत्याश्रमिणां कर्मकरणेऽधिकाराभावेन मोक्षाभावप्रसङ्गात् । तथाच यत्याश्रमस्याकर्तव्यत्वापत्तेः । न चेष्टापत्तिरिति वाच्यम् । तथात्वे तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्

सन्न्यासस्तु तुरीयो यो निष्क्रियाख्यः सधर्मकः ।
न तस्मादुत्तमो धर्मो लोके कश्चन विद्यते ।।

इत्यादि यत्याश्रमकर्तव्यताविधायकवाक्यविरोधापत्तेरित्यत आह— **लोकेऽस्मिन्निति** ।। "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम्" इत्यर्धोऽपि पठितव्यः। द्विविधा हि योगिनः सन्ति । ज्ञानयोगिनः कर्मयोगिनश्चेति। तत्र ज्ञानयोगेन साङ्ख्यानां सनकादीनां मुक्तिः । कर्मयोगिनां जनकप्रियव्रतादीनां ज्ञानिनामपि कर्मप्रधानत्वेन कर्मयोगित्वात्कर्मयोगेन मुक्तिरित्यर्थः । तथाच भगवद्विषयककर्मकरणेन भगवत्प्राप्त्युक्तिर्गृहस्थाश्रमिरूपकर्मयोग्यभिप्रायेणैवेति भावः । यथोक्तं-

सन्न्यासे तु तुरीये वै मम प्रीतिर्महीयसी ।
येषामत्राधिकारो न तेषां कर्मेति निश्चयः ।। इति ।।

नात्राश्रमान्तरविरोध इति । गृहस्थाश्रमभिन्नं यदाश्रमान्तरं यत्याश्रमरूपं तस्य कर्तव्यताप्रतिपादकवचनविरोधोऽत्र नेत्यर्थः ।। तानि त्रेतायां बहुधा सन्ततानीत्यत्र त्रेतायामिति विशिष्योक्तेरभिप्रायमाह— **त्रेतायामिति** ।। भगवदितरदेवताविषयकत्वेन त्रेतायां बहुधा सन्ततानि प्रवृत्तानि कृतयुगे तु एकप्रकारेणैव भगवद्विषयकत्वेनैव सन्ततानीत्यर्थः । अत्रार्थे पञ्चरात्रमृगाद्याश्चेत्यादि-प्रमाणमुदाहृतमेव पुनः प्रमाणान्तरं चाह— **अग्निष्टोमादिभिरिति** ।। यजन्ति कार्तयुगजनाः । तान् सर्वदेवान् । चस्त्वर्थः । कारित्वाद्भगवत्पूजाकारित्वात् । अत्रार्थे आचारं प्रमाणयति— **वसुरिति** ।। कृतयुगस्थितो वसुनामको राजा । तथाग्निष्टोमादिभिः सर्वयज्ञैः सर्वदेवान्तर्गतं हरिं देवांश्च कारित्वेनायजदित्यर्थः । त्रेतायामुत्पन्नजनाः । इन्द्रचन्द्रादिदेवतागणान्पृथग्देवतात्वेन यजन्ति पश्चात्तद्यजनं

विष्णौ समर्पयन्तीति त्रैविद्यतां गता इत्यर्थः । यत एवं ततः कारणात् त्रेतायां बहुधा तानि त्रेतायां बहुधा सन्ततानीति श्रुतावुच्यत इत्यर्थः । प्राज्ञाः अतिशक्ताः केचिज्जनाः त्रेतायामपि यथा कृते युगे तत्कालीना यजन्ते तथा तथैव यजन्त इत्यर्थः । यथोक्तं—

मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि ।
त्रेतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रवर्तते ।। इति ।।

ननु तानि त्रेतायां बहुधा सन्ततानीत्युक्त्या कृतयुगे कर्मणां भगवन्मात्र-विषयकत्वेनैकप्रकारेणैव सन्ततत्वमुक्तम् । तदयुक्तम् । यज्ञादिकर्मसु विनियुक्ताना-मिन्द्रादिनामोपेतमन्त्राणां भगवत्परत्वाभावात् । रूढियोगाभ्यामिन्द्रादिनामानी-न्द्रादिदेवेष्वेव हि प्रसिद्धानीत्याशंकायामाह— **यमिन्द्रमिति** ।। यं भगवन्तं सत्यं वायुं ऐतरेयभाष्ये विश्वामित्रमिति खण्डे एतच्छ्रुतिगतसत्यशब्दस्य वायुपरतया व्याख्यातव्यत्वात् । यथोक्तं सत्य इति वायुः सदिति प्राण इति श्रुतेः ।

सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ।।

इति शब्दनिर्णय इति । आहुर्विद्वांस इत्यनेनेन्द्रादिनाम्नां भगवति विद्वद्रूढिरुक्ता । महायोगोऽप्यनेनैव लब्धः । सा योगादेव लभ्यते इत्युक्तत्वात् । एवं चेन्द्रादिनाम्नां महायोगविद्वद्रूढिभ्यां भगवत्येव मुख्यत्वेन तन्नामोपेतमन्त्राणामपि मुख्यतो भगव-त्परत्वेन कृते युगे कर्मणामेकप्रकारेणैव सन्ततत्वकथनं युक्तमिति भावः । कृतयुगस्थजनप्रवृत्तिं पुनः श्रुत्या दर्शयति— **यो देवानामिति** ।। देवतमोऽति-शयेन देवः । वायोर्जनित्रं जनकः । एभ्य एभिर्ब्रह्मादिदेवैः सहाहमपि तस्मै देवानां देवतमाय वायुजनकाय विष्णव एव सोमं जुहोमि न देवेभ्य इत्यर्थः । इदं च कृतयुगस्थभक्तजनवचनम् । तथाच ब्रह्मादिदेववत्कृतयुगस्थजनस्याप्य-नन्ययाजित्वमनेनोक्तं भवतीति भावः । नन्विन्द्रादिनामभिस्तत्तद्देवतायजनं कर्तव्यम। नच विष्णोरिन्द्रादिनामवत्त्वमस्ति । मानाभावात् । तत्कथं सर्वेऽपि जनाः सर्वदेवस्थितं हरिं यजन्तीत्युक्तमित्यत आह— **यमिति** ।। यो वायोः जनित्रं

जनकः । यश्च देवानामिन्द्रादीनां देवतमः अतिशयेन देवः इन्द्रत्वादिप्रदः । अत एव प्रवृत्तिनिमित्तस्वामित्वादिना यमिन्द्रमाहुः । एवमग्रेऽपि । सत्यमित्यत्र सत्यो वायुरुदाहृतः । "साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वत" इत्यैतरेयभाष्योक्तेः। तस्मै वायवे विष्णवे च । एभ्यः इन्द्रादिभ्यश्च । सोमं सोमादिद्रव्यम् । जुहोमीत्यर्थः । अत्र जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमीत्यनेन मुख्यप्राणान्तर्यामित्वेनेन्द्रादिस्थित-हरियजनं कर्तव्यम् । इन्द्रान्तर्यामिमुख्यप्राणान्तर्गतविष्णवे स्वाहेत्यादि रूपेणेति सूचयतीति बोध्यम् । कृतयुगस्थजनप्रवृत्तिपरतायाः अत्र स्पष्टप्रतिभासादेतच्छ्रुत्यर्थ-निश्चायकं कृतत्रेतायुगस्थजनप्रवृत्तिप्रदर्शनपरं ब्रह्माण्डपुराणस्थं वाक्यमुदाहरति- – **एवमिति** ।। एवमिति ब्रह्माण्डपुराणे पूर्वोक्तपरामर्शः । कृते युगे ये जनाः केचिच्छक्ताः सन्ति ते एवं कृतयुग इव त्रेतायामपि विष्णुमेव यजन्त इत्यर्थः । अन्ये अशक्ताः राजवत् किञ्चिदुत्तमत्वं विष्णोर्जानन्तो जनाः । त्रेतायामिति वर्तते । तान् देवान् पृथक् देवतात्वेनेष्ट्वा तद्यजनमन्ते विष्णावर्पयन्ते । अन्ये विष्णोरन्यैः साम्यं हीनत्वं वा जानन्तः पृथक्तानिष्ट्वा तेऽपि विष्णौ नार्पयन्त इत्यर्थः ।।

**उ.टी.**—नन्वेतन्मन्त्रचतुर्थपादे पुण्यः सुकृत इति पुनरुक्तिः । पुण्यश्रेयसी सुकृतं वृष इति पुण्यसुकृतशब्दयोः पर्यायत्वाभिधानादित्यतो व्याचष्टे— **भगवद्विषयत्वेन कृत एष वः पुण्यः सुकृत इति** ।। एष वः पुण्यः सुकृत इति सुकृतशब्दस्य भगवद्विषयत्वेन कृत इत्यर्थ इति योज्यम् । वाक्यशेषस्थ-सुकृतशब्दव्याख्यानमेतदिति ज्ञापयितुमेष वः पुण्य इत्यधिकांशोदाहरणम् । अत्र भगवद्विषयत्वेन कृतत्वं नाम—"नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम्" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" "तत्कुरुष्व मदर्पणम्" इत्याद्युक्तप्रकारेण नाहं कर्ता किन्तु भगवानेव कर्ता इदं सर्वं कर्म भगवत्पूजात्मकं भगवानेव सर्वयज्ञानां भोक्ता स्वामी चेत्याद्यनुसन्धानपूर्वकं भगवदर्पणबुद्ध्या कृतत्वमिति बोध्यम् । पुण्यशब्दस्य पुंस्त्वं छान्दसम् । तेन च स्ववर्णाश्रमोचितं सर्वं पुण्यं विवक्षितम् । नन्वेवं तर्हि ब्रह्मलोकः सुकृतः पुण्य इति पुण्यब्रह्म-

लोकयोस्तादात्म्यं प्रतीयते । तच्च बाधितमित्यतो लाङ्गलं जीवनमितिवत् भगवद्विषयकं पुण्यं ब्रह्मलोकसाधनमिति व्याख्येयम् । तत्र विवक्षितं ब्रह्मलोकशब्दार्थमाह— **ब्रह्मलोकः परब्रह्मलोक इति** । स्यादिदं व्याख्यानम्। यदि भगवद्विषयत्वेन कृतं सर्वं कर्म परब्रह्मलोकसाधनमित्येतत्प्रमितं स्यात् । तदेव कुत इत्यतस्तत्र प्रमाणमाह— **निष्काममिति** ।। स्वर्गादिकामनाशून्यमित्यर्थः ।। **ज्ञानपूर्वमिति** ।। नाहं कर्तेत्याद्युक्तप्रकारेण भगवज्ज्ञानपूर्वकमित्यर्थः । अत्र कर्मेति विशेष्यमध्याहार्यम् । तत्रैव निष्कामत्वादिविशेषणसम्भवादिति बोध्यम् । ननु यदि भगवद्विषयत्वेन कृतस्य कर्मणो विष्णुलोकहेतुत्ववत्स्वर्गादिहेतुत्वमपि स्यात्तदा सुकृतः पुण्यो ब्रह्मलोक इति विशिष्योक्तिरयुक्ता स्यादित्याशंक्य उक्तकर्मणः स्वर्गाद्यहेतुत्वे श्रुतिमाह— **स य इति** ।। सः प्रसिद्धः योऽधिकारी लोकं प्रसिद्धं आत्मानं भगवन्तं । एवेति नियमसूचकः । उपास्ते जानाति च। अस्य ज्ञानिनः कर्म ज्ञानपूर्वकं स्ववर्णाश्रमोचितं कर्मेति यावत् । न क्षीयते । तदक्षयि मोक्षफलकम् । क्षयि स्वर्गादिफलकं न भवतीति ह प्रसिद्धमित्यर्थः । ननु कर्मैव न कर्तव्यं फलाभावात् । अकरणेऽनर्थाभावाच्च । ततः कुतो भगवद्विषयत्वेन कर्मकरणं कुतस्तरां च भगवद्विषयत्वेन कृतस्य कर्मणः परब्रह्मलोकप्राप्तिसाधनत्वमित्याशंक्य कर्मणः कर्तव्यत्वं तावद्भगवद्गीतावाक्येन समर्थयते— **सहयज्ञा इति** ।। इति चेत्यतःपरं निन्दनादिति शेषः । ततश्चेत्युक्त्वा इति निन्दनादित्यन्वयसम्भवेन क्त्वाप्रत्ययोपपत्तिः । 'समानकर्तृकयोः पूर्वकाल' इति सूत्रेण क्त्वाप्रत्ययविधानादिति ज्ञातव्यम् । "सहयज्ञा" इति श्लोकेन कर्मणः फलमुक्त्वा "एवं प्रवर्तितमि"ति श्लोकेन कर्माकरणेऽनर्थ उक्तः । अतः फलाभावस्याकरणेऽनर्थाभावस्य चासत्त्वात्स्ववर्णाश्रमोचितं कर्म कर्तव्यमेवेति भावः ।

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।।

इति श्लोकस्यायमर्थः ।। सह यज्ञेन विहितकर्मकलापेन वर्तन्त इति सहयज्ञाः। कर्माधिकृता इति यावत् । वोपसर्जनस्येति सहशब्दस्य पक्षे सादेशाभावः ।

जनकः । यश्च देवानामिन्द्रादीनां देवतमः अतिशयेन देवः इन्द्रत्वादिप्रदः । अत एव प्रवृत्तिनिमित्तस्वामित्वादिना यमिन्द्रमाहुः । एवमग्रेऽपि । सत्यमित्यत्र सत्यो वायुरुदाहृतः । "साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वत" इत्यैतरेयभाष्योक्तेः। तस्मै वायवे विष्णवे च । एभ्यः इन्द्रादिभ्यश्च । सोमं सोमादिद्रव्यम् । जुहोमीत्यर्थः । अत्र जनित्रं वायोस्तस्मै सोममेभ्यो जुहोमीत्यनेन मुख्यप्राणान्तर्यामित्वेनेन्द्रादिस्थित-हरियजनं कर्तव्यम् । इन्द्रान्तर्यामिमुख्यप्राणान्तर्गतविष्णवे स्वाहेत्यादि रूपेणेति सूचयतीति बोध्यम् । कृतयुगस्थजनप्रवृत्तिपरतायाः अत्र स्पष्टप्रतिभासादेतच्छ्रुत्यर्थ-निश्चायकं कृतत्रेतायुगस्थजनप्रवृत्तिप्रदर्शनपरं ब्रह्माण्डपुराणस्थं वाक्यमुदाहरति- — **एवमिति** ।। एवमिति ब्रह्माण्डपुराणे पूर्वोक्तपरामर्शः । कृते युगे ये जनाः केचिच्छक्ताः सन्ति ते एवं कृतयुग इव त्रेतायामपि विष्णुमेव यजन्त इत्यर्थः । अन्ये अशक्ताः राजवत् किञ्चिदुत्तमत्वं विष्णोर्जानन्तो जनाः । त्रेतायामिति वर्तते । तान् देवान् पृथक् देवतात्वेनेष्ट्वा तद्यजनमन्ते विष्णावर्पयन्ते । अन्ये विष्णोरन्यैः साम्यं हीनत्वं वा जानन्तः पृथक्तानिष्ट्वा तेऽपि विष्णौ नार्पयन्त इत्यर्थः ।।

**उ.टी.**—नन्वेतन्मन्त्रचतुर्थपादे पुण्यः सुकृत इति पुनरुक्तिः । पुण्यश्रेयसी सुकृतं वृष इति पुण्यसुकृतशब्दयोः पर्यायत्वाभिधानादित्यतो व्याचष्टे— **भगवद्विषयत्वेन कृत एष वः पुण्यः सुकृत इति** ।। एष वः पुण्यः सुकृत इति सुकृतशब्दस्य भगवद्विषयत्वेन कृत इत्यर्थ इति योज्यम् । वाक्यशेषस्थ-सुकृतशब्दव्याख्यानमेतदिति ज्ञापयितुमेष वः पुण्य इत्यधिकांशोदाहरणम् । अत्र भगवद्विषयत्वेन कृतत्वं नाम—"नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम्" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" "तत्कुरुष्व मदर्पणम्" इत्याद्युक्तप्रकारेण नाहं कर्ता किन्तु भगवानेव कर्ता इदं सर्वं कर्म भगवत्पूजात्मकं भगवानेव सर्वयज्ञानां भोक्ता स्वामी चेत्याद्यनुसन्धानपूर्वकं भगवदर्पणबुद्ध्या कृतत्वमिति बोध्यम् । पुण्यशब्दस्य पुंस्त्वं छान्दसम् । तेन च स्ववर्णाश्रमोचितं सर्वं पुण्यं विवक्षितम् । नन्वेवं तर्हि ब्रह्मलोकः सुकृतः पुण्य इति पुण्यब्रह्म-

लोकयोस्तादात्म्यं प्रतीयते । तच्च बाधितमित्यतो लाङ्गलं जीवनमितिवत् भगवद्विषयकं पुण्यं ब्रह्मलोकसाधनमिति व्याख्येयम् । तत्र विवक्षितं ब्रह्मलोकशब्दार्थमाह— **ब्रह्मलोकः परब्रह्मलोक इति** । स्यादिदं व्याख्यानम्। यदि भगवद्विषयत्वेन कृतं सर्वं कर्म परब्रह्मलोकसाधनमित्येतत्प्रमितं स्यात् । तदेव कुत इत्यतस्तत्र प्रमाणमाह— **निष्काममिति** ।। स्वर्गादिकामनाशून्यमित्यर्थः ।। **ज्ञानपूर्वमिति** ।। नाहं कर्तेत्याद्युक्तप्रकारेण भगवज्ज्ञानपूर्वकमित्यर्थः । अत्र कर्मेति विशेष्यमध्याहार्यम् । तत्रैव निष्कामत्वादिविशेषणसम्भवादिति बोध्यम् । ननु यदि भगवद्विषयत्वेन कृतस्य कर्मणो विष्णुलोकहेतुत्ववत्स्वर्गादिहेतुत्वमपि स्यात्तदा सुकृतः पुण्यो ब्रह्मलोक इति विशिष्योक्तिरयुक्ता स्यादित्याशंक्य उक्तकर्मणः स्वर्गाद्यहेतुत्वे श्रुतिमाह— **स य इति** ।। सः प्रसिद्धः योऽधिकारी लोकं प्रसिद्धं आत्मानं भगवन्तं । एवेति नियमसूचकः । उपास्ते जानाति च। अस्य ज्ञानिनः कर्म ज्ञानपूर्वकं स्ववर्णाश्रमोचितं कर्मेति यावत् । न क्षीयते । तदक्षयि मोक्षफलकम् । क्षयि स्वर्गादिफलकं न भवतीति ह प्रसिद्धमित्यर्थः । ननु कर्मैव न कर्तव्यं फलाभावात् । अकरणेऽनर्थाभावाच्च । ततः कुतो भगवद्विषयत्वेन कर्मकरणं कुतस्तरां च भगवद्विषयत्वेन कृतस्य कर्मणः परब्रह्मलोकप्राप्तिसाधनत्वमित्याशंक्य कर्मणः कर्तव्यत्वं तावद्भगवद्गीतावाक्येन समर्थयते— **सहयज्ञा इति** ।। इति चेत्यतःपरं निन्दनादिति शेषः । ततश्चेत्युक्त्वा इति निन्दनादित्यन्वयसम्भवेन क्त्वाप्रत्ययोपपत्तिः । 'समानकर्तृकयोः पूर्वकाल' इति सूत्रेण क्त्वाप्रत्ययविधानादिति ज्ञातव्यम् । "सहयज्ञा" इति श्लोकेन कर्मणः फलमुक्त्वा "एवं प्रवर्तितमि"ति श्लोकेन कर्माकरणेऽनर्थ उक्तः । अतः फलाभावस्याकरणेऽनर्थाभावस्य चासत्त्वात्स्ववर्णाश्रमोचितं कर्म कर्तव्यमेवेति भावः ।

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ।।

इति श्लोकस्यायमर्थः ।। सह यज्ञेन विहितकर्मकलापेन वर्तन्त इति सहयज्ञाः। कर्माधिकृता इति यावत् । वोपसर्जनस्येति सहशब्दस्य पक्षे सादेशाभावः ।

प्रजाः त्रीन्वर्णान् । पुरा कल्पादौ सृष्ट्वा उवाच प्रजापतिः विष्णुः । "प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः" इत्युक्तेः । किमुवाचेत्यत आह— **अनेनेति** ।। हे प्रजाः यूयं अनेन यज्ञेन स्ववर्णाश्रमोचितधर्मेण प्रसविष्यध्वं इष्टकामानुत्पादयत । एतदेव विवृणोति— **एष इति** ।। एष यज्ञः वः युष्माकं इष्टकामधुक् इष्टान् अभिमतान् कामान् काम्यानि फलानि दोग्धि प्रापयतीति तथा अभीष्टभोग-प्रदोऽस्त्वित्यर्थः । एवं प्रवर्तितमिति श्लोकस्यायमर्थः— हे पार्थ इह अधिकारिवर्गे । यः प्राणी । एवं—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ।
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।।

इति पूर्वोक्तप्रकारेण परमेश्वरेण प्रवर्तितं चक्रम् । भूतव्यङ्ग्याः वेदाः तद्व्यङ्ग्यं ब्रह्म तज्जन्यं कर्म तज्जन्यो यज्ञः । मन्त्रपूर्वदेवतोद्देशेन द्रव्यत्यागो यज्ञः । तदितरक्रिया कर्मेति विवेकः । यज्ञजन्यः पर्जन्यः तज्जन्यमन्नं अन्नजन्यानि भूतानीत्येवं वेदब्रह्मादिचक्रं नानुवर्तयति स्वविहितकर्माकरणेन न प्रवर्तयति । स प्राणी । अघायुः अघजनकमायुर्यस्य स तथा । स्ववर्णाश्रमोचितकर्माकरणेन पापस्यैव प्राप्तेः । न केवलमेतावत् । किन्तु मोघं व्यर्थं जीवति । तज्जीवनमपि व्यर्थम् । अधिकारदेहप्राप्तावपि तद्देहे कस्यापि धर्मस्याननुष्ठानात् । नन्वधिकारे प्राप्तेऽपि स्वविहितकर्मकरणेन चक्रं कुतो नानुवर्तयतीत्याशंक्य कर्माकरणहेतुगर्भ-विशेषणमुक्तम् इन्द्रियाराम इति । आरमणं आरामः । विषयोपभोग इति यावत् । इन्द्रियैरारामो यस्य स तथा । विषयभोगासक्त इति यावत् । तथाच विषयासक्त्या कर्म न करोति । तेन पुण्याभावः प्रत्यवायप्राप्तिश्च भवतीति भावः । नन्वस्त्वेवं कर्मणः कर्तव्यत्वम् । तथापि तस्य भगवद्विषयत्वेन कर्तव्यत्वे भगवद्विषयत्वेन कृतस्य कर्मणः परब्रह्मलोकप्राप्तिहेतुत्वे च न स्फुटं प्रमाणमस्ति । निष्काममिति स्मृतेरुपपादनसापेक्षत्वात् । तत्र निष्काममिति विशेषणबलेन कर्मेत्यस्याध्या-हार्यत्वात् । सहयज्ञा इति गीतावाक्यं तु कर्ममात्रस्याभीष्टहेतुत्वं प्रतिपादयति ।

नतु भगवद्विषयत्वेन कृतस्येत्याशंक्य भगवद्विषयत्वेन कृतस्य कर्मणः परब्रह्मलोकप्राप्तिहेतुत्वं तादृशकर्मणः कर्तव्यत्वं च श्रुत्यर्थाभ्यां साधयत्प्रमाणमाह— **यान्तीति** ।। मद्याजिन इत्यत्र 'सुप्यजातौ णिनिस्ताच्छील्य' इति सूत्रेण ताच्छील्ये णिनिप्रत्ययः । अपिरभिव्याप्तौ साकल्येनेत्यर्थः । तथाच मां यजन्ति तच्छीलाः मद्याजिनः भगवानेव कर्तेत्याद्यनुसन्धानपूर्वकं स्वोचितकर्मणा साकल्येन मत्पूजनशीलाः मां यान्तीति कृष्णवाक्यम् । तेन भगवद्विषयत्वेन कृतस्य कर्मणः परब्रह्मलोकप्राप्तिहेतुत्वं स्फुटमवगम्यते । कृष्णस्य परब्रह्मतायाः विश्वरूपाध्याये सम्यगुपपादितत्वात् । मद्याजिन इति श्रुतार्थापत्त्यैव भगवद्विषयत्वेन कर्म कर्तव्यमित्यपि लभ्यते । ततो भगवद्विषयत्वेन कर्मणः कर्तव्यत्वे तादृशकर्मणः परब्रह्मलोकप्राप्तिहेतुत्वे च स्फुटं प्रमाणं नास्तीति यदुक्तं तन्नेति भावः । न केवलं श्रुतार्थापत्त्या भगवद्विषयत्वेन कर्मणः कर्तव्यत्वं सिद्ध्यति । किन्तु गीतायामेव भगवद्विषयत्वेन स्वोचितकर्माकरणे अनर्थोक्तेश्चेति भावेनाह— **अहं हीति** ।। हिशब्दो यस्मादित्यर्थे । भोक्ता चेति चशब्देन कर्ता समुच्चीयते । अहमेवेत्येवशब्दान्वयः । अन्त्यशब्देन पूज्यसमुच्चयः । तुशब्दोऽपिशब्दार्थः । तेन तथापीति लभ्यते । "तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमि"ति पूर्ववाक्यमत्रानुषञ्जनीयम् । तदयमर्थः—ये अन्यदेवताः यजन्ते तेऽपि मामेव अविधिपूर्वकं यजन्ति । अविधिपूर्वकं स्वकृतं कर्म अन्ये मय्येव समर्पयन्तीति यावत् । अविधिपूर्वकमित्येतद्विवृणोति— **अहं हीति** ।। अहमेव सर्वयज्ञानां भोक्ता कर्ता प्रभुः स्वामी पूज्यश्चेति श्रुत्यादिप्रसिद्धम् । तथापि यस्मात्ते अन्यदेवतायाजिनः । मां तत्त्वेन सर्वयज्ञभोक्तृत्वादिना नाभिजानन्ति अतश्च्यवन्ति स्वर्गभोगानन्तरमधः पतन्तीत्यर्थः ।

नन्वेवं तर्हि सर्वयज्ञभोक्तृत्वादिना भगवज्ज्ञानं यस्यास्ति तेनापि स्वविहितं कर्म कर्तव्यमेव । फलसद्भावात् विपक्षे अनर्थप्राप्तेश्चेति प्राप्तम् । नच तद्युक्तम् ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ।।

इति गीतायामेव भगवज्ज्ञाने सति कर्म न कर्तव्यमित्युक्तत्वादित्यत आह— **यस्त्वित्यादिना उक्तत्वादित्यन्तनेन** ।। यस्त्वित्यादि गीतायां न ज्ञानिनः सर्वदा विहितकर्माकरणमुच्यते । कुर्याद्विद्वानित्यनेन ज्ञानिनः कर्मविधानात् । किन्त्व-सम्प्रज्ञातसमाधिदशायामेव । आत्मरतिरेवेत्यादिविशेषणानां तत्रैव सम्भवात् । तथाचासम्प्रज्ञातसमाधिदशायां भेरीताडनादावपि बाह्यार्थानुसन्धानाभावात्तदा ज्ञानिनः कर्माकरणेऽपि न प्रत्यवायः । अन्यदा तु ज्ञानिनापि स्ववर्णाश्रमोचितं कर्म कर्तव्यमेव । अतो भगवद्विषयत्वेन कर्म कर्तव्यमित्युक्तावपि नोक्तदोष इति भावः । अप्येवंपदाभ्यां यस्त्विति वाक्यस्यासम्प्रज्ञातसमाधियुक्तज्ञानिपरत्वाभावे भगवद्वाक्ययोर्विरोधापत्तिः । नहि व्याहतभाषी भगवानिति सूचितम् । यस्त्वात्म-रतिरेवेति श्लोकस्यायमर्थः— यस्तु पुरुषः आत्मरतिरेव आत्मनः परमात्मनः रतिः दर्शनादिनिमित्तं सुखं यस्य स तथा । तथाच परमात्मदर्शनादिनिमित्तं सुखं प्राप्त एवेत्यर्थः । एवशब्दपर्यवसितार्थमाह— **आत्मतृप्त इति** ।। आत्मना परमात्मप्रसादेनेति यावत् । तृप्तः परमात्मनोऽन्यत्र सर्वात्मनालम्बुद्धिं प्राप्त इत्यर्थः । आत्मन्येव सन्तुष्टश्चेति चशब्दः पूर्वविशेषणसमुच्चयार्थः । आत्मनि परमात्मनि स्थित्येति शेषः । असम्प्रज्ञातसमाधिलक्षणया परमात्मनि स्थित्यैव सन्तुष्टः अन्यत्र सर्वात्मनाऽलम्बुद्धिं प्राप्तः । तथाच यः परमात्मदर्शनादिनिमित्तं सुखं प्राप्तः । परमात्मप्रसादेनासम्प्रज्ञातसमाधिरूपया परमात्मनिष्ठया च परमा-त्मनोऽन्यत्र सर्वत्रालम्बुद्धिं प्राप्तः । तस्यासम्प्रज्ञातसमाधिं परित्यज्य स्ववर्णाश्रमो-चितं कर्म कार्यं न विद्यत इति । स्वकर्मणा असम्प्रज्ञातसमाधिसमानस्य तदधिकस्य वा फलस्यानुत्पादादित्यर्थः । ननु यद्यपि कुर्याद्विद्वानिति ज्ञानिनः कर्म विधीयते । तथापि न फलार्थम् । किन्तु लोकसंग्रहार्थमेव । कुर्याद्विद्वांस्तथा सक्तश्चिकीर्षुर्लोकसंग्रहमिति विशेषणात् । तथाच कुर्यादिति विधिबलेन ज्ञानिनोऽपि कर्मावश्यं कर्तव्यमेवेति कथमुच्यत इत्यत आह— **ये त्वेतदिति** ।।

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ।।

इति पूर्वश्लोके ज्ञानिनमर्जुनं प्रति युद्धोपलक्षितस्ववर्णाश्रमोचितं सर्वं कर्म भगवद्विषयत्वेन कर्तव्यमित्युक्त्वा,

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ।।

इति तदुत्तरश्लोके भगवद्विषयत्वेन स्ववर्णाश्रमोचितकर्मानुष्ठाने मोक्षरूपं फलमुक्त्वा ये त्वेतदभ्यसूयन्त इति श्लोके भगवद्विषयत्वेन कर्माकरणे अनर्थ उक्तः । अतो ज्ञानी अपि न केवलं लोकसंग्रहार्थं किन्तु स्वपुरुषार्थसिद्ध्यर्थं प्रत्यवाय-परिहारार्थं च स्ववर्णाश्रमोचितं कर्म कर्तव्यमेव । ततश्चोक्तं युक्तमेवेति भावः । मयि सर्वाणीत्यादिश्लोकत्रयस्यायमर्थः—हे पार्थ त्वं निराशीः विष्णुभक्तिज्ञाना-द्यतिरिक्तफलकामनाशून्यः । निर्ममः ममेति सुबन्तप्रतिरूपकमव्ययं स्वामित्वाभि-मानार्थकम् । निर्गतं मम यस्मात्सः निर्ममः । स्वामित्वाभिमानशून्य इति यावत् । विगतज्वरः सन्तापहेतुत्वाच्छोक एव ज्वरशब्दोक्तः । ऐहिकपारत्रिक-दुर्यशोनरकपातादिहेतुशोकरहितश्च भूत्वा सर्वाणि कर्माणि मयि सन्न्यस्य भगवानेव सर्वाणि कर्माणि करोति तानि भगवत्पूजात्मकानि चेत्यनुसन्धानरूपसन्न्यासं कृत्वा । अध्यात्मचेतसा आत्मन्यधिकृत्य विद्यमानमध्यात्मम् । विभक्त्यर्थेऽव्ययी-भावः । अधिकरणशक्तिप्रधानकस्याप्यध्यात्मशब्दस्यात्मविषयकपरत्वं यथा दोषा-भूतमहः दिवाभूता रात्रिरित्यादावधिकरणशक्तिप्रधानकस्यापि दोषादिशब्दस्य शक्तिमत्परत्वं तद्वत् । तथाचाध्यात्मं परमात्मविषयकं च तच्चेतश्च अध्यात्मचेतः । यद्वा अधिकश्चासावात्मा च अध्यात्मा । अध्यात्मनि चेतः अध्यात्मचेतः । पक्षद्वयेऽपि भगवद्विषयकचेतसेत्यर्थः । परमात्मा स्वामी अहं तु तदधीनः सन् राजाधीन भृत्यवत्सर्वं करोमीत्येवं भगवदधीनत्वबुद्ध्येति तु परमार्थः । युद्ध्यस्व । उपलक्षणमेतत् । स्ववर्णाश्रमोचितं सर्वं कर्म कुर्वित्यर्थः । ज्ञानिभिरपि स्वविहितं कर्म कर्तव्यमित्युक्त्वा तत्र प्रवृत्त्यर्थं तदनुष्ठानफलमाह— **ये म इति** ।। ये मानवाः ज्ञानिनः आत्मतृप्तश्च मानव इति गीताभाष्ये मानवशब्दस्य ज्ञानिपरत्वेन व्याख्यातत्वात् । श्रद्धावन्तः शास्त्राचार्योपदिष्टेऽर्थेऽननुभूतेऽप्येवमेवैतदिति विश्वासः

श्रद्धा आस्तिक्यं निष्ठेति चोच्यते । तद्युक्ताः सन्तः । अनसूयन्तः गुणेषु दोषारोपोऽसूया । सा च दुःखात्मके कर्मणि प्रवर्तयन्नयं न कारुणिक इति सर्वसुहृदि वासुदेवे गुरौ च प्रसक्ता तामसूयां अकुर्वतः सन्तः । मे मम मतं सम्मतं इदं स्वविहितं कर्म नित्यं अनवरतं अनुतिष्ठन्ति । तेऽपि कर्मभिः निवृत्तकर्मभिः मुच्यन्ते । आनन्दोद्रेकरूपां मुक्तिं प्राप्नुवन्तीत्यर्थः । किमुताज्ञानिनो ज्ञानरूपेण मुच्यन्त इति कैमुत्यसूचनार्थोऽपिशब्दः । एवं कर्मानुष्ठाने फलमुक्त्वा फलाशारहितानां अननुष्ठानप्रसङ्गं वारयितुं कर्माकरणेऽनर्थमाह— **ये त्वेतदिति** ।। तुशब्दः श्रद्धावद्वैधर्म्यसूचनार्थः । श्रद्धारहिता इत्यर्थः । अभ्यसूयन्तः दुःखात्मके कर्मणि प्रवर्तयवन्नयं न कारुणिक इति हरौ गुरौ चासूयां कुर्वन्तो ये मे मतं एतत्स्वविहितं कर्म नानुतिष्ठन्ति । हे पार्थ त्वं तानचेतसो दुष्टचित्तान् । अत एव सर्वज्ञानविमूढान् सर्वस्मिन्कर्मणि जीवे परब्रह्मणि च यज्ज्ञानं त्रिविधं प्रमाणतः प्रमेयतः प्रयोजनतश्च तत्र विमूढान् मोहं प्राप्तान् । अत एव नष्टान् नरकाद्यनर्थभाजो विद्धि जानीहि इति तृतीयश्लोकार्थः । ननु यद्येवं भगवद्विषयकयज्ञादिकर्मावश्यं कर्तव्यमेव तर्हि यत्याश्रमविलोपप्रसङ्गः । तत्र कर्मानुष्ठानाभावे प्रत्यवायस्यैव प्राप्तेरित्यत आह— **लोकेऽस्मिन्निति** ।। अत्र कर्मणोऽवश्यं कर्तव्यत्वे आश्रमान्तरविरोधो यत्याश्रमविलोपप्रसङ्गो न । अयमाशयः—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ।।

इति गीतायां साङ्ख्यानां ज्ञानयोगिनां ज्ञानयोगेन गृहस्थाश्रमं परित्यज्य यत्याश्रमं गृहीत्वा तदुचितशमाद्यनुष्ठानपूर्वको यस्तत्त्वज्ञानोपायस्तेन मुक्तिर्भवति । योगिनां कर्मयोगिनां कर्मयोगेन गृहस्थाद्याश्रमोचितकर्मानुष्ठानपूर्वको यस्तत्त्वज्ञानोपायस्तेन मुक्तिर्भवतीत्यनेन प्रकारेण । हे अनघ मया पुरा अस्मिंल्लोके अधिकारिवर्गे द्विविधा ज्ञानयोगकर्मयोगरूपद्विविधसाधनजन्या निष्ठा स्वरूपेण स्थितिः मुक्तिरिति यावत् । प्रोक्तेति श्रीकृष्णेनार्जुनं प्रत्युक्तम् । तेन यतीनामग्निहोत्रादिगृहस्थ-

कर्माभावेऽपि यत्याश्रमोचितशमाद्यनुष्ठानमस्त्येव । "धर्माः परमहंसानां ब्राह्मा एव शमादिका" इति स्मृत्या शमादिरूपस्वाभाविकब्राह्मकर्मणां यतिधर्मत्वाभिधानात् । अतः स्ववर्णाश्रमोचितं कर्म यतिभिरपि कार्यमेवेति न यत्याश्रमविलोपप्रसङ्ग इति । यद्वा नन्वेवं यदि भगवद्विषयकयज्ञादिकर्मणा ब्रह्मलोकप्राप्तिरूपमुक्तिस्तर्हि यत्याश्रमिणां मुक्तिर्न स्यात् । अधिकाराभावेन यज्ञादिकर्मानुष्ठानाभावात् । तथाच यत्याश्रमविलोपप्रसङ्गः । नहि निरर्थके प्रेक्षावान् प्रवर्तत इत्यत आह— **लोकेऽस्मिन्निति** ।। तथाच गृहस्थानां भगवद्विषयकयज्ञादिकर्मप्रचुरयोगेन मुक्तिः । अतस्तैरुक्तविधयज्ञादिकर्म कार्यम् । यतीनां तु ज्ञानप्रचुरयोगेन मुक्तिः । अतो यत्याश्रमेऽपि मुक्तिसद्भावान्न यत्याश्रमविलोपप्रसङ्ग इति भावः । नन्वेतावता सर्वैरपि स्वविहितं कर्म भगवद्विषयत्वेन कर्तव्यमित्युपपादितम् । तदयुक्तम् । तथा शिष्टाचाराभावात् । नहि कदापि शिष्टेन भगवद्विषयककर्म कृतमस्तीत्यत आह— **त्रेतायामिति** ।। बहुधा विष्णुपूजात्मकत्वेन अन्ते विष्णुसमर्पणपूर्वकं नानादेवतापूजात्मकत्वेन । तेन विनैव अन्यदेवतापूजात्मकत्वेनेत्येवं बहुप्रकारेण यज्ञादिकर्माणि सन्ततानि कृतानि शिष्टैः । कृते कृतयुगे । एकप्रकारेणैव विष्णुपूजात्मकत्वेनैव सन्ततानि शिष्टैरित्यर्थः । तथाच कृतयुगे त्रेतायां च भागवतैर्भगवद्विषयककर्मणोऽनुष्ठितत्वेन शिष्टाचारसद्भावात् आधुनिकैरपि भगवद्विषयकं कर्म कर्तव्यमिति भावः । त्रेतायां बहुधा सन्ततानि । कृते त्वेकप्रकारेणैव सन्ततानीति वाक्यद्वयोक्तार्थे प्रमाणमाह— **अग्निष्टोमेति** ।। अत्राद्यः श्लोकः कृते त्वेकप्रकारेणैव सन्ततानीत्यत्रार्थे प्रमाणम् । द्वितीयश्लोकस्तु त्रेतायां बहुधा सन्ततानीत्यत्रेति विवेकः । यजन्ति कृतयुग इति शेषः ।। **कारित्वादिति** ।। भगवत्सेवाकारित्वादित्यर्थः । यजनप्रकारस्त्वित्थम् । अनन्योपात्तनिरवधिकप्रवृत्तिनिमित्तयोगेनेन्द्रशब्दवाच्याय इन्द्रान्तर्यामिणे हरये स्वाहेति । अत्र हरेर्मुख्यतया तद्विशेषणत्वेनेन्द्रस्य च यजनं सिद्ध्यति । एवमग्न्यादियजनेऽपि बोध्यम् । एवं यजने शिष्टाचारोऽप्यस्तीत्याह— **वसुरिति** ।। वसुनामकः पुरुष इत्यर्थः । एवं कृतयुगे कर्मानुष्ठानप्रकारमुक्त्वा त्रेतायुगे तमाह— **पृथक्पृथक्चेति** ।। केचिद्विष्णु-

समर्पणपूर्वकम् । केचिच्च तेन विनैवेत्येवं पृथक्पृथगित्यर्थः ।। **देवतागणानिति** ।। नानादेवानित्यर्थः । तेन गणशब्दोपपत्तिः । पुराणकर्ता स्वोक्तार्थे सम्मतिं सूचयति-- **त्रेतायां बहुधा तत इति** ।। ततस्त्रेतायां बहुप्रकारेण यजनादेवाथर्वणोपनिषदि त्रेतायां बहुधा सन्ततानीत्युक्तमिति योज्यम् । एवमिन्द्रादिस्थितहरियजनं कर्तव्यम् । तदपि मुख्यप्राणान्तर्यामित्वेनेत्युक्तम् । तदिदं कृतयुगे नियतमेवेत्याह— **एवमिति** ।। जुहोमीत्येवमित्यर्थः । ये कृते जनाः ते वायोः पितरं देवैः सह स्थितं विष्णुमेव । एवं तस्मै सोममेभ्यो जुहोमीत्येवं प्रकारेण यजन्ति । अत्र सहशब्दप्रयोगाद्देवानामप्राधान्यं हरेः प्राधान्यं च सूचितम् । सहयुक्तेऽप्रधान इति सूत्रात् । तेन देवानां हरेश्च विशेषणविशेष्यभावेन यजनं कर्तव्यमिति यत्प्रागस्माभिरुक्तं तत्प्रमापितमिति ज्ञातव्यम् । एवं कृतयुगवत् त्रेतायामपि केचिद्भागवताः यजन्तीत्यन्वयः । अन्ये अनित्यत्रैविद्या नित्यत्रैविद्याश्च तान्देवान् पृथक्प्राधान्येनेष्ट्वा तद्यजनं विष्णावर्पयन्ते । अन्ये चाज्ञरूपनित्यसंसारिणः द्वेषिणश्च यजनं विष्णौ नार्पयन्त इत्यर्थः ।।

## उपनिषत्

**प्लवा ह्येते अदृढा यज्ञरूपा**
**अष्टादशोक्तमवरं येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा**
**जरामृत्युं ते पुनरेवापियन्ति ।। ७ ।।**

**व्या.टी.**——भगवत्पूजात्मकोऽपि कृतो यज्ञादिः सफलश्चेत् किमर्थं यज्ञादेस्तत्पूजात्मकत्वेन करणमित्यतस्तद्रहितस्य स्वरूपं दर्शयति— **प्लवा इत्यादिना** ।। अष्टादशानामुक्तं अष्टादशोक्तम् । अष्टादश च षोडशर्त्विजो यजमानः एतन्निरीक्षकः सभ्यश्च । येषु यज्ञेषु । अदृढत्वमेव स्पष्टमाह— **एतच्छ्रेय इति** ।। ७ ।।

**ध.टि.**—— **अष्टादशानामुक्तमिति** ।। अष्टादशानां विहितमित्यर्थः ।। **षोडश**

**ऋत्विज इति** ।। होत्रादयः प्रधानाः चत्वारो ऋत्विजः । एकैकस्य ऋत्विजः त्रयः त्रयः शिष्याः एवं सति षोडशेत्यर्थः । त एते भगवत्पूजानामकयज्ञरूपाः कर्मविशेषाः अदृढाः प्लवाः नाव इति श्रुत्यर्थः । यथा अदृढप्लवानामकार्यकारित्व-मनर्थकारित्वञ्च तथा भगवत्पूजात्मककर्मणामपीति भावः ।। **एतच्छ्रेय इतीति** ।। ये मूढाः भगवत्पूजात्मकत्वानुसन्धानरहिताः एतद्यज्ञादिकमेव श्रेयःसाधनमिति मत्वा अभिनन्दन्ति सन्तुष्टा भवन्ति । ते पुनःपुनः जरया प्राप्तां मृत्युं मरणमेवापियन्ति प्राप्नुवन्तीत्यर्थः ।। ७ ।।

**न.टी.**——भगवत्पूजात्मकोऽपि कृतो पूजादिरुक्तफलश्चेत् किमर्थं यज्ञादे-स्तत्पूजात्मकत्वेन करणमित्यतस्तद्रहितस्य स्वरूपं निरूपयति— **प्लवा इति** ।। अष्टादशानामुक्तं अष्टादशोक्तम् । अष्टादश च षोडश ऋत्विजो यजमान एतन्निरू-पकः सभ्यश्च येषु यज्ञेषु अदृढत्वमेकस्य स्पष्टमाह— **एतच्छ्रेय इति** ।। ये मूढाः मिथ्याज्ञानिनः एतत्कर्मैव श्रेयः श्रेयोरूपमोक्षसाधनमिति मत्वा अभिनन्दन्ति ते पुनः जरामृत्युं तन्निमित्तं दुःखानुभवोपेतसंसारमपि यन्त्येव ।। ७।।

**रा.खं.**——सत्यविषयत्वेन कृतकर्मणामक्षयफलमुक्त्वा तदविषयत्वेन कृतकर्मणा-मनिष्टफलमाह— **प्लवा इति** ।। एते भगवदविषयत्वेनानुष्ठिताः यज्ञरूपा यज्ञस्य रूपमिव रूपं येषां ते, विध्युक्तयज्ञवदवभासमाना इति यावत्, अदृढाः प्लवाः, लुप्तोपमानं, यथाऽदृढप्लवेन महानद्यादिकं तरन्नापदमाप्नोति तथैवंविधयज्ञैरापदमेवाप्नोति न श्रेय इति । तदेवाह— **अष्टादशेति** ।। येषु यज्ञेषु अष्टादशानां पुरुषाणामुक्त-मष्टादशोक्तं, भगवदविषयत्वहेतुनाऽवरमपकृष्टमेतत्कर्म श्रेयः श्रेयस्साधनं मत्वा ये मूढा अभिनन्दन्ति मोदन्ते ते जरामृत्युं, द्वन्द्वैकवद्भावः, पुनरेवापियन्ति प्राप्नु-वन्ति । पूर्वं जरामृत्युमतामपि पुनःपुनः तत्प्राप्तिरेव भवति, न कदाऽपि तन्निवृत्तिरिति भावः । अष्टादशपुरुषास्तु षोडशर्त्विजः, यजमान एकस्तन्निरीक्षकस्सभ्य एक इति ध्येयम् ।। ७ ।।

**स.टी.**—येषु यज्ञेषु अष्टादशोक्तं अष्टादशानां षोडशर्त्विजो यजमानः सदस्यश्चेत्येषां उक्तं विहितं कर्म अवरम् । ते प्लवा अदृढा हि । क्षीणलोकाः । तत्स्पष्टयति- — **एतदिति** ।। ७।।

**श्री.टी.**—एवं भगवत्प्रीत्यर्थत्वेन तत्पूजात्मकतया कृतस्य यज्ञादिकर्मणो ब्रह्मलोकप्राप्तिसाधनत्वमुक्त्वा तदितरयज्ञादिकर्मस्वरूपं निरूपयति— **प्लवा ह्येत इत्यादिना** ।। येषु यज्ञादिषु अष्टादशोक्तहोत्रादयः प्रधानाश्चत्वारो ऋत्विजः एकैकस्यर्त्विजश्च त्रयस्त्रयः शिष्याः एवं सति षोडशर्त्विजः । एको यजमानः एतन्निरीक्षकः सभ्यश्चापरः इत्येवमष्टादशानां पुरुषाणां उक्तं विहितं अपरं देहायासकरत्वेनाप्रधानं कर्म प्रसिद्धं त एते भगवत्पूजात्मकतया तत्प्रीत्यर्थमकृताः यज्ञादिरूपाः प्लवा नावोऽदृढाः पुनरावर्तिशून्यलोकप्राप्तिसाधनभूता न भवन्तीति हि प्रसिद्धमित्यर्थः । एतदेव स्पष्टमाह ।। **एतदिति** ।। ये मूढाः भगवत्पूजात्मकत्वानुसन्धानरहिताः एतद्यज्ञादिकमेव श्रेयःसाधनमिति मत्वा अभिनन्दन्ति सन्तुष्टा भवन्ति ते पुनः पुनर्जरया प्राप्तं मृत्युं मरणमेवापियन्ति प्राप्नुवन्तीत्यर्थः ।।७ ।।

**उ.टी.**—एवं तान्याचरथ नियतमित्यादिना मन्त्रसन्दर्भेण संक्षेपविस्तराभ्यां यज्ञादिकर्मणां परब्रह्मलोकप्राप्तिहेतुत्वमुपपादितम् । इदानीं तच्च परब्रह्मलोकप्राप्तिहेतुत्वं साङ्गानां निवृत्तानां च यज्ञादिकर्मणामेव । नतु विकलाङ्गानां प्रवृत्तानां वा कर्मणामिति भावेनोभयविधकर्मणामनिष्टहेतुत्वमाह— **प्लवा ह्येत इति** ।। अष्टादशोक्तमित्यस्य

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमाश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।
आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम् ।
एताश्चतस्रोऽर्थविद्या विद्या अष्टादश स्मृताः ।।

इत्युक्ताष्टादशविद्योक्तमित्यर्थः । तत्र त्रैवर्णिकानां वेदावगतं तदन्येषां धर्मशास्त्राद्यवगतमिति विवेक्तव्यमिति केचिदाहुः । टीकाकारास्तु—ऋत्विजः षोडश

यजमानः एतन्निरीक्षकः सभ्यश्चेत्यष्टादशानां पुरुषाणामुक्तमिति व्याचक्षते । उद्दिश्य देवतां द्रव्यत्यागो यज्ञस्तदितरक्रिया कर्मेति विवेकः । एतच्छ्रेय इत्येतदनन्तरमितिशब्दोऽध्याहार्यः । मूढा इत्यस्यावृत्तिः । तत्रैकस्य मिथ्याज्ञानिन इति अपरस्याज्ञा इत्यर्थः ।

ततश्चायं मन्त्रार्थः—एषु यज्ञादिषु अष्टादशोक्तमष्टादशविद्योक्तं ऋत्विजः षोडश एको यजमानः सभ्यश्चैक इति अष्टादशानां पुरुषाणां कर्तव्यतयोक्तमिति वा। कर्म अङ्गभूतं यत्रेतरकर्म । अवरं अपकृष्टं न्यूनमिति यावत् । एते यज्ञरूपाः देवतोद्देशेन द्रव्यत्यागो यज्ञः । दानादेरुपलक्षणमेतत् । ततश्च यज्ञदानतपोरूपाः प्लवाः नदीतरणोपायविशेषाः । 'उडुपं तु प्लवः कोल' इत्यभिधानात् । अदृढाः ब्राह्मणादिवर्णानां संकरजातीनां च विहितं कर्म । यद्यङ्गविकलं तदा तादृशकर्मणा नाभीष्टसिद्धिर्भवति । प्रत्युतानर्थं भवति । यथा अदृढप्लवैर्महानद्यादितरणं कुर्वतामिष्टसिद्धिर्न भवति किन्तु अनर्थ एव तद्वदित्यर्थः । एवं विकलाङ्गकर्मणामनिष्टहेतुत्वमुक्तम् । इदानीं प्रवृत्तकर्मणामनिष्टहेतुत्वं दर्शयति— **एतदिति** ।। एतत् यज्ञादिकमेव श्रेयः अतिशयेन प्रशस्यं स्वप्राधान्येनैव फलजनकमिति यावत् । मूढाः मिथ्याज्ञानिनः । यद्वा मूढाः अज्ञाः सर्वथापि विष्णुनिश्चयशून्याः तद्द्वेषशून्याश्च । एवम्भूताः ये राजसतामसाः ते स्वर्गकामनया यत्नं कुर्वन्ति चेत् तदा राजसयागकरणाद्विष्णुश्रद्धाभावादिन्द्रलोकाख्यस्वयोग्यस्वर्गकामाच्च सांकल्पिकस्वर्गप्राप्त्याभिनन्दन्ति । सुखमनुभवन्ति । सांकल्पिकस्वर्गभोगानन्तरं च मृत्युमेव मृत्युरिव मृत्युः दुःखसाधनत्वान्मरणसदृशं नरकमेवापियन्ति प्रविशन्ति । पुनरित्यनेन पुनः पुनरेवं भाव एव तेषां न कदाप्यन्यथाभाव इति सूचयति । यदि तु ते राजसतामसाः यज्ञं न कुर्युः तदा जरा । द्वितीयार्थे प्रथमा । जरां जराप्रापकं नरलोकमिति यावत् । अपियन्ति प्रविशन्ति । यदि तु राजसतामसाः निषिद्धं कर्म कुर्वन्ति तदा मृत्युं नरकमपि यन्तीति योज्यम् । तथाच स्मृतिः ।

यागात्तु राजसात्स्वर्गः सांकल्पिक उदाहृतः ।
लोकः स दीनदेवानां सनाम्नां वासवादिभिः ।।

विष्णावश्रद्धया योग्यंकामाच्चैषां पुनर्भवेत् ।
नरकं च विना यज्ञं राजसा नरलोकगाः ।।
निषिद्धं कर्म कुर्युश्चेदीयुस्ते नरकं ध्रुवम् ।। इति ।। ७ ।।

**आ.टी.**——पूर्वोक्तरीत्या भगवत्पूजात्मकत्वेन यज्ञाकरणे दोषमाह— **प्लवा इति** ।। अवरं अवरफलकं अष्टादशोक्तं षोडशर्त्विजः यजमानः एतन्निरूपकः सभ्यश्चेत्यष्टादश । तैः क्रियमाणं कल्पसूत्रैरुक्तं कर्म आचारः येषु यज्ञेष्वस्ति । त एते यज्ञरूपाः प्लवाः अदृढाः सच्छिद्रत्वात्तीराप्रापकपोतवत्सम्पूर्णफलका न भवन्ति । तद्विवेचयति— **एतदिति** ।। मूढा मिथ्याज्ञानिनो ये यजमानाः एतद्यज्ञादिकं श्रेयः मोक्षसाधनमभिनन्दन्ति । ज्ञात्वा हृष्यन्ति ते पुनः जरामृत्युं जरया सह मृत्युयुतं संसारमपियन्ति प्राप्नुवन्ति ।। ७ ।।

**गू.टी.**——एवं निष्कामयज्ञादेर्ज्ञानद्वारा मोक्षसाधनत्वमुक्त्वा काम्यकर्मफलमाह— **प्लवा इति** ।। षोडशर्त्विजो यजमान एतन्निरूपकसभ्यश्चेत्यष्टादशानामुक्तं कर्म येषु यज्ञेषु अस्ति त एते यज्ञरूपाः प्लवाः नावः अदृढाः भ्रान्त्या पुमर्थसाधनत्वेन प्रतीता अपि न पुमर्थसाधनानीत्यर्थः । मूढा ब्रह्मसूत्रन्यायानुसन्धानरहिताः रागतो हरिबहिर्मुखाः तद्यज्ञादिकं श्रेयो नित्यपुमर्थसाधनमित्यभिनन्दन्ति जानन्ति कुर्वन्ति च ते ततः जरामृत्युपलक्षितं संसारं पुनः प्राप्नुवन्ति ।। ७ ।।

## उपनिषत्

**अविद्यायामन्तरे वेष्टयमानाः**
**स्वयं धीराः पण्डितम्मन्यमानाः ।**
**जङ्घन्यमानाः परियन्ति मूढा**
**अन्धेनैव नीयमाना यथान्धाः ।। ८ ।।**

**व्या.टी.**——जङ्घन्यमानाः वक्रगतयः तत्र दृष्टान्तमाह— **अन्धेनेति** ।। ८ ।।

**ध.टि.**——भगवत्पूजात्मकत्वानुसन्धानमन्तरेण यज्ञादिकारिणः पुनः निन्दयति-– **अविद्यायामित्यादिना** ।। अविद्यायामन्तरे वर्तमानाः परमाच्छादकमायावेष्टिताः धीराः प्रवृत्तकर्मण्येव च धैर्यवन्तः । स्वयमेव पण्डिता इति मन्यमानाः । जङ्घन्यमानाः भगवन्मार्गे वक्रगतयः पर्यन्ति पुनःपुनः संसारे परिभ्रमन्तीत्यर्थः। तत्र दृष्टान्तमाहेत्यतः पूर्वं तर्हि ते ज्ञानिभिः ऋत्विग्भिः बोध्यन्तामित्यतः इति शेषः ।। **अन्धेनेतीति** ।। अन्धेन नीयमानाः अन्धाः यथा सम्यङ्मार्गादर्शनात्पर्यन्ति । एवं भगवज्ज्ञानरहितऋत्विग्भिः नीयमानाः यजमाना अपि पर्यन्तीत्यर्थः ।। ८ ।।

**न.टी.**——एतदेव सदृष्टान्तं स्पष्टयति— **अविद्यायामिति** ।। अविद्यायामन्तरे वेष्ट्यमानाः अज्ञानावृताः स्वयं धीरा मिथ्याज्ञानादचलन्तः । स्वात्मानं अपण्डितं पण्डितत्वेन मन्यमानाः । जङ्घन्यमानाः वक्रगतयो मूढाः । कर्मणैव श्रेयः प्राप्स्याम इति मिथ्याज्ञानवन्तः । अन्धेन नीयमाना अन्धा इव नानादुष्टयोनिनरकलक्षणगर्तेषु परियन्ति पतन्ति ।। ८ ।।

**रा.खं.**——तेषां भगवदविषयत्वेनानुष्ठाने किं बीजमित्यत आह— **अविद्याया-मिति** ।। अन्तरे 'मध्ये वेष्ट्यमानाः परितो बद्ध्यमानाः, अत्यन्तमविद्यातिरो-हिततत्त्वज्ञाना इत्यर्थः । स्वयं धीराः स्वात्मोत्प्रेक्षितप्रज्ञावन्तः । अपण्डितास्सन्तः अपि पण्डितमात्मानं मन्यमानाः । जङ्घन्यमानाः, 'हन हिंसागत्योः', वक्रगतयः । अन्धेन नीयमाना अन्धा यथा भिन्नमार्गा एवमित्यर्थः ।। ८ ।।

**स.टी.**——श्रेयोऽभिनन्दने कारणमाह— **अविद्यायामिति** ।। जङ्घन्यमानाः कुटिलं गच्छन्तः नित्यं कौटिल्ये गतौ इति यङ् । अत्र दृष्टान्तमाह— **अन्धेनेति** ।। ८ ।।

**श्री.टी.**——भगवत्पूजात्मकत्वानुसन्धानं विना यज्ञादिकर्मकारिणः पुनर्निन्दयति-– **अविद्यायामित्यादिना** ।। अविद्यायामन्तरे वर्तमानाः परमाच्छादकमायावेष्टिताः धीराः प्रवृत्तकर्मकरण एव धैर्यवन्तः । स्वयमेव पण्डिता इति मन्यमाना जङ्घन्य-

मानाः भगवन्मार्गे वक्रगतयः पर्यन्ति पुनः पुनः संसारे परिभ्रमन्ति । तर्हि ते ज्ञानिभिः ऋत्विग्भिर्बोध्यन्तामित्यतः सदृष्टान्तमाह — **अन्धेनेति** ।। अन्धेन नीयमाना अन्धा यथा सम्यङ्मार्गादर्शनात्पर्यन्त्येवं भगवज्ज्ञानादिरहितर्त्विग्भि-र्नीयमाना यजमाना अपि पर्यन्तीत्यर्थः ।। ८ ।।

**उ.टी.**—प्रकृतानां राजसतामसानां स्वरूपं दर्शयन्नेव एतच्छ्रेय इति वाक्योक्तं विशदयति— **अविद्यायामन्तर इति** ।। अत्राविद्यापदमीश्वरेच्छावाचि ।

महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते ।। इत्युक्तेः ।।

भावरूपाज्ञानार्थकं च । 'अथाज्ञानमविद्याहंमतिस्त्रियामि'ति कोशात् । तृतीयार्थे सप्तमी । इदं च पण्डितम्मन्यमाना इत्यादौ हेतुः । अन्तर इत्यस्य मध्य इत्यर्थः अन्तरं तु पराधीन इत्युपक्रम्य बहिर्मध्यावधिष्वपीत्यनुशासनात् । सत्वरजस्तमसा-मिति शेषः । मध्यत्वं चैकप्रकारत्वं विवक्षितम् ।

तदयं मन्त्रार्थः—अन्तरे सत्वरजस्तमसां मध्ये । तृतीयार्थे सप्तमी । मध्यावस्थया एकप्रकारतयेति यावत् । वेष्ट्यमाना बद्धयमाना एकप्रकारं गुणत्रयोपेता राजस-तामसा इत्यर्थः । राजसतामसानामेकप्रकारगुणत्रयोपेतत्वं समो वा श्रुतिपात्रकमिति गीतातात्पर्यनिर्णयोदाहृतप्रमाणसिद्धम् । तट्टीकायां सम एकप्रकारं गुणत्रयोपेत इति व्याख्यानादिति बोध्यम् । धीराः यागाद्युपयुक्तज्ञानवन्तः । अविद्यायां अविद्यया ईश्वरेच्छया भावरूपाज्ञानेन च । पण्डितम्मन्यमानाः । पण्डितं भिन्नपदम् । एकपदत्वे पण्डितम्मन्यमानाः पण्डितमानिन इति वा स्यात् । "आत्ममाने खश्चेति" सूत्रेण खश्प्रत्ययणिनिप्रत्यययोर्विधानात् । एकवचनं तु समुदायापेक्षम् । "न लोकेति" षष्ठीनिषेधात्कर्मणि द्वितीया । यथाच पण्डितान् आत्मनो जानमानाः पण्डितत्वाभिमानयुक्ता इति यावत् । जङ्घन्यमानाः 'हन हिंसागत्योरि'त्यस्मात्क्रिया-समभिहारे यङ्प्रत्ययान्तात् लटः शानजादेशे रूपमेतत् । पुनःपुनः अतिशयेन वा छागादिपशून् घ्नन्तः । उपलक्षणमेतत् । अग्निहोत्रादिकं कुर्वाणा इत्यपि

ग्राह्यम् । मूढाः स्वयमित्यस्यात्रान्वयः । स्वयं स्वात्मना । स्वदोषेणेति यावत् । मूढाः यज्ञादिकमेव वरिष्ठमिति मोहयुक्ताः राजसतामसाः अन्धेन नीयमानाः अन्धाः यथा परियन्ति परिभ्रमन्ति तथा नरलोकसांकल्पिकस्वर्ग नरकेषु पुनःपुनर्गच्छन्ति । एवशब्देनोक्तं नरकादित्रयगन्तृत्वं नियतमेव । नतु कदाचिदपि संसारान्मुक्तिरिति सूचयतीति बोध्यम् ।। ८ ।।

**आ.टी.**——मूढत्वं विवृणोति— **अविद्यायामिति** ।। अविद्यायामन्तरे मध्ये वेष्ट्यमानाः परिवर्तमानाः स्वयं स्वयमेव धीराः स्वात्मानं पण्डितम्मन्यमानाः जातमात्राः अन्धेन नीयमाना प्रेर्यमाणा अन्धाश्चक्षुर्हीना इव जङ्घन्यमानाः वक्रगतयः स्खलन्तः एवं मूढाः परियन्ति परितो यन्ति ।। ८ ।।

**गू.टी.**——एतदेव स्पष्टमाह— **अविद्यायामिति** ।। ज्ञानाभावविपरीत-ज्ञानयोर्मध्ये परिलुण्ठमानाः स्वयमेव स्वेषां धीरत्वं पण्डितत्वं च जानमानाः अन्धेनैव प्रेर्यमाणा अन्धा यथा जङ्घन्यमाना वक्रगतयः तथा मूढगुरुशिक्षिताः स्वयमपि मूढाः सन्तः परितश्चरन्ति ।। ८ ।।

## उपनिषत्

**अविद्यायां बहुधा वर्तमाना**
**वयं कृतार्था इत्यभिमन्यन्ति बालाः।**
**यत्कर्मिणो न प्रवेदयन्ति रागा-**
**त्तेनाऽऽतुराः क्षीणलोकाश्च्यवन्ते ।। ९ ।।**

**व्या.टि.**——अविद्यावेष्टितत्वं च नैकप्रकारेणेत्याह— **अविद्यायामिति** ।। अविद्या-वेष्टितत्वादिकं तेषां कुतो भवतीत्यत आह— **यत्कर्मिण इति** ।। स्वर्गादिरागात् ब्रह्म यन्न प्रवेदयन्ति न जानन्ति तेन कारणेनेत्यन्वयः ।। ९ ।।

**ध.टि.**—— ।। **अविद्यायामितीति** ।। बहुधा अनेकप्रकारेण कृतार्थाः कृतकृत्या इति । अभि सम्यक् मन्यन्ति मन्यन्ते अतो बाला मूर्खा इत्यर्थः ।। **यत्कर्मिण**

**इतीति** ।। यद्यस्मात्कर्मिणः स्वर्गादौ रागादौ ब्रह्म न प्रवेदयन्ति स्वार्थे णिच् । न जानन्ति । तेन कारणेन आतुरा व्यग्रचित्ताः सन्तः क्षीणलोकाः लोकेषु भोगोपपादकपुण्येन क्षीणाः च्यवन्ते । स्वर्गस्थानभ्रष्टाः पतन्त्यधः इत्यर्थः । तथाचानादिकालीनरागक्षय एवाविद्यावेष्टितत्वे निमित्तमिति भावः ।। ९ ।।

**न.टी.**—— ।। **अविद्यायामिति** ।। अविद्यावेष्टितत्वादिकं तेषां कुतोऽभवदित्यत आह— **यत्कर्मिण इति** ।। स्वर्गादिरागाद्ब्रह्म यन्न प्रवेदयन्ति । न जानन्ति तेन कारणेनेत्यन्वयः । अविद्यावेष्टितत्वं नैकप्रकारेणेत्याह— **अविद्यायामिति** ।। कर्मैव ज्ञानकर्मसमुच्चय एव ऐक्यज्ञानमेव मोक्षसाधनमिति बहुधा अविद्यायां वर्तमानाः । बालाः अविवेकिनः । काम्यकर्मकरणमात्रेण वयं कृतार्था इत्यभिमन्यन्ति । अविद्यावेष्टितत्वं तेषां कुतोऽभवदित्यत आह— **यत्कर्मिण इति** ।। स्वर्गादिरागाद् ब्रह्म न प्रवेदयन्ति न जानन्ति । तेन कारणेनेत्यन्वयः । तेषां न ज्ञानम् । तेन मूढाः क्षीणलोकाश्च्यवन्ते ।। ९ ।।

**रा.खं.**——अविद्यावेष्टनं च नैकप्रकारमित्याह— **अविद्यायामिति** ।। बालाः प्रज्ञाहीनाः । कुतस्तेषामविद्यावेष्टनेन भगवत्प्रज्ञाहीनतेत्यत आह ।। **यत्कर्मिण इति** ।। यद्यस्मात्स्वर्गादिक्षयिष्णुफले रागान्निमित्तात् कर्मिणः कर्मानुष्ठातारः तेन कारणेन न प्रवेदयन्ति सम्यङ् न जानन्ति भगवन्तम् । स्वार्थे णिच् । सर्वेभ्यो राजादिवत्किञ्चिदुत्तमत्वेन वा, सर्वसमत्वेन, हीनत्वेन वा जानन्तीति प्रशब्दार्थः । तेन हेतुनाऽऽतुराः व्यग्रचित्तास्सन्तः क्षीणलोका भवन्तः च्यवन्ते लोकच्युता भवन्तीति ।। ९ ।।

**स.टी.**——अविद्यावेष्टितत्वं च नैकप्रकारेणेत्याह— **अविद्यायामिति** ।। अविद्यावेष्टितत्वं तेषां कुत इत्यत आह— **यत्कर्मिण इति** ।। स्वर्गादिरागाद्यद्ब्रह्म न वेदयन्ति वेदयन्ते इति यत् तेन ।। ९ ।।

**श्री.टी.**——अविद्यावेष्टितत्वं च सर्वेषां नैकप्रकारमित्याह— **अविद्यायां बहुधेति** ।। बहुधा अनेकप्रकारेण । कृतार्था कृतकृत्याः इति अभि सम्यङ्मन्यन्ति मन्यन्ते ।

अतो बाला मूर्खा इत्यर्थः । न प्रवेदयन्ति । स्वार्थे णिच् । परं ब्रह्म तज्ज्ञानसाध्यं मोक्षाख्यं महाफलं च न जानन्ति । तेन कारणेन क्षीणलोकाः "क्षीणे पुण्य" इति वचनात् । लोकशब्दस्तत्र भोगापादकपुण्योपलक्षकः स्वर्गलोकभोगापादक-पुण्येन क्षीणाः । अत एवातुराः दुःखिनः सन्तश्च्यवन्ते । स्वर्गस्थानभ्रष्टाः पतन्त्यध इत्यर्थः । तथा चानादिकालीनरागाक्षय एवाविद्यावेष्टितत्वे निमित्तमिति भावः । तेषामविद्यावेष्टितत्वे निमित्तमाह— **यत्कर्मिण इति** ।। यद्यस्मात्कारणात्कर्मिणः काम्यकर्मिणः रागादनादिकालतः स्वर्गादौ रागसद्भावात् । यथोक्तं रागादेश्चापरिक्षयादिति ।। ९ ।।

**उ.टी.**—एवं नित्यसंसारिविशेषाणां राजसतामसानां प्रवृत्तकर्मकरणेनानर्थ उक्तः । इदानीं तदन्येषां प्रवृत्तकर्मकारिणामनिष्टमाह— **अविद्यायां बहुधेति** ।। अत्र वक्ष्यमाणे बहुधा वर्तमानत्वादौ । सर्वत्र निमित्तकथनार्थं अविद्यायामित्युक्तम् । तृतीयार्थे सप्तमी । वर्तमाना इत्यस्यावृत्तिः । तदयमर्थः—बहुधा मुक्तियोग्य-नित्यसंसारितमोयोग्यभेदेन वर्तमानाः जीवाः । अविद्यायां अविद्यया ईश्वरेच्छया भावरूपाज्ञानेन च । यत् यस्मात् । बहुधा वर्तमानाः नानादेवतापूजकत्वरूप-बहुप्रकारेण वर्तमानाः । यस्माच्च वयं वयमेव कृतार्थाः कृतकृत्या इति अभिमन्यन्ति । परस्मैपदं छान्दसम् । अभिमन्यन्ते । कर्तृत्वाभिमानयुक्ता इति फलितार्थः । उपलक्षणमेतत् । रागद्वेषादिदोषयुक्ताश्चेत्यपि ग्राह्यम् । यस्माच्च बालाः बालसदृशाः यथा बालास्तथा सर्वदा विष्णुस्मरणशून्या इत्यर्थः । यस्माच्च रागाद्रागेण स्वर्गादिफलकामनया कर्मिणः यज्ञादिकर्मकर्तारः यस्माच्च न प्रवेदयन्ति । स्वार्थे णिच् । विष्णुमिति शेषः । सर्वयज्ञभोक्तृत्वादिना सर्वप्रकारेण विष्णुं न जानन्तीत्यर्थः । तेन बहुधेत्यादिना यन्नानादेवतापूजनादिकमुक्तं तेन हेतुनेत्यर्थः । ननु—

सम्यक्तत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।
स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ।।
सदा विष्णोरस्मरणात् त्रैविद्यो नाप्नुयात्परम् ।।

इति गीतातात्पर्योक्तस्मृतौ परब्रह्मप्राप्तिविरोधित्वेन ये दोषाः उक्तास्तेषामेव सम्यक्तत्त्वापरिज्ञानादीनामत्र मन्त्रे लोकच्यवनहेतुत्वमुच्यते । तेन क्षीणलोकाश्च्यवन्त इत्युक्तत्वात् । नच तद्युक्तम् । नित्यसंसारिणां तमोयोग्यानां च नानादेवतापूजनादि-सम्भवेऽपि मुक्तियोग्यानां भागवतत्वेनान्यदेवतापूजनाद्यभावात् । यथोक्तम्—

अनन्यदेवतायागाद्भक्त्युद्रेकादकामनात् ।
सदायोगाच्च वैशिष्ट्यं त्रैविद्याद्वैष्णवादपि ।।

स्याद्धि भागवतस्यैवेति । तत्कथं मुक्तियोग्यादिभेदेन त्रिविधानामपि जीवानां नानादेवतापूजनादिनानाहेतुना स्वर्गलोकच्युतिरुक्तेति चेत् । अत्र ब्रूमः—यदुक्तं मुक्तियोग्यानामन्यदेवतापूजनादिकं नास्तीति तत्सत्यम् । किन्तु सद्गुरूपदेशेन सर्वप्रकारेण विष्णावाधिक्यज्ञानं यदा तदैव । यदा तु सद्गुरूपदेशाभावात्सर्वप्रकारेण विष्णावाधिक्यज्ञानं नास्ति तदा फलकामनया यज्ञाद्यनुष्ठानात्स्वर्गच्युतिरस्त्येव। यथोक्तम्—

ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।
जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ।
निर्णेतॄणामभावेन केवलं ज्ञानवर्जिताः ।
ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ।। इति ।।

अतो मुक्तियोग्यानामप्यन्यदेवताभजनादिना स्वर्गच्यवनोक्तौ न विरोधः ।। ९ ।।

**आ.टी.**——अविद्यावेष्टितत्वमनेकविधमित्याह— **अविद्यायामिति** ।। बाला अविवेकिनः विधिरहितयज्ञं कृत्वा वयं कृतार्थाः प्राप्तपुमर्थाः इत्यभिमन्यन्ति अभिमानवन्तो भवन्ति । अविद्यायुक्तत्वं तेषां कुत इत्यत आह— **यदिति** ।। रागात् स्वर्गादिकामात् काम्यकर्मिणो यत्परं ब्रह्म न प्रवेदयन्ति यज्ञभोक्तृत्व-कर्तृत्वसर्वोत्तमत्वादिना न जानन्ति तेन कारणेन काम्यकर्मप्राप्यस्वर्गादिभोगं भुक्त्वा पुण्यभोगानन्तरं क्षीणलोकाः त्यक्तस्वर्गाः अत एवातुराश्च्यवन्ते अधः पतन्ति ।। ९ ।।

**गू.टी.**——अविद्यावेष्टितत्वं नैकप्रकारेणेत्याह— **अविद्यायां बहुधेति** ।। बहुप्रकारेण वर्तमानाः बाला इव कर्मकरणानन्तरं वयमेव कृतार्था इति मन्यमानाः नष्टस्वर्गसुखाः दुःखिनश्च स्वर्गादधोलोकं यान्ति । अविद्यावेष्टितत्वादिकं तेषां कुत इत्यत आह— **यत्कर्मिण इति** ।। स्वर्गादिरागाद् ब्रह्म यतो न प्रवेदयन्ति जानन्ति तेन प्रकारेण वेत्यर्थः ।। ९ ।।

## उपनिषत्

**इष्टापूर्तं मन्यमाना वरिष्ठं**
**नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा**
**इमं लोकं हीनतरं वा विशन्ति ।। १० ।।**

**व्या.टि.**——क्षीणलोकाश्च्यवन्त इत्युक्तं विशदमाह— **इष्टापूर्तमिति** ।। १० ।।

**ध.टि.**——**इष्टापूर्तमितीति** ।। इष्टं यजनं पूर्तं अन्नप्रपादानादिकं इदमेव वरिष्ठं श्रेष्ठं मन्यमानाः सन्तः अन्यच्छ्रेयः ब्रह्म न वेदयन्ते न जानन्ति । अत एव प्रमूढाः निर्णेतॄणामभावेन विष्णोः राजादिवत्किञ्चिदुत्तमत्वं जानन्तः तत्त्वज्ञानशून्या ये ते सुकृते काम्यसुकृतलभ्ये नाकस्य पृष्ठे स्वर्गस्थलविशेषे तत्फलमनुभूत्वा अनुभूय तत्पुण्यक्षयानन्तरं इमं लोकं भूसञ्ज्ञं विशन्ति । ये चेष्टापूर्तमेव वरिष्ठं मन्यमानास्सन्तो नान्यच्छ्रेयो वेदयन्ते । प्रत्युत विष्णोर्देवादिसाम्यहीनत्वविदः। अत एवात्र प्रमूढाः मिथ्याज्ञानिनस्ते यज्ञे दक्षिणातर्पिताचार्याणां तेजसा लब्धे नाकस्य पृष्ठे स्वर्गलोकप्रतिनिधितया निर्मिते सांकल्पिकनाम्नि वीरस्वर्गे इति यावत् । काम्यपुण्यफलमनुभूय तत्क्षयानन्तरं तम एव विशन्तीत्यर्थः । वाशब्दो व्यवस्थितविकल्पार्थः ।। १० ।।

**न.टी.**——क्षीणलोकाश्च्यवन्ते इत्येतदेव विशदमाह— **इष्टापूर्तमिति** ।। इष्टं यजनम् । पूर्तमन्नप्रदानादिकम् । मोक्षसाधनत्वेन वरिष्ठं मन्यमानाः प्रमूढाः

**अन्यत्र ज्ञानभक्त्यादिकं श्रेयः मोक्षसाधनं न वेदयन्ति । ते सुकृते पुण्यसाध्ये नाकस्य पृष्ठे स्वर्गोपरि भोगान् अनुभूत्वा सामान्यतो विष्णुं सर्वोत्तमं ज्ञात्वा अन्ते विष्णौ समर्पयन्तः स्वर्गादीच्छतया परमोद्देश्यतया अन्यदेवतायाजिनः इमं लोकं विशन्ति । विष्णोरन्यदेवतासाम्यं हीनत्वैकत्वादिविदः हीनतरं तम एव विशन्ति इति व्यवस्थितो विकल्पः ।। १० ।।**

**रा.खं.**—एतदेव फलमुक्तानुवादपूर्वं व्यनक्ति— **इष्टापूर्तमिति** ।। इष्टं च पूर्तं च इष्टापूर्तं, द्वन्द्वैकवद्भावः, 'अन्येभ्योऽपि दृश्यत' इति दीर्घः । इष्टं यजनं पूर्तं-मन्नदानादि । वरिष्ठं परमश्रेयस्साधनं मन्यमानाः अन्यद्भगवल्लक्षणं श्रेयः प्रशस्तं वस्तु न वेदयन्ते न सम्यग्जानन्तीत्यर्थः । ते भगवतः किञ्चिदुत्तमत्वज्ञानपूर्वकं कर्मानुष्ठातारः सुकृते सुकृतसाध्ये नाकस्य स्वर्गस्य पृष्ठे विस्तीर्णस्थलविशेषेऽनुभूत्वा कामाननुभूय इमं लोकं भूलोकं मानुषभावमिति यावत् विशन्ति प्राप्नुवन्ति । ते हरेः समत्वहीनत्वज्ञानपूर्वं कर्मकृतस्तु हीनतरं लोकमन्धन्तमो विशन्ति । वाशब्दो व्यवस्थितविकल्पार्थः । तदुक्तं—

देवेभ्य उत्तमं विष्णुं राजवद्यस्तु मन्यते ।
याजी स मानुषं याति साम्यहीनत्ववित्तमः ।।
इति । तथा चोक्तं गीतातात्पर्ये—
ये न जानन्ति तं विष्णुं याथातथ्येन संशयात् ।
जिज्ञासवश्च नितरां श्रद्धावन्तः सुसाधवः ।।
निर्णेतॄणामभावेन केवलं ज्ञानवर्जिताः ।
ते याज्ञिकाः स्वर्गभोगक्षये यान्ति मनुष्यताम् ।। इति ।।

तथा—

ये तु भागवताचार्यैस्साम्यग्यज्ञादि कुर्वते ।
बहिर्मुखा भगवतोऽनिवृत्ताश्च विकर्मणः ।।
दक्षिणातर्पितानां ते आचार्याणां तु तेजसा ।
यान्ति स्वर्गं ततः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।। इति ।। १० ।।

**स.टी.**——क्षीणलोका इत्युक्तं विवृणुते— **इष्टापूर्तमिति** ।। श्रेयो ब्रह्म मोक्षं च वेदयन्ते जानन्ति । नाकस्य पृष्ठे स्वर्गस्थले सुकृते सुकृतलब्धे अनुभूत्वा तत्फलमनुभूत्वा क्वापि छन्दसीति वचनात् । अयमत्र विवेकः । ये त्रैविद्याः पूतपापाः सोमपाः ब्रह्मादीनिष्ट्वा विष्ण्वर्पितकर्मणः स्वर्गार्थं विष्णुमेव प्रार्थ्यमानाः सर्वाधिक्यं विष्णोर्जानमाना अपि ब्रह्मरुद्रादीनां तत्परिवारत्वादिकमजानानाः ते इमं लोकमाविशन्ति । क्रमेण भूलोकमाविश्य मर्त्यभावं प्राप्नुवन्ति । निर्णेतॄणामभावेन केवलं ज्ञानवर्जिता एते । निर्णेतॄणां सद्भावे ब्रह्मपरिवारत्वादिज्ञानयोग्या मुक्तियोग्या एवैते । यथोक्तं गीतातात्पर्यनिर्णये—

क्रमेण मुच्यते विष्णौ कर्माण्यन्ते समर्पयत् ।
यदि सर्वाणि नियमाज्जन्मभिर्बहुभिः शुभैः ।। इति ।।

सम्यग्ज्ञानयोग्यत्वात् । "देवेभ्य उत्तमं विष्णुं राजवद्यस्तु मन्यते" । ते मिथ्याज्ञानानुप्रवेशाद्धीनमिश्रबुद्धित्वाद्विमिश्रसाधनमानुषत्वं प्राप्नुवन्ति । ततो विमिश्रमतयस्सन्तः विमिश्रगतित्वरूपहीनं पदं प्राप्नुवन्ति । तामसास्तु दुर्योधनप्रभृतयः स्वर्गाच्च्युताः इमं लोकमाविश्य कृतसाधनाः विष्णोः हीनत्वसाम्यविदः तम एव प्राप्नुवन्ति ।। १० ।।

**श्री.टी.**——यत्कर्मिणो न प्रवेदयन्तीत्युक्तं विवृण्वन् क्षीणलोकाश्च्यवन्त इत्युक्तं च्यवनं विविच्य दर्शयति— **इष्टापूर्तमिति** ।। इष्टं यजनम् । पूर्तं अन्नप्रपादानादिकम् । इदमेव वरिष्ठं श्रेष्ठं मन्यमानाः सन्तः अन्यच्छ्रेयो ब्रह्म मोक्षाख्यं च न वेदयन्ते न जानन्ति । अत एव प्रमूढाः । एतेषां प्रमूढत्वं नाम निर्णेतॄणामभावेन केवलं तत्त्वज्ञानशून्यत्वमेव विवक्षितम् । तथाच ये विष्णोः राजादिवत्किञ्चिदुत्तमत्वं जानन्तो निर्णेतॄणामभावेन केवलं ज्ञानशून्यास्ते सुकृते काम्यसुकृतलभ्ये नाकस्य पृष्ठे स्वर्गस्थलविशेषे तत्फलमनुभूत्वा क्वापि छन्दसीति छन्दसि ल्यपः क्त्वादेशविधानादनुभूय तत्पुण्यक्षयानन्तरं इमं लोकं भूराख्यं विशन्ति । ये चेष्टापूर्तमेव वरिष्ठं मन्यमानाः सन्तः नान्यच्छ्रेयो वेदयन्ते प्रत्युत विष्णोर्देवादिसाम्यहीनत्वविदः । अत एव प्रमूढाः मिथ्याज्ञानिनस्ते यज्ञे दक्षिणातर्पिताचार्याणां तेजसा लब्धे

नाकस्य पृष्ठे स्वर्गप्रतिनिधितया निर्मिते सांकल्पिकनाम्नि वीरस्वर्ग इति यावत् । काम्यं पुण्यफलमनुभूय तत्क्षयानन्तरं तम एवाविशन्तीत्यर्थः ।। १० ।।

**उ.टी.**—ननु क्षीणलोकाश्च्यवन्त इत्यत्रोक्तो लोकः कः तत्क्षयोऽपि न नाशः । जगत्स्थितिकाले तदभावात् । च्यवनानन्तरं च किं भवतीत्याशंक्य लोकोऽत्र स्वर्गः । तत्क्षयो नाम स्वर्गलोके सुखानुभवक्षयः । च्यवनानन्तरं च मनुष्यलोकस्य तमसो वा प्राप्तिर्भवतीति भावेनाविद्यायां बहुधेति मन्त्रोक्तं विशदयन्नेव स्वर्गलोकप्राप्तौ प्रयोजकान्तरमप्याह— **इष्टापूर्तमिति** ।। १० ।।

**आ.टी.**—तदेव स्पष्टमाह— **इष्टापूर्तमिति** ।। प्रकर्षेण मूढा इष्टं यजनं पूर्तं तटाकारामादिकरणं वरिष्ठं श्रेयः साधनं इतोऽन्यत् परब्रह्म मोक्षादिकं न श्रेय इति वेदयन्ते जानन्ति ज्ञापयन्ति च । ये प्रकर्षेण मूढास्ते सुकृते सुकृतप्राप्ये नाकस्य स्वर्गस्य पृष्ठे उपरि सुखमनुभूत्वा अनुभूय विष्णोस्सर्वेभ्यः किञ्चिदुत्तमत्वं जानन्तो नित्यत्रैविद्या इमं लोक मानुषं विशन्ति । अज्ञा नित्यसंसारिणः हीनं नरकं विशन्ति । विष्णोः रुद्रादिसाम्यं जीवरूपेण हीनत्वं वा जानन्तः हीनतरं तम एवाविशन्ति प्राप्नुवन्ति । यथोक्तं गीताभाष्यादौ ।। १० ।।

**गू.टी.**—क्षीणलोकाश्च्यवन्त इत्युक्तं विशदमाह— **इष्टापूर्तमिति** ।। इष्टं च पूर्तं चेष्टापूर्तम् । इष्टं यजनं यज्ञादि । पूर्तं तटाकादिनिर्माणमेव श्रेयस्साधनं मन्यन्ते । इतोऽन्यद्ज्ञानादि न श्रेय इति च ये मन्यन्ते मूढाः ते नाकस्य पृष्ठे स्वर्गोपरि सुकृतंप्राप्यसुखमनुभूत्वा अनुभूय विष्णोः सर्वेभ्यः किञ्चिदुत्तमत्वं जानन्तः इमं लोकमाविशन्ति । साम्यं हीनत्वमेकत्वञ्च जानन्तो हीनतरं तम एवाविशन्ति ।। १० ।।

### भाष्यम्

**विष्णोः सर्वेभ्यः किञ्चिदुत्तमत्वं जानन्त इमं लोकमाविशन्ति । साम्यं हीनत्वं वा जानन्तो हीनतरं तम एव विशन्ति ।**

**देवेभ्य उत्तमं विष्णुं राजवद्यस्तु मन्यते ।**

**याजी स मानुषं याति साम्यहीनत्ववित्तमः ।। इति च ।।**

**'त्रैविद्या माम्' इति तु 'येऽप्यन्यदेवताभक्ताः । तेऽपि मामेव यजन्ति' 'अहं हि सर्वयज्ञानां भोक्ता' इत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः ।**

**व्या.टी.**—इमं लोकं हीनतरं वा लोकं विशन्तीत्यस्यैकविषयत्वमवगम्यते तदयुक्तं हीनोत्तमत्वाल्लोकयोः । अतः क इमं लोकं विशति को वा हीनतरं इत्यत आह— **विष्णोरिति** ।। उक्तार्थं प्रमाणेन द्रढयति— **देवेभ्य इति** ।। त्रैविद्या मामित्यत्र मां सम्यक् ज्ञात्वा यजतामपि मर्त्यलोकप्राप्त्युक्तेः राजवद्यस्तु मन्यते ।। याजी स मानुषं यातीति विशेषोक्तिरयुक्तेत्यत आह— **त्रैविद्या इति** ।। त्रैविद्या मामिति वाक्ये उक्तास्तु त्रैविद्या अज्ञानपूर्वयाजिनः । कुतः । येऽप्यन्यदेवताभक्तास्तेऽपि मामेव यजन्ति किन्तु अविधिपूर्वकं यजन्ति । कथमविधिपूर्वकत्वं यजनस्येत्यतोऽहं हि सर्वयज्ञानां भोक्ता नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते इत्युक्तत्वादिति योजना । अज्ञत्वाद्यजनान्मर्त्यलोकप्राप्तिः अतो विशेषोक्तिर्नायुक्तेति भावार्थः ।।

**ध.टि.**—अन्ये अशक्ता राजवत्किञ्चिदुत्तमत्वं विष्णोर्जानन्तो जनाः । त्रेतायामिति वर्तते । तान्देवान् पृथग्देवतात्वेनेष्ट्वा तद्यजनं विष्णावर्पयन्ते । अन्ये विष्णोरन्यैः साम्यं हीनत्वं वा जानन्तः पृथक्तानिष्ट्वा अन्तेऽपि विष्णौ नार्पयन्त इत्यर्थः ।। **विष्णोरितीति** ।। ज्ञात्वा तद्यजनं अत्र सर्वेभ्यो देवेभ्यः किञ्चिदुत्तमत्वं राजादिवदुत्तमत्वमित्यर्थः । तस्मिन्नार्पयन्त इत्यर्थः ।। साम्यमित्यादौ सर्वेभ्य इत्यनुवर्तते । जानन्तः साम्यादिकं ज्ञात्वा तद्यजनं तस्मिन्नन्तेऽपि न समर्पयन्त इत्यर्थो भाष्ये । **देवेभ्य इतीति** ।। मन्यते मत्वा चान्ते समर्पयन्तीति ग्राह्यम् । स याजी याजकः साम्यहीनत्ववित् । देवेभ्य इति वर्तते । तथापि अन्तेऽप्यसमर्पयन् इति भाष्यं व्याख्येयम् ।। ।। **त्रैविद्या मामित्यत्रेति** ।।

त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।

ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ।।

ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।। इति।।

सम्यक् ज्ञात्वा यजतामपि सर्वदेवताप्रेरकत्वादिना विष्णोर्देवेभ्यस्सम्यक्सर्वोत्तमत्वज्ञानपूर्वकयाजिनो नेत्यज्ञानपूर्वयाजिनः । राजादिवत् किञ्चिदुत्तमत्वमेव ज्ञात्वा याजिन इति यावत् ।

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।।

इति वाक्यमर्थतोऽनुवदति— **येऽप्यन्यदेवतेति** ।। किन्त्वविधिपूर्वकं यजन्तीति भाष्ये शेषोऽभिप्रेतः । अहं हीत्युत्तरवाक्यमवतारयति— **कथमविधीति** ।। पूर्वकृतचोद्यं परिहरति— **अज्ञत्वादिति** ।। त्रैविद्या मामित्यत्रोक्तयाजिनामिति शेषः ।। **नायुक्तिरिति** ।। नायुक्ततेत्यर्थः ।।

**वामन.टी.**—असत्यकामा यज्ञा हि प्लवन्ते । येषु यज्ञेषु अष्टादशपशुकमग्निकर्माप्यनित्याल्पफलत्वादवरमित्युक्तम् । किं पुनरन्यानीत्यर्थः । 'एतच्छ्रेयः' इत्यादिवाक्यैरसत्यकामयज्ञानामवरत्वं सम्यक् प्रपञ्चयति । जङ्घन्यमाना अतिजघन्या भवन्तः कर्मिणस्तु कर्मैकभक्ताः सुकृतेऽनुभूत्वा सुकृते सति तत्फलमनुभूय क्षपयित्वेत्यर्थः । इमं लोकं हीनतरं वा विशन्तीत्येतद्वाक्यं विवृणोति— **विष्णोः सर्वेभ्य इत्यादिना** ।। अस्माल्लोकादनित्यनरकं हीनं हीनतरमन्धन्तमः किञ्चिदुत्तमत्वेऽपि किञ्चित्संशयज्ञा अनित्यनरकमाविशन्तीति भवति । कथंञ्चित् अतो विष्णोः सर्वोत्तमत्वं सर्वैरपि सर्वथा निस्संशयेन ज्ञातव्यमिति मथितार्थः । अत्र पुनर्देवेभ्य इत्यादिब्रह्माण्डवचनं चाह । ननु त्रैविद्या मां सोमपाः पूतपापा इत्यादौ भगवद्याजिनां स्वर्गमात्रफलत्वादधःपात एव भवति । न मोक्ष इत्यत आह— **त्रैविद्या मामिति** ।। अत्र त्वज्ञानपूर्वयाजिनस्त्रैविद्या उक्ताः । नतु भगवत्तत्त्वज्ञाः । कुत एते चान्यदेवताभक्ताश्च मामेव सर्वयज्ञभुजमविधिपूर्वकं यजन्तीत्युक्तत्वात् । अतो विधिवद्विष्णुयाजिनां मोक्ष इत्यत्र न कश्चिद्विरोधः ।।

**वा.टी.**——अधुना श्रुतिरुत्तमाधममध्यमेषु 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' इत्युत्तमानां मोक्षाख्यफलस्य प्रागेवोक्तत्वान्मध्यमाधमयोः फलमाह— **इमं लोकमिति** ।। इमं लोकं वा हीनतरं वा लोकं विशन्तीति योजना । व्यवस्थितश्चायं विकल्पः । मध्यमा इमं लोकमधमास्तु हीनतरमिति । अन्धन्तमस्यपि द्वैविध्यमस्तीति सूचनाय हीनतरमित्युक्तम् । विष्णोः साम्यज्ञानिनां हि हीनतमःप्राप्तिः, विष्णोरधमत्वज्ञानिनां हीनतरतमःप्राप्तिरिति विवेकः । एवं च कर्मकर्तृणां मोक्षं मध्यमलोकहीनलोकप्राप्तिं वदन्ती श्रुतिः प्रागुक्तबाहुविध्यमुत्तमाधममध्यमजीवानादायैव पर्यवस्यतीति सूचयति । तदिदमाह भाष्यकारः—

पृथक् पृथक् च त्रेतायां यजन्ते देवतागणान् ।
यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः ।। इति ।।

'एवं त्रेतायां केचिदन्येऽपृथक् तानिष्ट्वा विष्णावर्पयन्ते नचान्ये' इति च । तत्राद्यपद्यस्यायमर्थः—त्रेतायां केचिद्देवतागणान् पृथक् पृथगेव यजन्ते । इन्द्रादिनामभिः स्वर्गादिकामनया तांस्तान्देवानेव यजन्ते । विष्णुं तु राजादिवदीषत्स्वामित्वेनैव जानन्ति, नतु यज्ञभोक्तृतयाऽपि । केचित्तु विष्णुमवजानन्तोऽन्यानेव देवान्यजन्ते । प्राज्ञास्तु त्रेतायामपि कृतयुगवदेव यजन्ति पूजां कुर्वन्ति । तत एव बहुधेत्युक्तं श्रुताविति । द्वितीयश्लोकस्यायमर्थः—त्रेतायामन्ये मध्यमाधमयोरन्ये केचित्प्राज्ञा एवं कृतयुगवद्विष्णुमेव यजन्तः अपृथक् विष्णुना सह अधिष्ठानतया तान्देवानिष्ट्वा विष्णावर्पयन्ते । अन्ये मध्यमाधमाश्च नार्पयन्त इति । पृथगित्येव पदच्छेदे एवमित्यनेन 'वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः' इति प्रागुक्तपरामर्शानुपपत्तिरिति ज्ञेयम् ।

**स.टी.**——तदिदमभिप्रेत्याभाषिष्ट— **विष्णोः सर्वेभ्य इत्यादिना साम्यहीनत्ववित्तम इति चेत्यन्तेन** ।। अत्र त्रैविद्या मामिति त्विति भाष्यं तु इमं लोकमित्यस्योदाहरणपरमिति अवेत । अत्र त्रैविद्या इति श्लोकत्रयस्य तथा येऽप्यन्यदेवताभक्ता इत्यस्य तथाऽहं हि सर्वयज्ञानां इत्यस्यायमर्थः । तत्र प्रथमश्लोकत्रयस्य तावदयं भावः । अहं क्रतुरित्यादिना सर्वक्रत्वादिभोक्तृत्वं

यदुक्तं भगवत्तस्तदसदिति वक्ष्यामीति गूढाभिसन्धिना यदि सर्वत्र भोक्ता भगवान् तर्हि किं भागवतानां त्रैविद्यानां च फले साम्यमेवेति पृष्टस्येदमुत्तरम् । तत्प्रकारश्च सर्वत्र भगवतो भोक्तृत्वेऽपि मद्भजनं भागवतैरनुष्ठितं त्रैविद्यानुष्ठितदेवतापित्रादि-भजनापेक्षयोत्कृष्टफलम् । अत एव गीताभाष्येऽभाषिष्ट । तथापि मद्भजन-मेवान्यदेवताभजनाद्वरमिति दर्शयति— **त्रैविद्या इत्यादिना** ।। **श्लोकत्रयेणेति** ।। अयं भावः । अन्यदेवताः भक्त्या यजन्त इति त्रैविद्यानां अन्यदेवतायाजित्व-मभ्यधात् । तत्प्रतियोगितया भागवतानां विशेषधर्ममाह— **अनन्या इति** ।। नात्राद्वैतज्ञानिनोऽनन्या इति व्याख्यानं युक्तम् । किन्तु अविद्यमानमन्यदेषां तेऽनन्याः तच्चिन्तयन्तो मां प्रसङ्गात् चिन्तनीयमिति लभ्यते । अत एव गौतमखिलेषु समामनत् ।

सर्वं परित्यज्य मनोगतं यद्विना देवं केवलं शुद्धमाद्यम् ।
ये चिन्तयन्तीह तमेव धीरा अनन्यास्ते देवमेवाविशन्तीति ।।

**स्वर्गतिं प्रार्थयन्ते** । कामकामा इति कामकामत्वमुक्तम् । तत्प्रतियोगितया **चिन्तयन्ते** । मामित्यवोचत । तदर्थश्च मानेन चिन्तयन्ते । नतु काममिति । नतु मामभिजानन्ति तत्त्वेनेति त्रैविद्यस्यातिशयितभक्तिज्ञानाभाव उक्तः । तत्त्वज्ञानाभावे भक्त्यभावात् । तत्प्रतियोगितयाभ्यधित— **पर्युपास इति** ।। तदर्थश्च भक्त्युद्रेकेणान्यगुणगणज्ञानादुपासत इति । मामिष्ट्वा मामेव यजन्त इति त्रैविद्यानामन्ते समर्पणमुक्तं तत्प्रतियोगितयाभ्यधत्त— **नित्याभियुक्तानामिति** ।। सदा योगादुपासन्तेति सर्वदा स्मरणोद्देशादियोगादुपासन्ते । क्षीणे पुण्ये मर्त्यलोकं विशन्ति । गतागतमिति त्रैविद्यानां पुनरावृत्तलोकत्वमभ्यधत्त । प्रकृष्टत्वद्योतनाय तत्प्रतियोगितया वैशिष्ट्यादि द्योतयिषुः योगक्षेमं वहाम्यहमित्यभ्यधात् । योगक्षेमवहनं चापुनरावृत्तपुरुषार्थदानम् । अतो भगवद्याजिनोऽपि त्रैविद्यात्केवल-भगवद्याजित्वेन भागवतानां वैशिष्ट्यम् । ननु 'पशून्देवताभ्यः प्रत्यौहदि'त्यादौ ब्रह्मादीनामप्यन्यदेवतायाजित्वमश्रावि । नैष दोषः । अखिलाः ब्रह्मादयः अश्वमेधादिभिर्यज्ञैः । केशवयाजिनोऽपि अन्यदेवताः मा नयन्ति । नतु देवतात्वेने-

त्यभ्युपगमात् । ननु "नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति त" इत्यत्र भगवन्तमजानतां तत्त्वेनेति विशेषणाद्विपरीतं जानतां वा त्रैविद्यानां स्वर्गभोगानन्तरं च्यवनमुच्यत इति किं न स्यात् । नतु मामभिजानन्ति तत्त्वेनेत्यस्य सर्वदेववरत्वेन जानन्तोऽपि ब्रह्मरुद्रादीन् तत्परिवारत्वेन न जानन्तीत्यर्थोपपत्तेः । किमत्र कल्पकम्। त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते इति त्रैविद्यस्यान्ते समर्पणेन भगवद्यजनप्रार्थनयोरुक्तिः । सर्वदेवपरत्वाज्ञाने तदसम्भवात् । अभिशब्दलाभाच्च । किञ्च—

सर्वदेववरत्वेन यो न जानाति केशवम् ।
तस्य पुण्यानि मोघानि याति चान्धतमे ध्रुवमिति ।।

केवलाज्ञानां यज्ञादिकर्माणि मोघानि मिथ्याज्ञानिनां विपरीतफलानि च भवतीत्युक्तत्वात् मोघाशा इति विपरीतज्ञानिकर्मणां मोघत्वस्योक्तत्वाच्च स्वर्गभोगानन्तरं च्यवनमत्र केवलाज्ञानमिथ्याज्ञानिनामेवोच्येतेति ।। तस्मात्

इष्टापूर्तमितीत्युक्तेः पूर्वोक्ताद्भिन्नतागते ।
राजवन्मन्यमानेन नैवात्रैकत्ववेदना ।।
मुक्तियोग्यामुक्तियोग्यभेदेन द्वित्वसंश्रयात् ।
त्रित्वेनैवोक्तमिति त्वत्र शंकनं नैव शोभते ।।
मध्यमैः कृतयज्ञादेरपि वाच्यं फलं यतः ।
द्वित्वे हतावपि वक्तव्या गतिरत्र कथं च सा ।।

भगवद्भोगनिमित्तं हि फलम् । स चेत्सर्वत्र समस्तदा सर्वेषां फलसाम्येन भाव्यम् । तदभावश्चेत्तर्ह्यहं क्रतुरित्युक्तं सर्वत्र भगवतो भोक्तृत्वं असत्यमित्यभिसन्ध्युद्घाटनस्येदमुत्तरम्— **येऽपीति** ।। सर्वत्र भगवतो भोक्तृत्वेऽपि युक्तः फलभेदः । विधिपूर्वकत्वाविधिपूर्वकत्वाभ्यां विशेषात् । त्रैविद्यादिकृतानां यज्ञानां भगवांश्चेद्भोक्ता कथं तर्ह्यविधिपूर्वकत्वं इत्याशंकायां अविधिपूर्वकत्वे कारणमुच्यते— **अहं हीति** ।।

**व.टी.**——अविष्णुपूजार्थत्वेन कर्मकर्तॄणां फलमुच्यते । 'नाकस्य पृष्ठे सुकृते' इत्यादि । तत्र केषाञ्चिदेतल्लोकप्राप्तिः केषाञ्चिदितोऽपि हीनलोकप्राप्तिरित्यत्र किं कारणमित्यत आह— **विष्णोरित्यादिना** ।। अत्रैव स्मृतिं चाह— **देवेभ्य इति** ।। ननु यथा विष्ण्वन्यदेवतायाजिनामन्तवत्फलत्वं प्रतीयते एवं विष्णु-याजिनामपि तत्प्रतीयते 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थ-यन्त' इत्यादिना । अतः को विष्णुयाजिनां विशेष इत्यतस्तज्ज्ञानपूर्वकं विष्णु-याजिनामेव ज्ञानपूर्वकं तद्याजिनां तु नान्तवत्फलत्वमिति भावेनाह— **त्रैविद्या इति** ।। त्रैविद्या इत्यादि वाक्येऽन्तवत्फलत्वेनोक्तास्त्रैविद्या अज्ञानपूर्वयाजिनः नतु साक्षाद्विष्णुज्ञानपूर्वयाजिनः । अतस्तेषामन्तवत्फलत्वमुक्तम् । कुत एत-दिति चेत् येऽप्यन्यदेवता भक्ता इति वाक्ये अन्यदेवतायाजिनां यजन्त्यविधि-पूर्वकमित्यज्ञानकथनमविधिपूर्वकत्वमपीत्यत उक्तम्— **अहं हीति** ।।

**श्री.टी.**——इष्टापूर्तं मन्यमाना वरिष्ठमित्यत्रेमं लोकं हीनतरं वा विशन्तीत्युक्तं लोकद्वयप्राप्तिरूपं फलमेकस्यैवोच्यत इत्यन्यथाप्रतीतिनिरासाय विवेकेन व्याचष्टे-— **विष्णोरिति** ।। सर्वेभ्यो देवेभ्यः । किञ्चिदुत्तमत्वं राजादिवदुत्तमत्वमित्यर्थः ।। **जानन्त इति** ।। ज्ञात्वा तद्यजनमन्ते तस्मिन्समर्पयन्त इत्यर्थः । साम्यमित्यादौ सर्वेभ्य इति वर्तते । जानन्तः साम्यादिकं ज्ञात्वा तद्यजनं तस्मिन्नन्तेऽप्यसमर्पयन्त इत्यर्थः । अत्र प्रमाणं चाह— **देवेभ्य इति** ।। मन्यते मत्वा चान्ते समर्पयतीति ग्राह्यम् । स याजी याजकः । साम्यहीनत्ववित् देवेभ्य इति वर्तते । तथा विदित्वान्तेऽप्यसमर्पयन् । ननु—

देवेभ्य उत्तमं विष्णुं राजवद्यस्तु मन्यते ।
याजी स मानुषं लोकं याति.... ।।

इति देवेभ्यो राजवत्किञ्चिदुत्तमत्वं जानतां मर्त्यलोकप्राप्त्युक्तिरयुक्ता ।

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकं अश्नन्ति दिव्यान्दिवि देवभोगान् ।।
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।

इति गीतायां सर्वदेवताप्रेरकत्वादिना सम्यगेव विष्णोः सर्वोत्तमत्वं ज्ञात्वा यजतामपि मर्त्यलोकप्राप्त्युक्तेरित्यत आह— **त्रैविद्या मामिति त्विति** ।। त्रैविद्या मामिति गीतावाक्योक्तास्तु त्रैविद्या अज्ञानपूर्वयाजिन इत्यन्वयः । विवक्षितता इति शेषः । सर्वदेवताप्रेरकत्वादिना विष्णोर्देवेभ्यः सम्यक् सर्वोत्तमत्वज्ञानपूर्वकयाजिनो न भवन्तीत्यज्ञानपूर्वयाजिनः । राजादिवत्किंचिदुत्तमत्वमेव ज्ञात्वा याजिन इति यावत् । तेषां च मर्त्यलोकप्राप्तिर्युक्तैवेत्यर्थः । तथाच प्रमाणगीतावाक्ययोरेकार्थत्वान्न विरोध इति भावः । त्रैविद्या मामित्यत्राज्ञानपूर्वयाजिन एव त्रैविद्या विवक्षिता इत्यत्र ज्ञापकमाह— **येऽपीति**।।

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।।

इति वाक्येनान्यदेवतायाजिनामविधिपूर्वकयाजित्वमुक्त्वा कथमविधिपूर्वकत्वं तद्यजनस्येति शंकायामविधिपूर्वकत्वे कारणमुक्तम् ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
नतु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।। इति ।।

तथाच मां तत्त्वेनाभिजानन्तीत्यन्यदेवतायाजिनां सम्यक्सर्वोत्तमत्वज्ञानाभाववचनेनाज्ञानपूर्वयाजिन एव त्रैविद्या विवक्षिता इति ज्ञायत इत्यर्थः ।।

**उ.टी.**—नन्वत्र मन्त्रे इमं लोकं हीनतरं वा विशन्तीत्युच्यते । तत्रेमं लोकं के विशन्ति । के च हीनतरं लोकं विशन्ति । नचैकस्य क्रमेणोभयप्राप्तिरिति वाच्यम् । वाशब्दविरोधादित्यपेक्षायामाह— **विष्णोरिति** ।। सर्वयज्ञभोक्तृत्वादिसर्वप्रकारेणोत्तमत्वं व्यावर्तयितुं किञ्चिदित्युक्तम् । तथाच गुणैरत्युत्तमत्वं जानन्त इत्यर्थः । अनेन वरिष्ठं नान्यच्छ्रेयो वेदयन्त इत्यंशो व्याख्यातः । तत्प्रकारं च दर्शयिष्यामः । प्रमूढा इत्येतद्व्याचष्टे— **साम्यं हीनत्वं वा जानन्त इति** ।। ब्रह्मादिसाम्यं तद्धीनत्वं वा जानन्त इत्यर्थः ।। **तम एवेति** ।। साम्यहीनत्वज्ञानिनां स्वर्गभोगक्षयानन्तरं मर्त्यलोकप्राप्तिव्यवच्छेदार्थमेवशब्दः । उक्तार्थे प्रमाणमाह—
- **देवेभ्य इति** ।। यः राजवत् । यथा राजा विद्वदविद्वज्जनापेक्षया ऐश्वर्यगुणैर्वो-

त्तमः । नतु पाण्डित्यादिधर्मेण । तथा विष्णुं गुणैरेव देवेभ्य उत्तमं मन्यत इत्यर्थः। तुशब्दश्चशब्दार्थः । तेन नानादेवतापूजक इति लभ्यते । याजीति नन्दिग्रहीत्यादिना ग्रह्यादित्वात्कर्तरि णिनिप्रत्ययः । अन्ते विष्णौ यज्ञादिकं समर्पयन्नित्यर्थः । इतःपरं स्वर्गं भुक्त्वेति शेषः । साम्यहीनत्वविदिति ब्रह्मादि-साम्यतद्धीनत्व-ज्ञानीत्यर्थः । ननु यदुक्तं साम्यं हीनत्वं वा जानन्तस्तमो विशन्तीति । तदयुक्तम् । भगवद्गीताविरोधात् । तथाहि—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ।।
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।।

इति गीतायां त्रैविद्या इति सामान्यश्रवणात् । सर्वेषामपि त्रैविद्यानां स्वर्गभोग-क्षयानन्तरं मर्त्यलोकप्राप्तिरुच्यते । मुक्तियोग्यनित्यसंसारितमोयोग्यभेदेन त्रिविधा अपि त्रैवर्णिकजीवाः त्रैविद्या एव । त्रिविधा विद्या त्रैविद्या । तामधीयते विदन्ति वा त्रैविद्या इति निर्वचनलभ्यस्य वेदत्रयाध्ययनतदर्थज्ञानरूपस्य त्रैविद्यशब्द-प्रवृत्तिनिमित्तस्योक्तत्रिविधिजीवेषु सद्भावात् । ततश्च साम्यादिमिथ्याज्ञानिनामपि त्रैविद्यत्वात्तेषामपि गीतानुसारेण स्वर्गभोगक्षयानन्तरं मर्त्यलोकप्रवेशनमेव वक्तव्यम्। तत्कथं गीताविरुद्धं तमःप्रवेशनं भाष्ये तदुपात्तस्मृतौ चोक्तमित्यत आह— **त्रैविद्या मामिति** ।। त्रैविद्या मामित्यत्र तु अज्ञानपूर्वयाजिनः त्रैविद्या विवक्षिता इत्यन्वयः । केवलाज्ञत्रैविद्यानां मिथ्याज्ञानित्रैविद्यानां च व्यावृत्त्यर्थमज्ञानपूर्वयाजिन इति विशेषणम् । अज्ञानपूर्वं विष्णुयाजिन इत्यर्थः । मामिष्ट्वेत्युक्तत्वाद्विष्णुयाजिन इति व्याख्यातम् । अज्ञानां विष्णुज्ञानाभावेन मिथ्याज्ञानिनां विष्णुद्वेषित्वेन तद्याजित्वाभावात्तद्व्यावृत्तिः । अत्रापि ये भागवतत्रैविद्याः सम्यज्ज्ञानानन्तरं विष्णुयाजिनस्तद्व्यावृत्त्यै अज्ञानपूर्वेत्युक्तम् । सर्वयज्ञभोक्तृत्वादिसर्वप्रकारेण विष्ण्वज्ञानपूर्वकत्वमेवाज्ञानपूर्वकत्वमिह विवक्षितम् । तेन सम्यग्ज्ञानिभागवत-व्यावृत्तिः । तेषामुक्तविधाज्ञानाभावेन तत्पूर्वकं विष्णुयाजित्वाभावात् । तथाच मुक्तियोग्यविशेषाः अनित्यत्रैविद्याः नित्यसंसारिविशेषाः नित्यत्रैविद्याश्च गीतायां

त्रैविद्यपदेन विवक्षिता इत्युक्तं भवति । ननु यदुक्तं त्रैविद्या मामित्यत्राज्ञानपूर्वयाजिनस्त्रैविद्या एव विवक्षिता इति तत्कुत इत्याशंकानिरासाय येऽप्यन्यदेवतेत्यारभ्योक्तत्वादित्यन्तमभिहितम् । गीतायामेव—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।।

इति श्लोकेन भक्तिश्रद्धापूर्वकमन्यदेवतायाजिनोऽपि यज्ञान्ते मामेवाविधिपूर्वकं यजन्तीत्युक्ताविधिपूर्वकत्वविवरणार्थेन—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ।।

इत्युत्तरश्लोकेन सर्वयज्ञभोक्तृत्वादिना सर्वेण प्रकारेण भगवज्ज्ञानाभावाच्च्यवन्तीत्युक्तत्वादित्यर्थः । तथाच त्रैविद्या इत्यादिभगवद्गीतायां सर्वयज्ञभोक्तृत्वादिना सर्वेण प्रकारेण भगवज्ज्ञानपूर्वकं राजवद्देवोत्तमत्वज्ञानपूर्वकं च भगवद्याजिन एव त्रैविद्यशब्देन विवक्षिताः । नतु साम्यहीनत्वज्ञानिनोऽपि । अन्यथा प्रकरणविरोधात् । ततश्च साम्यहीनत्वज्ञानिनां तमःप्राप्तिकथनेऽपि न भगवद्गीताविरोध इति भावः । ननूक्तत्रैविद्यशब्दप्रवृत्तिनिमित्तं त्रिविधत्रैवर्णिकजीवेषु सर्वदास्ति । ततस्ते सर्वेऽपि नित्यत्रैविद्या एव । तथाच केचिन्नित्यत्रैविद्याः केचिदनित्यत्रैविद्या इति प्राचामाचार्याणां कथं व्यवहार इति चेत् । उच्यते,

त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।
तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽप्यधिको गुणैः ।।
प्रवर्तयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।
त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ।।

इति स्मृत्युक्तत्रैविद्यधर्मो येषामस्तीत्यर्थे त्रैविद्यशब्दात् अर्श आदिभ्योऽजिति अच्प्रत्यये कृते निष्पन्नः त्रैविद्यशब्दः पारिभाषिकत्रैविद्यधर्मविशिष्टपुरुषपरः । तत्र मुक्तियोग्याः यदा निर्णेतॄणामभावेन विष्णोः सर्वप्रकारेणोत्तमत्वं न जानन्ति तदा त्रैविद्यधर्मं कुर्वन्ति । यदा तु निर्णेतृसद्भावेन विष्णोस्तत्त्वं सम्यग्जानन्ति

तदा त्रैविद्यधर्मं न कुर्वन्ति किन्तु भागवतधर्ममेव । अतस्तेऽनित्यत्रैविद्याः । कदाचित् त्रैविद्यधर्मानुष्ठानेऽपि सर्वदा तदभावात् । नित्यसंसारिविशेषाः राजसराजसास्तु सर्वदा त्रैविद्यधर्ममेव कुर्वन्ति । नतु कदाचिदपि भागवतधर्मम्। तेन नित्यत्रैविद्या इत्युच्यन्ते । एतदभिप्रायेण नित्यत्रैविद्या अनित्यत्रैविद्या इति प्राचां व्यवहारो युज्यत इति बोध्यम् ।

ततश्चायं मन्त्रार्थः—इष्टापूर्तम् । इष्टं च पूर्तं चेति द्वन्द्वः । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । अन्येषामपि दृश्यत इति दीर्घः । इष्टं यजनम् । पूर्तं कूपादिखननं अन्नदानादिकं च । अथ क्रतुकर्मेष्टं पूर्तं खातादिकर्म चेत्यमरोक्तेः । नानादेवतापूजात्मकमिति शेषः । ततश्च ये मन्यमानाः ।

अन्यदैवतपूजापि यस्मिन्नन्ते समर्पिता ।

स्वर्गादिफलहेतुः स्यान्नान्यथा तं भजेद्धरिम् ।।

इति शास्त्रार्थं जानन्तः पुरुषाः नानादेवतापूजात्मकं इष्टापूर्तं वेदयन्ते वेदयन्ति । विष्णावन्ते समर्पयन्ति । एवमन्यत्परं ब्रह्म वरिष्ठं अतिशयेन वरं सर्वयज्ञभोक्तृत्वादिसर्वप्रकारेणोत्तमं न वेदयन्ते । स्वार्थे णिच् । न जानन्ति । किन्तु श्रेयः श्रेष्ठं राजवत् सर्वदेवोत्तमं वेदयन्ते जानन्ति । ते विष्णावन्ते समर्पणादिपूर्वकं यजनादिकारिणः । सुकृते सुकृतशब्दः पुण्यवाची । पुण्यश्रेयसी सुकृतं वृष इति कोशात् । तेनान्ते विष्णुसमर्पणसहितं पुण्यं गृह्यते । ततस्तत्साध्यं लक्ष्यते । तथाचान्ते विष्णुसमर्पणसहितत्वकृतयजनादिपुण्यसाध्य इत्यर्थः । इदं च सांकल्पिकस्वर्गव्यावृत्त्यर्थं विशेषणम् । नाकस्य पृष्ठे इन्द्रलोके । ते पुण्यमासाद्य सुरेन्द्रलोकमिति समाख्यानात् । भोगाननुभूत्वा अनुभूय । क्वापि छन्दसीति ल्बादेशाभावाः । स्वर्गभोगानुभवक्षयानन्तरमिति शेषः । इमं लोकं मर्त्यलोकमाविशन्तीत्यन्वयः । एतच्च व्याख्यानं त्रैविद्यस्त्वपरो धर्म इत्याद्यु-दाहृतप्रमाणसिद्धम् । तत्त्वनिर्णयटीकायां तु श्रुतितात्पर्यापरिज्ञानप्राप्तं चेति मूलं व्याख्यातुमियं श्रुतिरन्यथाव्याख्यातेति न तद्विरोधः । एवं अन्यच्छ्रेयः परं ब्रह्म न वेदयन्ते न जानन्ति । किन्तु प्रमूढाः प्रकर्षेण मिथ्याज्ञानिनः । ब्रह्मादिसाम्यं

तद्धीनत्वं वा जानन्त इति यावत् । वरिष्ठं सर्वोत्तमं ब्रह्म मन्यमानाः । विभक्ति-विपरिणामः । मन्यमानैः ज्ञानिभिः । ऋत्विक्त्वेन स्वीकृतैः भागवताचार्यैरिति यावत् । इष्टापूर्तं यज्ञादिकं वेदयन्ते कारयन्ते । धातूनामनेकार्थत्वात् । ते मिथ्याज्ञानिनः । सुकृते भागवताचार्यसामर्थ्येन यज्ञादिपुण्यलभ्ये नाकस्य पृष्ठे इन्द्रलोके भोगाननुभूय । तत्क्षयानन्तरं हीनतरं तम एव विशन्ति । इदं तु व्याख्यानम् ।

ये तु भागवताचार्यैः सम्यक् यज्ञादि कुर्वते ।
बहिर्मुखाः भगवतो निवृत्ताश्च विकर्मणः ।।
दक्षिणातर्पितानांतु आचार्याणां तु तेजसा ।
यान्ति स्वर्गं पुनः क्षिप्रं तमोऽन्धं प्राप्नुवन्ति च ।।
तदन्येनैव च स्वर्गं यान्ति विष्णुबहिर्मुखाः ।।

इति प्रमाणानुसारेण कृतमित्यवधेयम् । ननूक्तस्वर्गहेतुर्यज्ञादिकर्म राजसमेव ।

यत्तु कामेप्सुना कर्म तद्राजसमुदाहृतमिति ।
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ।।

इति च तल्लक्षणाक्रान्तत्वात् । राजसयागाच्च सांकल्पिकस्वर्ग एव भवति ।

यागात्तु राजसात्स्वर्गः सांकल्पिक उदाहृतः । इत्युक्तेः ।

तत्कथं राजसयागादिन्द्रलोकाख्यस्वर्गप्राप्तिर्व्याख्यायत इति । उच्यते । फलकामनया क्रियमाणो यागो राजसयागः । स द्विविधः । विष्णुश्रद्धापूर्वकं क्रियमाणः तां विनैव क्रियमाणश्चेति । तत्र मुक्तियोग्यैरनित्यत्रैविद्यैः नित्यसंसारिभिर्नित्यत्रैविद्यैश्च क्रियमाणो राजसयागः विष्णुश्रद्धापूर्वकः । तेषां सर्वदेवोत्तमत्वप्रकारकविष्णु-निश्चयसद्भावात् । अज्ञत्रैविद्यैः क्रियमाणस्तु न विष्णुश्रद्धापूर्वकः । तेषां सर्वथा विष्णुनिश्चयाभावात् । तत्र द्वितीयस्यैव सांकल्पिकस्वर्गहेतुत्वम् । विष्णा-वश्रद्धयाऽयोग्यकामाच्चैषां पुनर्भवेदिति विष्णुश्रद्धां विना कृतराजसयागेन सांक-ल्पिकस्वर्गो भवतीत्युक्तत्वात् । अतो विष्णुश्रद्धापूर्वकराजसयागस्य इन्द्रलोकाख्य-

स्वर्गहेतुत्वाभिधाने न कश्चिद्दोषः मिथ्याज्ञानिकृतराजसयागस्य तु भागवताचार्यप्रसादेन इन्द्रलोकहेतुत्वमिति न कदाचिद्दोष इति ध्येयम् ।।

**।। इति द्वितीयखण्डभाष्यार्थः ।।**

## उपनिषत्

**तपःश्रद्धे येऽभ्युपवसन्त्यरण्ये**
**शान्ता विद्वांसो भैक्षचर्यां चरन्तः।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति**
**यत्रामृतः स पुरुषो ह्यव्ययात्मा ।। ११ ।।**

**व्या.टि.**——तान्याचरथ नियतं सत्यकामा इत्यत्र ज्ञानसाधनत्वप्रकारः कर्मादेः कथितः । तं प्रकारं विविच्याह— **तप इति** ।। तपःश्रद्धे उपवसन्त्याचरन्ति । तपआदिना अन्तःकरणशुद्धिद्वारा विद्वांसो भवन्तीत्यर्थः ।। ११ ।।

**ध.टि.**—— ।। **तप इतीति** ।। ये अरण्ये भिक्षाचर्यां चरन्तो विरक्ता इति यावत् । तपःश्रद्धे उपवसन्ति आचरन्ति ते अन्तःकरणशुद्धिद्वारा शान्ताः भगवन्निष्ठबुद्धिमन्तः सन्तो विद्वांसः अपरोक्षज्ञानिनो भवन्ति । ते अर्चिरादिमार्गेण सूर्यं प्राप्य विरजाः प्रारब्धशून्या भवन्ति ।

वैश्वानरे द्युनद्यां वा देहे वा सूर्य एव वा ।
विधूय सर्वपापानि यान्ति किंस्तुघ्नकेशवम् ।।

इति प्रमाणबलादधिकारिविशेषापेक्षमेतत् । अनन्तरमप्रतीकालम्बनाश्चेत्सूर्यादिद्वारेण ब्रह्माणं प्राप्य तदनन्तरं अमृतो नित्यमुक्तः अव्ययात्मा नाशशून्यदेहादिमान् पूर्णषड्गुणो हरिर्यत्र लोके तिष्ठति तं वैकुण्ठाख्यं विष्णुलोकं प्रयान्ति । प्रतीकालम्बनाश्चेत्सूर्यादिद्वारेण सरस्वतीं प्राप्य तदनन्तरं अमृतः अतिरोहितविज्ञानादमृतशब्दवाच्यः अव्ययात्मा नाशशून्ये भगवत्येव मनोमान् पुरुषो ब्रह्मा यत्र लोके तिष्ठति तं सत्याख्यं लोकं प्रयान्तीत्यर्थः । हिशब्देनैतदुभयं प्रमाणप्रसिद्धमिति दर्शयति ।। ११ ।।

**वामन.टी.**—अथ भगवत्तत्त्वविदुषां कर्म विनापि मोक्षः स्यादित्याह— **तपःश्रद्धेति** ।। ये तपसा श्रद्धया च भगवन्तं सेवन्ते । ते विद्वांसस्ते रागादि-दोषरहिता नित्यमुक्तस्य विष्णोर्लोकं प्रयान्ति ।। ११ ।।

**न.टी.**—तान्याचरथ नियतं सत्यकामा इति ज्ञानसाधनत्वे प्रकारः कर्मादेरुक्तः । तं प्रकारं विविच्याह— **तप इति** ।। शान्ताः शमदमादिसम्पन्नाः । भैक्षचर्यां चरन्तः । ये अरण्ये तपः श्रद्धे उपवसन्ति आचरन्ति । ते तपआदिभगवत्पूजात्मककर्मणा अन्तःकरणशुद्धिद्वारा विद्वांसः अपरोक्षज्ञानिनो सूर्यद्वारेण विरजाः विनष्टपापकर्माणः सन्तः यत्राव्ययात्मा अमृतो नित्यमुक्तः सः प्रसिद्धः परमपुरुषो विष्णुर्यत्र वर्तते तं लोकं प्रयान्ति ।। ११ ।।

**रा.खं.**—एवं सत्यज्ञानकामनया कर्माण्याचरथेत्युक्तौ कुत्र कथमित्याशंकायां यदेत्यादि मन्त्रपञ्चकेन कर्मानुष्ठानस्थलमितिकर्तव्यतां फलं चोक्त्वा, प्लवा इत्यादिना मन्त्रचतुष्टयेनोक्तवैपरीत्येन कर्मानुष्ठानेऽनर्थं चोक्त्वाऽधुना 'तान्याचरथ सत्यकामाः' इत्यत्र कर्मदेवताज्ञानं तदनुष्ठानेनान्तःकरणशुद्धिद्वारा ज्ञानहेतुश्रवणाद्यङ्गं सद्ब्रह्मज्ञानमुत्पाद्य परमपुमर्थाय भवतीति यदुक्तं तत्र सर्वथाऽवधानेन भाव्यमिति भावेन कर्माचारादेरुक्तरीत्या ब्रह्मज्ञानार्थत्वं फलोक्त्योपसंहरति— **तपःश्रद्धे इति** ।। ये भगवज्ज्ञानकामाः अरण्ये पुण्यदेशे स्थित्वा तपः कृच्छ्रचान्द्रायणादिरूपं, श्रवणमननालोचनरूपं वा, श्रद्धास्तिक्यादिबुद्धिपूर्वकं यागादिकमभ्युपवसन्ति, आचरन्त इति शेषः । शान्ता भगवन्निष्ठावन्तः ते तपआदिना पूर्वोक्तप्रणाड्या विद्वांसः भगवज्ज्ञानिनो भूत्वा यावत्प्रारब्धं देहरक्षणार्थं भैक्षचर्यां भैक्षं कर्म चरन्तः कुर्वन्तः सूर्यद्वारेण सूर्यमण्डलं प्राप्य तद्द्वारेण विरजाः विगतप्रारब्धकर्माणः 'तेजसि सूर्ये सम्पन्नः पाप्मना विनिर्मुक्त' इति श्रुत्यन्तरोक्तेः, 'आदेहं कर्म चाचरेत्' इति स्मृतेश्च, प्रयान्ति प्रकर्षेण यान्ति । कुत्रेत्यत आह— **यत्रामृत इति** ।। अमृतः देहतोऽप्यविनाशी पुरुषः पूर्णषड्गुणः स प्रसिद्धोऽव्ययात्मा शश्वदेकप्रकारः स्वामी यत्र वर्तते तत्र प्रयान्तीत्यर्थः ।। ११ ।।

**स.टी.**——तान्याचरथ नियतं सत्यकामा इत्यत्र ज्ञानसाधनत्वप्रकारः कर्मादेरुक्तः । तं प्रकारं विवेचयति— **तप इति** ।। ये तपःश्रद्धे उपवसन्ति कुर्वन्ति तप आदिना अन्तःकरणशुद्धिद्वारा विद्वांसो भवन्तीत्यर्थः । सूर्यद्वारेण सूर्यं प्राप्य विरजाः क्षीणप्रारब्धकर्माणः ।

सूर्यं वैश्वानरं चेन्द्रं ध्रुवं देवीं सरस्वतीम् ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ।। इति तदर्थः ।। ११ ।।

**श्री.टी.**——एवं काम्यं कर्म विनिन्द्यातः परं निवृत्तकर्मानुष्ठानजनितापरोक्षज्ञानसाध्यं फलं दर्शयति— **तप इति** ।। ये अरण्ये भैक्षचर्यां चरन्तो विरक्ता इति यावत् । तपःश्रद्धे तपः श्रद्धापूर्वकं सत्कर्म अति अतिशयेन उपवसन्ति कुर्वन्तीति यावत् । ते अन्तःकरणशुद्धिद्वारा शान्ता भगवन्निष्ठबुद्धिमन्तः सन्तो विद्वांसोऽपरोक्षज्ञानिनो भवन्ति । तेऽर्चिरादिमार्गेण सूर्यं प्राप्य विरजाः प्रारब्धपापशून्याः भवन्ति । अधिकारिविशेषाणां तत्र प्रारब्धकर्मनिर्मोकस्य वैश्वानरं इन्द्रं ध्रुवं सरस्वतीं ब्रह्माणं च प्राप्य तदनन्तरं यत्रामृतो नित्यमुक्तः अव्ययात्मा नाशशून्यदेहः पुरुषः पूर्णषड्गुणो हरिर्यत्र लोके तिष्ठन्ति तं वैकुण्ठाख्यं लोकं प्रयान्ति । प्रतीकालम्बनाश्चेत्सूर्यद्वारेण सरस्वतीं प्राप्य तदनन्तरं यत्र लोकेऽमृतः अतिरोहितविज्ञानत्वादमृतशब्दवाच्यः । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः' इति वचनात्तस्यैव च ब्रह्मत्वात् । अमृतो जीवन्मुक्त इति वा । अव्ययात्मा नाशशून्ये भगवत्येव मनोवान्पुरुषो ब्रह्मा यत्र लोके तिष्ठति तं सत्याख्यं लोकं प्रयान्तीत्यर्थः । हिशब्देनैतदुभयं प्रमाणप्रसिद्धमिति दर्शयति ।। ११ ।।

**उ.टी.**——एवं तान्याचरथ नियतमित्यादिना परब्रह्मलोकप्राप्तिहेतुत्वादग्निहोत्रादिगृहस्थधर्मः शमादियतिधर्माश्च कर्तव्या इति विधायाग्निहोत्रादिगृहस्थकर्मणां ब्रह्मलोकप्राप्तिहेतुत्वमतीतमन्त्रैरुपपादितम् । इदानीं शमादियतिधर्माणां प्रागुक्तब्रह्मलोकप्राप्तिहेतुत्वं प्रपञ्चयति— **तपःश्रद्धे इति** ।। अयं च मन्त्रो यतिपर एव न ब्रह्मचारिपरः । तेषामरण्यवासाबावात् । अत एव न गृहस्थपरः । न वान-

प्रस्थपरः । तेषां भिक्षाटनाभावात् । तस्माद्यतिपर एवेति । किञ्च,

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ।।

इति गीतायां यानि स्वाभाविकब्राह्मकर्माणि उक्तानि तान्येव "धर्माः परमहंसानां ब्राह्मा एव शमादिकाः" इति स्मृतौ यतिधर्मत्वेनोच्यन्ते । एवं शमादयोऽत्र मन्त्रे पठ्यन्ते । नतु यज्ञादयः । अतोऽयं मन्त्रो यतिपर एवेति स्थिते व्याख्यायते ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।।
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ।।
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ।।

इति गीतोक्तं त्रिविधं तपोऽत्र मन्त्रे तपःशब्देन ग्राह्यम् । श्रद्धाशब्देनास्तिक्यनिष्ठोच्यते । शास्त्राचार्योपदिष्टेऽर्थे अननुभूतेऽप्येवमेवैतदिति विश्वास एवास्तिक्यनिष्ठा।

श्रद्धा नामास्तिक्यबुद्धिः सा चैव द्विविधा मता ।
अत्रोक्तमस्तीत्येका तु ममात्रास्ति प्रयोजनम् ।।

इत्युक्तास्तिक्यबुद्धेरप्यत्रैवान्तर्भावात् । ततश्च ये यतयः । तपःश्रद्धे उक्तरूपे । उपवसन्ति अनुतिष्ठन्ति । अरण्ये उपविशन्ति वासं कुर्वन्ति । शान्ताः भगवन्निष्ठत्वरूपशमोपेताः । विद्वांसः ज्ञानविज्ञानयुक्ताः । भैक्षचर्यां अरण्याद्ग्रामं गत्वेत्युपस्कार्यम् । "भिक्षार्थं ग्राममाविशेदि"ति स्मृतेः । ततश्चारण्याद्ग्रामं गत्वा भैक्षचर्यां भैक्षं भिक्षाकदम्बकम् । तदनुकूलचर्यां गृहे गृहे पर्यटनम् । "चर्या पर्यटने प्रोक्ता वर्गप्रस्थानयोरपी"ति कोशात् । चरन्तः कुर्वन्तः । ते यतयः । सूर्यद्वारेण सूर्याख्योपायेन । द्वारं तु द्वार्युपाये स्यादिति कोशात् । विरजाः विगतपापाः । रजं तु रजसा सहेति द्विरूपकोशादकारान्तोऽपि रजशब्दोऽस्ति । ततश्च सूर्यद्वारेण विरजा इत्यस्यार्चिरादिमार्गेण परब्रह्मलोकगमनकाले सूर्यं प्रविश्य विधूतसर्वपापा

इति पर्यवसितार्थः । तदुक्तम्—"स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्त" इति । यत्र देशे । अमृतः नित्यमुक्तः स्वदर्शनेन मोक्षप्रद इति वा । अव्ययात्मा । अव्ययः नाशरहितः आत्मा स्वरूपं देहश्च यस्य स तथा । स पुरुषः पूर्णषड्गुणः शिंशुमाररूपो भगवानस्ति तं प्रदेशं प्रयान्ति । तदनन्तरं च तं नमस्कृत्य यत्र वैकुण्ठे अमृतः पुरुषो अव्ययात्मा अस्ति तं परब्रह्मलोकं प्रयान्तीत्यर्थः । अत्रोक्ताः यतीनां शिंशुमारप्राप्तिः तत्प्रणामानन्तरं परब्रह्मलोकप्राप्तिश्च न केवलं यतीनामेव । किन्तु सर्वज्ञानिनामपि। यथोक्तम्—

वैश्वानरे द्युनद्यां वा देहे वा सूर्यमण्डले ।
विधूय सर्वपापानि यान्ति किंस्तुघ्नकेशवम् ।। इति ।।
अशेषजगदाधारः शिंशुमारो हरिः परः ।
सर्वे ब्रह्मविदो नत्वा तं यान्ति परमं पदम् ।। इति च ध्येयम् ।। ११ ।।

**आ.टी.**——यज्ञादेर्ज्ञानसाधनत्वप्रकारं विविच्याह— **तपःश्रद्धे इति** ।। पुण्यः सुखज्ञानरूपो विष्णुरर्यते ज्ञायते ज्ञाप्यते वा येन गुरुणा स अरण्यस्तस्मिंस्तत्समीपे प्रसिद्धेऽरण्ये एव एकान्ते दुस्सङ्गहीने भैक्ष्यचर्यां ज्ञानभिक्षामन्नभिक्षां वा चरन्तः कुर्वन्तो ये तप आलोचनं वा ब्रह्मचर्यादिकं वा श्रद्धामास्तिक्यं च उपवसन्ति कुर्वन्ति । ते च शान्ता भगवन्निष्ठा विद्वांसोऽपि भूत्वा विरजाः विगतपापास्सन्तः अर्चिरादिमार्गे सूर्यद्वारेण नित्यमुक्तः पूर्णषड्गुणः नित्यदेहः स परमात्मा यत्रास्ति तत्र यान्तीत्यन्वयः ।। ११ ।।

**गू.टी.**——तान्याचरथेत्यत्र ज्ञानसाधनत्वप्रकारः कर्मादेरुक्तः तं प्रकारं विविच्याह-— **तप इति** ।। ये चारण्ये दुर्जनसङ्गशून्ये सत्सङ्गयुक्तस्थाने तपःश्रद्धे । उपलक्षणम् । चान्द्रायणादिनिष्कामं कर्म कुर्वन्ति तत्र तपआदिनान्तःकरणशुद्धिद्वारा विद्वांसः सन्तः शरीरयात्रार्थं विरजाः भैक्षचर्यां चरन्तः शान्ताः भगवन्निष्ठायुक्ताः शुद्धाः । यत्राव्ययरूपः पूर्णषड्गुणः नित्यमुक्तो विष्णुरस्ति तत्र सूर्यद्वारेणार्चिरादि-

मार्गेण प्रयान्ति । सूर्यद्वारेण विशुद्धा इति वा । सूर्ये प्रारब्धं क्षिप्त्वेत्यर्थः ।। ११ ।।

## उपनिषत्

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो**
**निर्वेदमायान्नास्त्यकृतः कृतेन।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छे-**
**त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।। १२ ।।**

**व्या.टि.**—कर्मादिप्रतिपादिकापरविद्या भगवत्पूजात्वेन स्वोक्तानुष्ठाने परविद्यासाधनमित्युक्तं पूर्वत्र । इदानीं तु स्वर्गसाधनत्वे यागादेः सुखरूपत्वात्स्वर्गस्य चाल्पकालीनत्वान्न स्वर्गो मुख्यपुरुषार्थोऽतस्तत्र विरक्तो भवेदिति विरक्तिजननेन च परविद्यासाधनत्वमपरविद्याया इत्याह— **परीक्ष्येत्यादिना** ।। कर्मचितांल्लोकान् । एते दुःखसाध्या विनाशिनश्चेति परीक्ष्य । स्वरूपानन्दाविर्भावरूपत्वादकृतो मोक्षः कृतेन कर्मणा नास्ति किन्तु ज्ञानेन । तत् तस्माद्विज्ञानार्थं गुरुमेवाभिगच्छेत् ।। १२ ।।

**ध.टि.**— ।। **परीक्ष्येत्यादिनेति** ।। ब्राह्मणो ब्रह्मप्राप्तियोग्योऽधिकारी लोकान् विष्णुलोकेतरान् कर्मचितान् कर्मापादितान् असारानित्यतया परीक्ष्य निर्वेदं वैराग्यं आयात् प्राप्नुयात् । स च मोक्षादितरत्र निर्विण्णो यस्मात् अकृतः नित्यपुमर्थः मोक्षः कृतेन कर्मणा न सिद्ध्यति । तस्मात्तद्विज्ञानार्थं मोक्षसाधनीभूतात्मयोग्यभगवत्साक्षात्कारार्थं श्रवणादिकं कर्तुं समित्पाणिः सन् श्रोत्रियं वेदाध्ययनसम्पन्नं ब्रह्मनिष्ठं तत्प्रतिपाद्यपरब्रह्मज्ञाने निष्ठावन्तं गुरुमेवाभिगच्छेत् ।। १२ ।।

**वामन.टी.**—इतरफलेषु दोषनियमदर्शनान्निर्वेदं प्राप्नुयादित्याह— **परीक्ष्येति** ।। अकृतः केवलकर्मणा न लभ्यः किन्तु केवलज्ञानेनैव लभ्यः । अतो मोक्षार्थं ब्रह्मज्ञानार्थं समित्पाणिर्भूत्वा गुरुमेवोपासीदेत् ।। १२ ।।

**न.टी.**——काम्यकर्मसाध्यस्वर्गादेः दुःखसम्भिन्नसुखत्वेन अल्पपुरुषार्थरूपत्वात्तत्र विरक्तिं विधत्ते— **परीक्ष्येति** ।। कर्मणा चितान् सम्पादितान् लोकान् नश्वरत्वादिना परीक्ष्य ब्राह्मणो ब्रह्माणनयोग्यो निर्वेदं वैराग्यं आयात् प्राप्नुयात् । अकृतो मोक्षः कृतेन कर्मणा न भवति । किन्तु ज्ञानेनैव भवति । तत्तस्मात् कारणात् भगवज्ज्ञानार्थं सः वैराग्याधिकारसम्पन्नः समित्पाणिः सन् श्रोत्रियं वेदार्थतत्त्वज्ञं ब्रह्मनिष्ठं भगवन्निष्ठामनस्कं गुरुमेवाभिगच्छेत् ।। १२ ।।

**रा.खं.**——एवं कर्मादिज्ञानं 'उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः' इति सूत्रोक्तदिशा प्रागुक्तप्रणाड्या ब्रह्मज्ञानार्थं सत्परमपुमर्थहेतुः । कर्मादिबोधकऋगादिविद्या च तथा परविद्या भवतीत्युक्तम् । इदानीं तु 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' इति सूत्रोक्तदिशा काम्यकर्मतत्फलादौ वैराग्यजननद्वारा ब्रह्मज्ञानसम्पादनेच्छाजननेन ब्रह्मज्ञानार्थं भवत् परमपुरुषार्थहेतुर्भवतीति तद्बोधकऋगादिविद्याऽप्यल्पास्थिर-फलादिबोधनेन तत्राधिकारिणो वैराग्यजननद्वारा नित्यानल्पफलकब्रह्मज्ञानकामो-त्पादनेन ब्रह्मज्ञानोपयोगिनीति परविद्या च भवतीति भावेनाऽऽह— **परीक्ष्येति** ।। लोकान् विष्णुलोकेतरान् कर्मचितान् काम्यकर्मोपादितान् परीक्ष्यासारानित्यतया विचार्य ब्राह्मणो ब्रह्माणनरूपब्रह्मज्ञानयोग्यः निर्वेदं काम्यकर्मणि तत्फले च वैराग्यमायात् प्राप्नुयात् । यतोऽकृतो मोक्षः कृतेन कर्मणा नास्ति तत्तस्मात्स च मोक्षादितरत्र निर्विण्णो विज्ञानार्थं मोक्षफलकब्रह्मज्ञानार्थं गुरुमेवाभिगच्छेत् । गुरुमुपगन्तारं च विशिनष्टि— **समित्पाणिरिति** ।। श्रोत्रियं च्छन्दोऽध्येतारं ब्रह्मनिष्ठं भगवद्भक्तं गुरुमित्यन्वयः ।। १२ ।।

**स.टी.**——एवं कर्मस्वरूपे निरूपिते सारासारविषयकज्ञानेन करणीयं दर्शयति-— **परीक्ष्येति** ।। लोकान्विष्णुलोकेतरान् कर्मोपादितान् असारानित्यतया परीक्ष्यैव योग्यं प्राप्नुयात् । मोक्षादितरत्र निर्विण्णो विज्ञानार्थं सः गुरुमेवाभिगच्छेत् । यस्मान्नित्यं पुमर्थो मोक्षः कर्मादिना न सिद्ध्यति तस्मादित्यर्थः । अत्र विज्ञान-पदेनोत्तमाधिकारित्वं सूचितम् । "देवादीनां तु यज्ज्ञा विज्ञानमिति कीर्तित-

मि"त्युक्तेः । गुरुस्तु येन यया विद्यया पुरुषं वेद तां विद्यां तस्मै शिष्याय प्रोवाच प्रब्रूयात् ।। १२ ।।

**श्री.टी.**—भैक्षचर्यां चरन्त इत्यपरोक्षज्ञानसाधनतयोक्तं वैराग्यं नित्यानित्यवस्तु-विवेकसाध्यमिति वदन्वैराग्यानन्तरभाविसाधनमाह— **परीक्ष्येत्यादिना** ।। ब्राह्मणो ब्रह्मप्राप्तियोग्योऽधिकारी लोकान् विष्णुलोकेतरान् कर्मचितान् कर्मापादितान् असारानित्यतया परीक्ष्य निर्वेदं वैराग्यमायात्प्राप्नुयात् । स च मोक्षादितरत्र निर्विण्णो यस्मादकृतो नित्यपुमर्थो मोक्षः कृतेन कर्मणा न सिद्ध्यति तस्मात्तद्वि-ज्ञानार्थं मोक्षसाधनीभूतात्मयोग्यभगवत्साक्षात्कारार्थं श्रवणादिकं कर्तुं समित्पाणिः सन् श्रोत्रियं वेदाध्ययनसम्पन्नं ब्रह्मनिष्ठं तत्प्रतिपाद्यपरब्रह्मज्ञाने निष्ठावन्तं गुरुमेवाभिगच्छेत् ।। १२ ।।

**उ.टी.**—तान्याचरथ नियतं सत्यकामा इत्यादिभिः तपःश्रद्धे इत्यन्तैः मन्त्रैः यज्ञस्तपःश्रद्धादीनां परब्रह्मलोकप्राप्तिसाधनत्वमुक्तम् । नच तद्युक्तम् । यज्ञादिना अन्तःकरणशुद्धिमात्रोत्पत्तावपि श्रवणादिकं विना ब्रह्मापरोक्षज्ञानोत्पत्त्यभावेन परब्रह्मलोकप्राप्त्ययोगात् । अतः श्रवणादिकं कर्तव्यमिति प्रतिपादयितुं तत्साधनं वैराग्यं तत्साधनं च सारासारविवेक इत्याह— **परीक्ष्येति** ।। ब्राह्मणः ब्रह्मज्ञानयोग्यः कर्मचितान् कर्मापादितान् विष्णुलोकेतरलोकान् । परीक्ष्य असारा-नित्यतया विचार्य निर्वेदं वैराग्यं आयात् प्रायात् प्राप्नुयात् । लकारव्यत्ययः छान्दसः । एवं मोक्षादितरत्र निर्विण्णः सः मुमुक्षुः यस्मादकृतो नित्यपुरुषार्थो मोक्षः । कृतेन कर्मणा नास्ति न भवति । किन्तु ज्ञानेनैव । तत्तस्माद्विज्ञानार्थं मोक्षजनकपरब्रह्मज्ञानार्थम् । समित्पाणिः सन् श्रोत्रियं वेदव्याख्याननिपुणम् । ब्रह्मनिष्ठं विष्णुभक्त्यादिगुणसम्पन्नं गुरुम् । एवकारः श्रोत्रियत्वादिगुणसम्पन्न एव गुरुः सम्पाद्य इत्यवधारणार्थः । अभिगच्छेत् प्राप्नुयादित्यर्थः ।। १२ ।।

**आ.टी.**—"उत्क्रमिष्यत एवं भावादित्यौडुलोमिरि"ति सूत्रार्थतया यज्ञादेः परम्परया ज्ञानसाधनत्वात्तत्प्रतिपादकऋगाद्यपरविद्यापरविद्याङ्गमित्युक्तमिदानीं

"प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य" इति सूत्रार्थतया स्वर्गादिसाधनत्वे प्रतीतयोगादेर्दुःखरूपत्वात्स्वर्गस्याल्पकालीनत्वाच्च स्वर्गो न मुख्यपुमर्थोऽतस्तत्र विरक्तो भवेदिति विरक्तिजननेन परविद्यासाधनत्वमपरविद्याया इत्याह— **परीक्ष्येति** ।। ब्राह्मणो ब्रह्माणनयोग्यः । कर्मचितान् कर्मप्राप्यान् स्वर्गादिलोकान् एते दुःखसाध्या विनाशिनश्चेति विचार्य तत्र वैराग्यं सम्पादयेत् । स्वरूपानन्दाविर्भावरूपत्वादकृतो मोक्षः कृतेन कर्मणा नास्ति न भवति । किन्तु ज्ञानेन तत्तस्माद्विशेषज्ञानार्थं गुरोरुपायनार्थं पाणिभ्यां समिधो गृहीत्वा वेदाध्ययनादिसम्पन्नं परब्रह्मज्ञानिनं गुरुमेव प्राप्नुयात् ।।

**गू.टी.**——एवं कर्मादिप्रतिपादकापरविद्या भगवत्पूजात्वेन स्वोक्तानुष्ठाने परविद्यासाधनमित्युक्तम् । इदानीं तु स्वर्गसाधनत्वे च यागादेः दुःखरूपत्वात्स्वर्गस्याल्पकालीनत्वान्न स्वर्गो मुख्यपुरुषार्थोऽतस्तत्र विरक्तो भवेत् इति विरक्तिजननेन वा परविद्यासाधनत्वमपरविद्याया इत्याह— **परीक्ष्येत्यादिना** ।। कर्मचितान्कर्मप्राप्यान् स्वर्गादीन् लोकान् दुःखसाध्याः विनाशिनश्चेति परीक्ष्य विचार्य ब्रह्माणनयोग्यः स्वयं वैराग्यं तत्र प्राप्नुयात् । स्वरूपानन्दाविर्भावरूपत्वादकृतो मोक्षः कृतेन कर्मणा नास्ति किन्तु ज्ञानेन। तत्ततस्माद्विज्ञानार्थं विष्णुविशेषज्ञानसम्पादनाय श्रोत्रियं सर्वज्ञं ब्रह्मविचारे निष्ठमेव गुरुं समिधं पाणौ गृहीत्वा प्राप्नुयात् ।। १२ ।।

## उपनिषत्

**तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।**
**येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।। १३ ।।**

**व्या.टी.**——शमान्विताय भगवन्निष्ठायुक्ताय येन प्रोवाच प्रवक्ति ।। १३ ।।

**ध.टि.**——पश्चाद्गुरुणा किं कार्यमित्यत आह— **तस्मा इति** ।। विद्वान् 'न कञ्चन वसतौ प्रत्याचक्षीत तद्व्रतम्' इत्युक्तप्रकारेण प्राप्तसच्छिष्यप्रत्याख्याने

दोषं विद्वान् सद्गुरुः उपसन्नाय उपसत्तियुक्ताय सम्यक्प्रशान्तचित्ताय प्रकर्षेण विषयोपरतचित्ताय, शमान्विताय भगवन्निष्ठबुद्धियुक्ताय तस्मै अधिकारी तत्त्वतो वेद तां ब्रह्मविद्यां प्रोवाच । व्यत्ययेन प्रब्रूयादित्यर्थः ।। १३ ।।

**वामन.टी.**——एवं वदद्ब्रह्मा तस्मा उपासन्नायाथर्वणे सर्वामपि वेदवाचं तत्त्वतः परामेव ब्रह्मविद्यां प्रोवाच ।। १३ ।।

**न.टी.**——विद्वान् गुरुः उपसन्नाय प्रणामपूर्वं स्वसमीपं प्राप्ताय, सम्यक् प्रशान्तचित्ताय विषयतृष्णोपशमयुक्ताय , शमान्विताय भगवन्निष्ठबुद्धियुक्ताय, तस्मै शिष्याय येन यया विद्यया पुरुषं परमपुरुषं विष्वाख्यं अक्षरं निर्विकारं सत्यं ब्रह्म वेद जानाति तां विद्यां प्रोवाच प्रवक्ति ।। १३ ।।

**रा.खं.**——गुरूपसत्तिं कुर्यादित्युक्त्वाऽङ्गिराः किमकरोदित्यतः शौनकाय तत्त्वमुपदिदेशेत्याह वेदपुरुषः— **तस्मा इत्यादिना** ।। उपसन्नायोपसत्तिं प्राप्ताय सम्यक् प्रशान्तचित्ताय विषयेष्वलम्बुद्धिमते, विरक्तायेति यावत् । शमान्विताय भगवन्निष्ठायुक्ताय तस्मै शौनकाय स विद्वानङ्गिराः येन यया विद्यया, व्यत्ययात् येन ऋगादिशास्त्रेणेति वा सत्यमनन्याधीनस्वरूपं पुरुषमक्षरं वेद जानाति तामृगादिशास्त्ररूपां ब्रह्मविद्यां तत्त्वतो याथातथ्येन प्रोवाचेति । कर्मदेवतादि-बोधकतया शौनकेनावगतामृगादिविद्यां परममुख्यवृत्तिमहातात्पर्याभ्यां ब्रह्मज्ञप्तिहेतुत्वेन परविद्या यथा भवति तथा व्याचख्याविति भावः । अत एव तत्त्वत इत्युक्तिः ।। १३।।

**श्री.टी.**——पश्चाद्गुरुणा किं कार्यमित्यत आह— **तस्मा इति** ।। विद्वान्न कञ्चन वसतौ प्रत्याचक्षीत तद्व्रतमित्युक्तप्रकारेण प्राप्तसच्छिष्यप्रत्याख्याने दोषं विद्वान् स गुरुरुपसन्नायोपसत्तियुक्ताय सम्यक् प्रशान्तचित्ताय प्रकर्षेण विषयोपरतचित्ताय शमान्विताय भगवन्निष्ठबुद्धियुक्ताय तस्मै अधिकारिणे येन यया विद्यया सत्यं साधुगुणयुक्तं पुरुषं पूर्णषड्गुणं अक्षरं परं ब्रह्म अधिकारी तत्त्वतो वेद तां ब्रह्मविद्यां प्रोवाच व्यत्ययेन प्रब्रूयादित्यर्थः।। १३ ।।

**उ.टी.**—अनेन वैराग्यं श्रवणसाधनमित्युक्तम् । न केवलमेतावत् । किन्तु शमदमादिसम्पत्तिरपीति दर्शयन् श्रवणप्रकारमाह— **तस्मा इति** ।। सः ब्रह्मज्ञानार्थिना मुमुक्षुणा अभिगतः विद्वान् न कञ्चन वसतौ प्रत्याचक्षीत । तद् व्रतम् । विद्यार्थे वसतीच्छया आगतं नेति न ब्रूयात्तदेतद्विदुषो व्रतमित्यादि श्रुतिस्मृत्युक्तार्थज्ञानी । सम्यगुपसन्नाय उपसत्तिमते । प्रशान्तचित्ताय प्रशान्तं रागद्वेषरहितं चित्तं यस्य स तथोक्तः । तस्मै शमान्विताय । शमपदं शान्तो दान्त उपरतस्तितिक्षुरिति श्रुत्युक्तदमाद्युपलक्षकम् । ततश्च शमादियुक्तायेत्यर्थः । तस्मै मुमुक्षवे । येन यया । अक्षरं नाशरहितं । पुरुषं पूर्णषड्गुणम् । सत्यं भगवन्तं । तत्त्वतो वेद विद्यात् । तां ब्रह्मविद्यां प्रोवाच प्रवदेत् । तद्विद्याव्याख्यानं कुर्यादित्यर्थः । अनेन मन्त्रद्वयेन नित्यानित्यवस्तुविवेकजन्यं वैराग्यं शमादिसम्पत्तिर्मुमुक्षा चेत्येतत् त्रयं श्रवणादिरूपविचाराङ्गमित्युक्तमिति ध्येयम् ।। १३ ।।

**आ.टी.**—स विद्वान् गुरुः विद्यार्थं प्राप्ताय सम्यक् निर्मलमनसे शमादिगुणयुक्ताय एतद्गुणवत्त्वेन ज्ञाताय शिष्याय येन यया विद्यया साधुगुणमक्षरं पूर्णं ब्रह्म वेद जानाति । तामेव ब्रह्मविद्यां तत्त्वतो याथार्थ्येन विप्रलम्भनं विना प्रोवाच प्रब्रूयादित्यर्थः ।। १३ ।।

**गू.टी.**—स विद्वान् गुरुः उपसन्नाय शिष्यत्वेन प्राप्ताय सम्यक् प्रशान्तचित्ताय शुद्धमनसे भगवन्निष्ठायुक्ताय येन यया सत्यमक्षरं पुरुषं हरिं जानाति शिष्यस्तां ब्रह्मविद्यां प्रोवाच प्रवक्ति ।। १३ ।।

**।। इति द्वितीयखण्डमन्त्रार्थः ।।**

# अथ तृतीयः खण्डः

## उपनिषत्

**तदेतत्सत्यम् ।**

**यथा सुदीप्तात् पावकाद् विष्फुलिङ्गाः**
**सहस्रशः प्रभवन्ते सरूपाः।**
**तथाक्षराद्विविधाः सोम्य भावाः**
**प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥**

**व्या.टि.**—तदेतद्वक्ष्यमाणं सत्यं न मिथ्या । गुरूपदेशप्रकारमाह— **यथा सुदीप्तादिति** ॥ १ ॥

**ध.टि.—यथा सुदीप्तादितीति** ॥ हे सौम्य ! यथा सुदीप्तात्पावकादग्नेः सहस्रशः सहस्रसङ्ख्याकाः सरूपाः पावकसमानरूपाः विस्फुलिङ्गाः प्रभवन्ते प्रभवन्ति । तत्रैव पुनरपियन्तीति ग्राह्यम् । तथा अक्षराद्भगवतः विविधाः अनेकप्रकाराः भावाः पदार्थाः जायन्ते । तत्रैव अक्षरे प्रलये अपियन्ति प्रविशन्ति चेत्यर्थः ॥

**वामन.टी.**—सत्याख्यस्य विष्णोः स्वरूपसामर्थ्यादेव सर्वस्रष्टृत्वादिकं चोपदिशति— **यथा सुदीप्तादिति** ॥ प्रभवन्ते प्रजायन्ते तथाक्षरात्परमपुरुषाद् द्विविधा भावाश्चिदचित्पदार्था प्रजायन्ते । तत्रैवापियन्ति च ॥ १ ॥

**न.टी.**—गुरूपदेशप्रकारमाह— **यथा सुदीप्तादिति** ॥ हे सोम्य यथा सुदीप्तात् पावकात् सरूपाः सहस्रशः विष्फुलिङ्गाः प्रभवन्ते तथाक्षरात् विविधा भावाः पदार्थाः प्रजायन्ते । तत्राक्षरे ब्रह्मण्येव निमित्ते तस्मादपियन्ति विनश्यन्ति ॥

**रा.खं.**—ऋगादिशास्त्रस्य परविद्यात्वापादको मुख्योऽर्थः कः ? यदर्थतया ऋगादिशास्त्रं ब्रह्मविद्यात्वेन प्रोवाचेत्यत ऋगादिशास्त्रमुख्यार्थो विश्वस्रष्टृत्वादिगुणविशिष्टो हरिरिति भावेनाह— **तदेतदिति** ॥ वक्ष्यमाणं प्रमेयं सत्यं न मिथ्येत्यर्थः ।

विष्फुलिङ्गाः अग्निकणाः प्रभवन्ते प्रभवन्ति । सरूपाः प्रकाशेन सदृशाः विविधाः देवदानवमानवादिभेदेन नानाविधाः भावाः पदार्थाः, सोम्य सोमपानार्हेति शौनकस्य सम्बोधनम् । तत्रैव चाक्षरे अपियन्ति प्रलये तदुदरे लीयन्ते । 'अक्षरात्सम्भवतीह विश्वम्' इति प्रागुक्तस्य प्रपञ्चनादपौनरुक्त्यम् ।। १ ।।

**स.टी.**—तदेतदुक्तं सत्यमबाधितम् । "ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपी"त्युक्तप्रकारमित्यर्थः । यद्वा यत्तदेतत्सत्यं अक्षरं तस्मात्प्रजा इत्युत्तरेणान्वेष्यति । गुरूपदेशप्रकारमाह— **यथेति** ।। १ ।।

**श्री.टी.**—श्रुतिर्वक्ष्यमाणप्रमेयविश्वासजननायाह— **तदेतदिति** ।। मद्गुरुणोत्तरत्रोपदिश्यते तत्सत्यं यथार्थम् । न मिथ्येत्यर्थः । गुरूपदेशप्रकारमेवाह— **यथेत्यादिना** ।। हे सोम्य सदृष्टान्तो यथा सुदीप्तात्पावकादग्नेः सहस्रशः सहस्रसङ्ख्याकाः सरूपाः पावकसमानरूपाः शुक्लभास्वररूपवन्त इति यावत् । विष्फुलिङ्गाः प्रभवन्ते प्रभवन्ति । तत्रैव पुनरपियन्तीति च ग्राह्यम् ।। १ ।।

**उ.टी.**—उक्तविशेषणविशिष्टशिष्यं प्रति ब्रह्मविद्यां प्रवक्ष्यन् गुरुः भगवत्स्तुतिरूपं मङ्गलमादावाचरति— **तदेतत्सत्यमिति** ।। सत्यं भगवान् । न केवलं तत् यत्तदद्रेश्यमित्याद्युक्तगुणविशिष्टम् । किन्तु एतत् वक्ष्यमाणलक्षणकं चेत्यर्थः । एवं गुरुः मङ्गलमनुष्ठाय ब्रह्मविद्यामुपदिशति— **यथा सुदीप्तादिति** ।। विष्फुलिङ्गा इति विशिष्टाः अग्निकणा इत्यर्थः । त्रिषु स्फुलिङ्गोऽग्निकण इत्यमरोक्तेः । सुषामादिषु चेति सूत्रेण विष्फुलिङ्गा इति शत्वं बोध्यम् ।। **सरूपा इति** ।। समानं रूपं येषां ते तथोक्ताः । ज्योतिर्जनपदेत्यादि सूत्रेण समानशब्दस्य सादेश इति बोध्यम् । पूर्वपूर्वस्फुलिङ्गसदृशाः उत्तरोत्तरस्फुलिङ्गाः यथा भवन्ति तथा पूर्वकल्पीयपदार्थसदृशा एवोत्तरकल्पेषु पदार्था भवन्तीति दर्शयितुं सरूपा इत्युपमानोपमेययोः विशेषणमुक्तम् । उपसन्नं शिष्यं गुरुः सम्बोधयति— **सोम्येति** ।। सोम इव सोम्यः । शाखादिभ्यो य इति सूत्रेण इवार्थे यप्रत्ययः । तस्य सम्बुद्धिः सोम्येति केचित् । सोमपानार्हेत्यर्थः । सोममर्हति य इति सूत्रादिति । बहवः

भावाः पदार्थाः प्रजायन्ते तत्रैव अपियन्ति प्रविशन्ति चेत्यन्वयः । प्रलये तत्रैव लीयन्त इति परमार्थः । प्रागक्षरात्सम्भवतीह विश्वमिति शौनकं प्रत्यङ्गिरसोक्तम् । अत्र तु उपसन्नं शिष्यं प्रति गुरुणा ब्रह्मणो जगत्कारणत्वादिकमुच्यत इति न पुनरुक्तिरिति ध्येयम् ।। १ ।।

**आ.टी.**——किं ब्रूयादित्यत आह— **तदिति** ।। तदेतद्वक्ष्यमाणं सत्यं न मिथ्येत्यर्थः । "जन्माद्यस्य यत" इति सूत्रोक्तं ब्रह्मलक्षणमुपदिशति— **यथेति** ।। यथा देदीप्यमानादग्नेः स्वसमानरूपाः बहुसङ्ख्याका अग्निकणाः जायन्ते तत्रैव लीयन्ते । हे सोम्य सोमपानार्ह शौनक तथाक्षरनाम्नो हरेर्नानाप्रकारा भावा पदार्था उत्पद्यन्ते । तत्रैव लीयन्ते च ।। १ ।।

**गू.टी.**——गुरूपदेशप्रकारमाह— **यथेति** ।। अन्तर्दीप्ताग्नेः प्रकाशेन समानरूपाः अर्चिषःबहुसङ्ख्याः प्रजायन्ते तत्रैवाग्नौ लीयन्ते च । हे सोम्य तथाक्षराद्ब्रह्मणः विविधा भावा ब्रह्मादिचराचरपदार्थाः जायन्ते तत्रैवापियन्ति प्रलये तमेव विशन्ति ।। १ ।।

## उपनिषत्

**दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।**
**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ।। २ ।।**

**व्या.टी.**——अक्षरस्य गुणान्वदन्नेव जगत इव तस्यापि न जननादि मन्तव्यमित्याह— **दिव्य इति** ।। २ ।।

**ध.टि.**——।। **दिव्य इतीति** ।। दिव्यः अलौकिकः अमूर्तः प्राकृतमूर्तिशून्यः पुरुषः पूर्णषड्गुणः बाह्याभ्यन्तरः बहिरन्तश्च नियामकतया स्थितः अजः उत्पत्तिरहितः अप्राणो ह्यमना इति षोडशकलाराहित्यमुच्यते । शुभ्रः शुद्धः, अक्षराज्जडप्रकृतेः परतः परमात् श्रीतत्त्वात्परः उत्तमः । इदञ्च 'अपरं त्वक्षरं या सा' इति प्रमाणप्रसिद्धमिति हिशब्दार्थः ।। २ ।।

**वामन.टी.**—तस्य तादृक्सामर्थ्यमुपपादयति— **दिव्यो हीति** ।। ननु किमेतत्सर्वोत्पादकमक्षरं सर्वोत्तममाहोस्विन्नेति वक्तव्यम् । आद्ये तस्मात्परतः परस्यान्यस्य विधिर्विरुद्धयते । अन्त्ये सर्वोत्पादकत्वासम्भव इत्यत्र प्रणिधत्ते । अपरं त्वक्षरमित्यादिब्रह्माण्डवचनेन अक्षरान्तरादस्याक्षरस्यैव परतः परत्वं विधीयते इत्यविरोधः ।। २ ।।

**न.टी.**—अक्षरस्य गुणान् वदन्नेव न जगत इव तस्य जननादिकं मन्तव्यमित्याह— **दिव्य इति** ।। स पुरुषः दिव्यः अद्भुतः अमूर्तः अपरिच्छिन्नः बाह्याभ्यन्तरः सर्वान्तर्बहिर्नियामकत्वेन विद्यमानः अजः जननरहितः अप्राणः अमनाः जडेन्द्रियमनोरहितः शुभ्रः पारन्त्र्यादिसर्वदोषरहितः परतः अवरजडाक्षरप्रकृत्युत्तमात् अक्षरात् लक्ष्मीतत्त्वात् परः उत्तमः । हिशब्दचतुष्टयेन ब्रह्मादिप्रत्यक्षानुमानपौरुषेयागमसिद्धत्वमस्यार्थस्य द्योतयति ।। २ ।।

**रा.खं.**—अक्षस्य सृष्ट्युपयुक्तगुणान् वदन् जगत इव न तस्य जन्मादीत्याह— **दिव्य इति** ।। दिव्योऽत्यद्भुतः अमूर्तो नियतपरिच्छिन्नपरिमाणरहितः । किन्तु बाह्योऽभ्यन्तरश्च । "अप्राणो ह्यमना" इति षोडशकलाराहित्यमुच्यते । शुभ्रः शुद्धः अक्षराज्जडप्रकृतेः, परतः श्रीतत्त्वात् पर उत्तमः ।। २ ।।

**स.टी.**—अक्षरस्य गुणान्वदन्नेव जगत इव तस्य न जन्मेत्याह— **दिव्य इति** ।। दिव्योऽद्भुतः अमूर्तः नियतपरिच्छिन्नपरिमाणरहितः । किन्तु बाह्याभ्यन्तरश्च । अप्राणो ह्यमना इति षोडशकलाराहित्यमुच्यते । शुभ्रः शुद्धः । यदभ्यधिथाः अदृश्यत्वादिगुणकं ब्रह्मेति न तद्युक्तम् । "इहाक्षरात्परतः पर" इति त्र्यक्षरात्परतः पराभिधानेनाक्षरशब्दस्य विष्णोर्निरवकाशत्वात् । नैष दोषः । भवदक्षरश्रुतेर्विष्णववकाशभावः यदि अक्षरात्परत इत्यत्र प्रकृताक्षरमधिकृत्य कस्यचित्परत्वमुच्येत नैतदस्ति किन्तु प्रकृताक्षरस्यैवाक्षरात्परतः परत्वविशेषणमुच्यते ।। २ ।।

**व.टी.**—यथाक्षराद्विविधा भावा भवन्ति । एवमक्षरस्याप्यन्यस्माज्जन्मास्तीत्याकांक्षायामुच्यते— **दिव्यो ह्यमूर्त इति** ।। २ ।।

**श्री.टी.—** तथा अक्षराद्भगवत इव न तस्यापि जन्मादिकं मन्तव्यमित्याह– – **दिव्य इत्यादिना** ।। सकाशाद्विविधा अनेकप्रकारा भावाः पदार्था प्रजायन्ते तत्रैवाक्षरप्रलये अपियन्ति प्रविशन्ति चेत्यर्थः । अक्षरनामकस्य भगवतो गुणान्वदन्नेव जगतो दिव्यो लौकिकः । अमूर्तोऽपरिच्छिन्नपरिमाणः प्राकृतमूर्तिशून्यो वा । पुरुषः पूर्णषड्गुणः । बाह्याभ्यन्तरः बहिरन्तश्च नियामकतया स्थितः । अजः उत्पत्तिरहितः । अप्राणो ह्यमना इति षोडशकलाराहित्यमुच्यते । शुक्रः शुद्धः । अक्षराज्जडप्रकृतेः परतः परमाच्छ्रीतत्त्वात्पर उत्तमः । इदं च "अपरं त्वक्षरं या से"त्यादिप्रमाणप्रसिद्धमिति हिशब्दार्थः ।। २ ।।

**उ.टी.—**नन्वक्षरशब्दोक्तभगवतो देहेन्द्रियमनांसि सन्ति न वा । आद्ये श्रमचिन्तादिदोषप्रसङ्गः । देहादिमतः कुलालादेः घटाद्युत्पादनेन श्रमादिदर्शनात् । नान्त्यः । कर्तृत्वायोगात् । देहादिरहितस्य तददर्शनात् । किञ्च भगवान् परिच्छिन्नश्चेद्यत्रास्ति तत्रैव सृष्टिं कुर्यात् । नत्वन्यत्र । तथाच विविधाशेषपदार्थस्रष्टृत्वायोगः । किञ्च भगवानुत्पत्तिमान्भवितुमर्हति । कर्तृत्वात् । कुलालादिवत् । तथाच तदुत्पत्तेः प्राक् यस्य जगत्स्रष्टृत्वं तस्यैवाशेषपदार्थस्रष्टृत्वोपपत्तौ किमन्तर्गडुना भगवतेत्यत आह— **दिव्यो ह्यमूर्त इति** ।। हिशब्दो हेतौ । यस्मात्पुरुषो भगवान् दिव्यज्ञानानन्दात्मकदेहवान् तस्मादमूर्तः । मूर्तं तेजोऽबन्नं तदात्मकं शरीरम् । जडशरीरमिति यावत् । तद्रहित इत्यर्थः । एवं तृतीयपादे हिशब्दो हेतौ । यस्मात्पुरुषः शुभ्रः शुभैर्ज्ञानानन्दाद्यात्मकैर्ज्ञानकर्मेन्द्रियैः रमत इति शुभ्रः । डोऽन्यत्रापि दृश्यत इति डप्रत्यये टिलोपे पृषोदरादित्वाच्छुभ्रशब्दात्तलोपे रूपमेतत् । तस्मादप्राणः जडज्ञानकर्मेन्द्रियरहितः । अमनाः जडमनोरहित इत्यर्थः । अनेनाद्यतृतीयपादद्वयेन ज्ञानानन्दाद्यात्मकदेहेन्द्रियादिकमङ्गीकृत्य जडदेहादिकं निराकृतम् । तेन देहादिसद्भावात्कर्तृत्वोपपत्तिः । जडदेहाभावान्न श्रमचिन्तादिप्रसङ्गः । तस्यैव तद्व्याप्तत्वादित्युक्तं भवति । किञ्चेत्याद्युक्तद्वितीयदोषनिरासायाह— **स बाह्याभ्यन्तर इति** ।। सः भगवान् । बाह्यः बहिर्भवः आभ्यन्तरः सर्वपदार्थाभ्यन्तरे भवः । अतः परिच्छिन्नत्वाभावान्न तत्पक्षोक्तदोष इति भावः । अनेनैव विविधा भावाः

प्रजायन्त इति यदशेषपदार्थस्रष्टृत्वमुक्तं तदप्युपपादितम् । बहिः स्थित्वा बाह्यार्थोत्पादकः देहान्तः स्थित्वा सुखाद्यान्तरपदार्थोत्पादक इति । तृतीयदोषनिरासाय ह्यज इत्युक्तम् । हिशब्दो हेतौ । दिव्य इत्यनुवर्तनीयम् । यस्माद्भगवान् दिव्यः आनन्दाद्यात्मकदेहवान् तस्मादजः उत्पत्तिशून्यः । जडदेहादेरेवोत्पत्तिव्याप्तत्वात् । तथाच नोक्ततृतीयदोष इति भावः । ननु जडदेहादिराहित्यमेव भगवतः कुत इत्याशंक्य जडप्रकृतिनियामकत्वान्न तस्य प्रकृतिकार्यदेहादिकम् । तदुक्तम् "न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा" इति भावेन जडप्रकृत्यभिमानिलक्ष्मीनियामकत्वं दर्शयति— **ह्यक्षरात्परतः पर इति** ।। २ ।।

**आ.टी.**——अक्षरस्य सृष्ट्युपयुक्तगुणानाह— **दिव्य इति** ।। क्रीडादियुक्तः प्राकृतमूर्तिहीनः व्याप्तो वा । सर्वस्य बाह्ये मध्ये च वर्तमानः अजः उत्पत्तिहीनः प्राकृतप्राणमनोभ्यां रहितः शुद्धः अक्षरपुरुषनामा हरिः अक्षरात्परतः परश्च । जडप्रकृतिरूपाक्षरात्परतो लक्ष्मीरूपाक्षराच्च परोऽक्षरः । हिशब्दः प्रसिद्धौ । परस्परहेतौ वा ।। २ ।।

**गू.टी.**——अक्षरस्य गुणान्वदन्नेव न जगत इव तस्यापि जननादि मन्तव्यमित्याह—— **दिव्य इति** ।। दिव्यो लोकविलक्षणः क्रीडादियुक्तो वा अमूर्तोऽपरिच्छिन्नः अशरीरो वा । सर्वस्य बाह्याभ्यन्तरवर्ती । जननशून्यः प्राकृतप्राणमनःशून्यः । शुद्धः । अजः जडाव्यक्तम् । पराक्षरं श्रीतत्त्वं तस्मात्परस्मात्परोऽत्युत्तमः ।।

**भाष्यम्**

**अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।**
**अक्षरं परमं श्रीस्तु परतः परमक्षरम् ।।**
**वासुदेवः परानन्द इति त्रिविधमक्षरम् ।। इति च ।।**

**व्या.टी.**——अक्षरात्परत इत्युक्तं परतोऽक्षरात्परत्वं यया तदक्षरमधिगम्यत इत्युक्ताक्षरादिति प्रतीयते । तदयुक्तम् । तस्य परविद्याविषयत्वादतो विरोधं

व्यवस्थापकप्रमाणेन परिहरति— **अपरमिति** ।। परतोऽक्षरात् ।।

**ध.टि.**——।। **तस्य परविद्याविषत्वादिति** ।। तद्विषयस्य सर्वोत्तमत्वादिति भावः ।। **अपरमितीति** ।। अत्र याजनरूपिका प्रकृतिस्त्वपरमक्षरमिति सम्बन्धः। श्रीस्तु परममक्षरमित्यन्वयः ।। परत इत्यनूद्य व्याख्याति— **अक्षरादिति** ।। परमाक्षरादित्यर्थः ।।

**वा.टी.**——'अपरं त्वक्षरं या सा' इति वदता उपनिषदि अपरतोऽक्षराज्जडप्रकृतेः, परतोऽक्षराच्चितः प्रकृतेश्च परः अक्षरः परमात्मेति योजना सूचिता ।

**स.टी.**——नचाक्षरस्याक्षरात्परतः परत्वं विरुद्धमित्यभिदध्याः । क्षराभिधानादक्षरान्तराच्चित्प्रकृतेः परत्वोपपत्तेः । तदसुसूचत् विशेषणान्नेतर इति । अक्षरात्परतः परत्वस्यादृश्याक्षरविशेषणत्वात्प्रकृताक्षरं विशिष्टवक्तरो नेति तदर्थः । तदिदमभाषत— **अपरं त्वक्षरं या सेति** ।।.

**व.टी.**——तत्र पूर्वोक्ताक्षरादन्यस्योत्तमोत्तमत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाक्षरात्परतः पर इत्येतद्व्याचष्टे— **अपरमिति** ।।

**श्री.टी.**——ननु यदुक्तमक्षरात्सम्भवतीह विश्वमित्यत्राक्षरं परब्रह्मैवेति । तदयुक्तम्। अक्षरात्परतः पर इति वाक्ये प्रकृताक्षरादपि परतः परस्यान्यस्याभिधानात् । अक्षरस्य परब्रह्मत्वे च तदसम्भवात् । नहि विष्णोरप्यन्यः परोऽस्तीत्याशंक्य भवेदेतद्यद्यक्षरात्परतः पर इत्यत्र प्रकृतादृश्यत्वादिगुणकाक्षरमेवाधिकृत्य ततः कस्यचित्परत्वमुच्यते । नैतदस्ति । किन्तु प्रकृताक्षरस्यैवाक्षरात्परतः परत्वविशेषणमुच्यते । नचाक्षरस्याक्षरात्परतः परत्वं विरुद्धमिति वाच्यम् । प्रमाणे त्रिविधाक्षराभिधानादक्षरान्तरादस्याक्षरस्य परत्वोपपत्तेरित्यभिप्रेत्याक्षरत्रैविध्यं प्रमाणेन दर्शयति— **अपरं त्विति** ।। या जडरूपिका प्रकृतिः सा परमक्षरमिति सम्बन्धः । श्रीस्तु परममक्षरमित्यन्वयः । परतः परमाक्षराच्छ्रीतत्त्वात् । यथोक्तं सूत्रकृता 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इति । उक्तं च भाष्ये—

परत्वं त्वक्षरं या सा प्रकृतिर्जडरूपिका ।
श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया ।।
तामक्षरं परं प्राहुः परतः परमक्षरम् ।
हरिमेवाखिलगुणमक्षरत्रयमीरितम् ।।

इति स्कान्दे त्र्यक्षराभिधानादक्षरात्परतः पर इत्यपि विशेषणमेव' इति ।।

**उ.टी.**—नन्वत्र तथाक्षरादित्यनेन यस्याक्षरस्य सर्वोत्पादकत्वमुक्तं तस्यैवाक्षरात्परतः परत्वमुच्यत इति वक्तव्यम् । नचेदं युक्तम् । स्वस्यैव स्वापेक्षया परतः परत्वायोगादित्यतो व्याचष्टे— **अपरमिति** ।। अक्षरं त्रिविधम् । अपरं परमं परतः परं चेति । तत्राक्षरात्परत इति मन्त्रे अक्षरशब्देन परमक्षरं ग्राह्यम् । नतु यया तदक्षरमधिगम्यत इतिवत्परं ब्रह्म । अपरं त्वक्षरं या सेति व्याख्यानरूपप्रमाणविरोधात् । तादृशाक्षरात्परतः परत्वं तु भगवतो युज्यत एवेति भावः । अत्र सृगालवासुदेवादिव्यावृत्त्यर्थं परानन्द इत्युक्तम् । आनन्दरूपव्यावृत्त्यर्थं वासुदेव इत्युक्तमिति ध्येयम् ।।

## उपनिषत्

**एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।**
**खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ।। ३ ।।**

**ध.टि.**—एतस्माद्भगवतः प्राणादिशब्दैर्देवता जडश्चोच्यते । विश्वस्य जगतो धारिणी धारणसमर्था पृथिवी चेति यथावचनम् । जायते इत्यस्यानुवृत्तिः ।।

**वामन.टी.**—उक्तसृष्टेः क्रमं दर्शयति— **एतस्मादिति** ।। ३ ।।

**न.टी.**—अक्षरात् भावाः प्रजायन्ते इत्युक्तं भगवतः स्रष्टृत्वं सविस्तरमाह—- **एतस्मादिति** ।। प्राणो मुख्यः । अत्र जडानि देवाश्च ग्राह्याः ।। ३ ।।

**रा.खं.**—एतस्मात् पराक्षरात् प्राणो मुख्यवायुः । विश्वस्य धारिणी पृथिवीत्यन्वयः । अत्र जडतदभिमानिनामुभयेषां ग्रहणम् ।। ३ ।।

**व.टी.**——अक्षराद्विविधाः सौम्य भावाः प्रजायन्त इत्युक्तसृष्टिः प्रपञ्च्यते— **एतस्माज्जायते प्राण इत्यादिना** ।। ३ ।।

**श्री.टी.**——एतस्मादक्षरनामकाद्भगवतः प्राणादिशब्दैर्देवता जडं चोच्यते । विश्वस्य धारिणी जगद्धारणसमर्था ।। ३ ।।

**उ.टी.**—तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्त इत्यत्र सूक्ष्मस्थूलादिभेदेन बहुसृष्टयः प्रतिज्ञाताः विविधभावाः प्रजायन्त इति नानाविधपदार्थोत्पत्तेरुक्तत्वात् । तत्र ते भावाः किंनामानः केन च क्रमेण जायन्त इति शंकाद्वयं परिहर्तुं प्रतिज्ञातां स्थूलसृष्टिं प्रपञ्चयति— **एतस्मादिति** ।। ते भावाः प्राणादिनामानः । पाठक्रमेणैव चोत्पद्यन्त इति भावः । अत्र प्राणादिशब्दैः महदादितत्त्वानि तदभिमानिनो ब्रह्माद्याश्च विवक्षिताः । विश्वस्य धारिणीत्यनेन च पृथिव्यनन्तरं ब्रह्माण्डं तदन्तर्गतं च विश्वं क्रमेण जातमित्यवधेयम् ।। ३ ।।

**आ.टी.**——अक्षराद् भावाः प्रभवन्त इत्युक्तं विविच्याह— **एतस्मादिति** ।। विश्वस्य सस्यादेर्धारिणी पृथिवी च जायते । लिङ्गव्यत्ययेन मुख्यप्राणादीनां विशेषणं वा ।। ३ ।।

**गू.टी.**——सृष्टिक्रममाह— **एतस्मादिति** ।। एतदक्षरादौ प्राणः । प्राणादिद्वारा मनआदिकं जडाजडमुभयं जातमित्यर्थः । विश्वस्य धारिणीति पृथिवीविशेषण-मुपलक्षकम् ।। ३ ।।

## उपनिषत्

**अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ**
**दिशः श्रोत्रे वाग् विवृताश्च वेदाः ।**
**वायुः प्राणो हृदयं विश्व-**
**मस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ।। ४ ।।**

**व्या.टी.**—विश्वमिति काचिद्देवता । वायुशब्देन "प्राणो वायु"रिति मुख्यप्राणस्योक्तत्वात् । "आपः पृथिवी"ति पृथिव्युत्पत्तिरुक्ता सा कस्मादङ्गादित्यत आह–
– **पद्भ्यां पृथिवीति** ।। ४ ।।

**ध.टि.**—प्राणादिदेवानामुक्तामेवोत्पत्तिमङ्गविशेषाद्वचनेन विवृण्वन् भगवदङ्गानामग्न्यादिशब्दवाच्यत्वरूपं महिमानञ्चाह— **अग्निरित्यादिना** ।। भगवन्मूर्धादिरग्न्यादिरग्र्यत्वादिनिमित्तैः अग्न्यादिशब्दवाच्यः । प्रसिद्धाग्न्यादिदेवसमूहोऽपि मूर्धादिस्तज्जन्यस्तदाश्रितश्चेति योज्यम् । नचात्र "मुखादिन्द्रश्चाग्निश्चे"त्यादि विरोधः। बहुरूपत्वाङ्गीकारात् । यथोक्तम्—'बह्वङ्गत्वं बहुत्वत' इति । विवृताः देशतः कालतश्च व्याप्ताः । प्राणो मुख्यप्राणः । वायुः श्वासरूपवायुजन्यः । राघवेन्द्रतीर्थास्तु प्राणो वायुः वायुनामा वायुजनक इति व्याख्यातवन्तः । ननु वायुः प्राण इति कथम् । "आनीदवातं अतमो वाग्नि"रिति श्रुतौ सर्वथा श्वासरूपवाय्वभावोक्तेः तमो वाय्वादीनां सर्वात्मना निवृत्तिरिति तत्त्वप्रकाशिकाविरोधादिति चेन्न । अवातं वातप्रेरणयाऽन्यमिति तत्त्वोद्योतटीकायां व्याख्यातत्वेन मुख्यप्राणप्रेरणाशून्यमित्यर्थकत्वेन अतमो वाय्वित्यत्र वायुपदस्य वाताख्यरोगपरत्वाभिप्रायेण तत्त्वप्रकाशिकायां सर्वात्मना तन्निवृत्तिवचनेऽपि चिदाद्यात्मकश्वासाङ्गीकाराविरोधात् । भगवतः सर्वात्मना श्वासाभावे "प्राणाद्वायुरजायते"त्यादि वाक्यविरोधापत्तेः । अत एव छान्दोग्यभाष्ये पञ्चमाध्याये वैश्वानरविद्यायां मूर्धैव सुतेजाः चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा इत्यत्र—"वाय्वादिप्राणशक्यं न यत्तत्कर्म हरेर्यतः" प्राणः पृथग्वर्त्मेत्यत्र वाय्वादिप्राणशक्यकार्यकर्तृत्वेन भगवच्छ्वासस्य लोकविलक्षणत्वेन पृथग्वर्त्मत्वप्रसिद्धिरुक्ता । तत्र हरेः प्राण इत्यन्वयः । प्राणः श्वास इति तदर्थः । ननु हृदयं विश्वमस्येत्यत्र विश्वशब्दितो वायुरिति प्रतीयते । "तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्नि"रित्यत्र विश्वो वायुरिति तत्त्वप्रकाशिकायां विश्वपदस्य वायुपरत्वेन व्याख्यातत्वादित्यत आह— **विश्वमिति** ।। **काचिद्देवतेति** ।। तथैव किन्न स्यादित्यत आह— **प्राणो वायुरितीति** ।। पद्भ्यां पृथिवीति ।। एष अक्षरनामा भगवान्सर्वभूतान्तरात्मा सर्वभूतान्तर्यामी ।। ४ ।।

**वामन.टी.**—विष्णोस्तदङ्गेभ्यो देवानां जननं नत्वेकस्मादेव सर्वेषामित्याह—- **अग्निर्मूर्धेति** ।। अग्निस्त्वस्य मूर्ध्नो जायते । नचाग्न्यादीनां तन्मूर्धाद्यैक्यमिहाभिप्रेतम् । जन्यजनकभावाख्यभेदप्रकरणत्वात् । ब्राह्मणोऽस्य मुखमितिवत् अतो मूर्धादिशब्दानां पञ्चम्यर्थत्वमिहाभिप्रेतम् । तन्नामवाच्यमङ्गं तदिति वचनाच्च न विरोधः । सव्येतरचक्षुषी । चन्द्रसूर्याख्येतरावपि ताभ्यां जाताविन्यादि ग्राह्यम् । पद्भ्यां पृथिवीति स्पष्टोक्तेश्च ।। ४ ।।

**न.टी.**——अङ्गादुत्पत्तिमाह— **अग्निरिति** ।। अग्निर्मूर्धा अग्निनामकमूर्धाख्यभगवदङ्गात् अग्निर्जातः तदाश्रितश्च इत्यादि योजना द्रष्टव्या । विश्वमिति काचिद्देवता । न केवलमित्युत्पादकः आश्रयश्च किन्त्वित्यत आह— **एष सर्वभूतान्तरात्मेति** ।। ४ ।।

**रा.खं.**——'एतस्माज्जायते प्राणः' इत्यादिना सामान्यत उक्तम् । तत्किम्? कस्मादङ्गाज्जातमित्यत आह— **अग्निर्मूर्धेति** ।। अस्य प्रकृताक्षरस्य भगवतो मूर्धा अग्निः, अत्तृत्वनिमित्तेनाग्निनामाग्निजनकश्च । अग्र्याख्यमूर्धजत्वादग्रेरग्निनाम । कार्यकारणयोः 'गोभिः श्रीणीत मत्सरम्' इत्यादाविवाभेदोपचारेणायं निर्देशः । एवमुत्तरत्रापि । चक्षुषी चन्द्रसूर्यौ आह्लादकत्वादिहेतुना चन्द्रसूर्यनामके चन्द्रसूर्यजनके च । श्रोत्रे दिशः । दिशन्त्यभीष्टमिति दिङ्नामके दिशां जनके च । वाक् भगवतो वाक् विवृतवेदनामिका विवृतशब्दितविस्तीर्णवेदजनिका, विवृता अभिव्यक्ता वा । भगवतः प्राणो वायुः वायुनामा वायुजनकः । विश्वमिति काचिद्देवता । हृदयं विश्वनामकं विश्वजनकं च । पद्भ्यां पृथिवीत्यन्ते श्रवणात्पूर्वत्रापि जन्यजनकभावेन अग्निर्मूर्धेत्यादिनिर्देश इति ज्ञायते । हिशब्दः पद्भ्यां भूमिरित्यादिश्रुत्यन्तरप्रसिद्धिद्योतकः । न केवलं सृष्टिसंहारकर्ता नियमनकर्ता चेत्याह— **एष सर्वभूतान्तरात्मा** ।। अन्तः स्थित्वा आदानादिकर्तृत्वादन्तरात्मा। तस्मादग्निस्समिधश्च पृथिव्यां जायन्त इति शेषः । यश्च सूर्यः तस्मात्सूर्यात्सोमाच्च पर्जन्यः वृष्टिः, पर्जन्यात् पृथिव्यामोषधयश्च जायन्त इत्यर्थः ।। ४ ।।

**स.टी.**——प्राणादीनां उक्तोत्पत्तिं विवृणुते— **अग्निरिति** ।। अग्निर्मूर्धेत्यादौ अग्न्यादीनां मूर्धाद्यवयवजन्यत्वं तदाश्रितत्वं च । विश्वमिति काचिद्देवता । प्राणो वायुरिति । मुख्यप्राणस्योक्तत्वात् । नन्वग्निर्मूर्धेति वाक्यस्य मूर्धैव सुतेजा इति वैश्वानरविद्यासमाख्यानाद्वैश्वानरपरत्वमेव स्यात् । न स्यात् । पुरुषसूक्तसमाख्यानाद्वैश्वानरविद्याया विष्णुपरत्वात् । तथाचासुसूत्रत् । "पुरुषविद्यायामपि चैनमधीयत इति" । तदभाषत— **विश्वमिति** ।। ४ ।।

**श्री.टी.**——प्राणादिदेवानामुक्तामेवोत्पत्तिमङ्गविशेषाद्वचनेन विवृण्वन्भगवदङ्गानामग्न्यादिशब्दवाच्यत्वरूपं महिमानं चाह— **अग्निरित्यादिना** ।। भगवन्मूर्धादिरग्न्यादिशब्दवाच्यः । प्रसिद्धाग्न्यादिर्देवसमूहोऽपि मूर्धादिस्तज्जन्यस्तदाश्रितश्चेति योज्यम् । नचात्र मुखादिन्द्रश्चाग्निश्च । दंष्ट्रार्यमेन्दू । चन्द्रमा मनसो जात इत्यादिविरोधः । बहुरूपत्वाङ्गीकारात् । यथोक्तम्— "बह्वङ्गत्वं बहुत्वत" इति । विवृताः देशतः कालतश्च व्याप्ताः । प्राणो मुख्यप्राणः । वायुः श्वासरूपवायुजन्यः । ननु वायुः प्राण इति कथम् । आनीदवातम् । अतमो वाय्विति श्रुतौ सर्वथा श्वासादिरूपवाय्वभावोक्तेः । तमोवाय्वादीनां सर्वात्मना निवृत्तिरिति तत्त्वप्रकाशिकाविरोधश्चेति चेत् । उच्यते । अवातं वातप्रेरणाशून्यमिति तत्त्वोद्योतटीकायां व्याख्यातत्वेन मुख्यप्राणप्रेरणाशून्यमित्यर्थकत्वेन सच्चिदानन्दात्मकश्वासाङ्गीकाराविरोधित्वात् । भगवतः सर्वात्मना श्वासाभावे श्वसितं मातरिश्वा प्राणाद्वायुरजायत श्वासैजदलकव्रातमित्यादि वाक्यविरोधापत्तेः । विष्णोर्जडवायुः श्वासादिरूपोऽस्तीति केचित् । तन्न । तस्मान्मुख्यप्राणोत्पत्त्ययोगात् । भगवदङ्गादुत्पत्तिकथनस्य प्रकृतत्वेन तदलाभाच्च । श्वासरूपेण मुख्यप्राण एव तद्देहेऽस्तीत्यपि केचित् । तदप्ययुक्तम् । तथात्वे स्वस्मादेव स्वस्योत्पत्तिप्राप्त्याऽग्न्यादीनां मूर्धादिभगवदङ्गेभ्य इव मुख्यप्राणस्यापि भगवदङ्गादुत्पत्तेरलाभापत्तेः । तस्माद्भगवच्छ्वासस्य सच्चिदानन्दात्मकत्वेनाप्राकृतत्वमङ्गीकृत्य मूर्धादिवद्भगवदङ्गत्वमेव वाच्यमिति । अत एव वाय्वादिप्राणाशक्यकार्यकर्तृत्वेन भगवच्छ्वासस्य लोकविल-

क्षणत्वेन पृथग्वर्त्मत्वप्रसिद्धिरुपपद्यते । यथोक्तं छान्दोग्यभाष्ये पञ्चमाध्याये वैश्वानरविद्यायां मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मेत्यत्र । वाय्वादि-प्राणशक्यं न यत्तत्कर्ता हरिर्यतः । प्राणस्तेन पृथग्वर्त्मेति हरेः प्राण इत्यन्वयः । प्राणः श्वास इति तदर्थः । विश्वमिति काचिद्देवता । ननु स मुनिर्भूत्वा समचिन्तयत्तत एते प्रजायन्त विश्वो हिरण्यगर्भोऽग्निरित्यत्र विश्वपदस्य विश्वो वायुरिति वायुपरत्वेन तत्त्वप्रकाशिकायां व्याख्यातत्वादत्रापि स एव विश्वपदवाच्यः किं न स्यादिति चेन्न । वायुः प्राण इति पृथगुक्तत्वात् । एष अक्षरनामा भगवान् । सर्वभूतान्तरात्मा सर्वभूतान्तर्यामी । अग्निः यश्च सूर्यः सोऽपि तस्मादेव सम्यगिद्धो भवति । ञि इन्धी दीप्तौ । दीप्तो भवतीत्यर्थः । यस्मात्सोमात्पर्जन्यो जातः यस्माच्च पृथिव्यां जाता ओषधय आप्यायिताः भवन्ति स सोमोऽपि तस्मादेवेद्धो भवतीत्यर्थः । यथोक्तं यदादित्यगतं तेज इत्यादि ।। ४ ।।

**उ.टी.**—एवं तत्त्वसृष्टिं विशदयित्वा प्रतिज्ञातां ब्रह्माण्डान्तः अङ्गसृष्टिमपि विशदयति— **अग्निर्मूर्धेति** ।।

ततश्चायं मन्त्रार्थः—अस्य अक्षराख्यस्य भगवतः मूर्धा अग्निः । अङ्गं स्वतो गन्तुमसमर्थं जगन्नयतीति अग्निशब्दवाच्यः अग्न्याख्यदेवताजनकश्च । एवमस्य चक्षुषी चन्द्रसूर्यौ । आह्लादकारित्वात्सूरिप्राप्यत्वाच्च चन्द्रसूर्यनामके तज्जनके च । नचात्र मुखादिन्द्रश्चाग्निश्च । दंष्ट्रार्यमेन्दू चन्द्रमा मनसो जात इत्यादिविरोधः । तत्राग्निचन्द्रसूर्याणां भगवदङ्गान्तरजातत्वोक्तिरिति वाच्यम् । एकेन रूपेण मूर्धादि-जन्यत्वम् । रूपान्तरेण मुखादिजन्यत्वमित्यङ्गीकारात् । यथोक्तं द्वितीयस्कन्धतात्पर्ये "बहुरूपत्वाद्दंष्ट्रार्यमेन्दू" इत्यादीति । बह्वङ्गत्वं बहुत्वत इति च । एवं अस्य श्रोत्रे अतिदेशर्नानिमित्तेन दिङ्नामके मित्रधर्मवरुणवित्तपरूप-दिग्देवताजनके च । एवं अस्य वाक् वागिन्द्रियं वेदाः वेदननिमित्तेन वेदनामिका वेदोच्चारणहेतुः वेदाभिमानिदेवताजनिका च । विवृता इति तु वेदविशेषणम् । विशेषैः षडङ्गेति-हासपुराणादिभिः वृताः युक्ता इति तदर्थः । अस्य वायुः श्वासवायुः प्राणः

प्रकृष्टचेष्टकत्वात्प्राणनामकः मुख्यप्राणजनकश्च । नचैवमानीदवातमिति श्रुतिविरोधः । तत्र वातमिति श्वासाभावोक्तेरिति वाच्यम् । तत्त्वोद्योतटीकायां अवातं वातप्रेरणाशून्यमिति व्याख्यानात् । नचैवं तमोवाय्वादीनां सर्वात्मना निवृत्तिरिति तत्त्वप्रकाशिकाविरोध इति वाच्यम् । तत्रापि वायुपदस्य वायुप्रेरणार्थकत्वात् । अत एव श्वसितं मातरिश्वेत्यादौ तत्र विष्णोरपि श्वासवायुरुक्तः । स च चिदानन्दात्मक एव तादृशमूर्धाद्यङ्गसहपाठादिति । अस्य हृदयम् । विश्वव्याप्तत्वाद्विश्वनामकं विश्वाख्यदेवताजनकं च । अत्र विश्वो रुद्रः । "तपोऽभिमानी रुद्रस्तु विष्णोर्हृदयमाश्रितः" इति रुद्रस्य हृदयाश्रितत्वलिङ्गात् । यो यदङ्गजन्यः स तदाश्रित इति नियमादिति बोध्यम् । अस्य पद्भ्यां पृथिवी । पञ्चाशत्कोटिविस्तीर्णा भूः । तद्देवता च जातेति शेषः।

"सृष्टिः स्थितिस्संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ।।
विष्णुनास्य समस्तस्य समासव्यासयोगतः" ।।

इति यत्सृष्ट्यादिज्योतिरन्तद्वादशकर्तृत्वमुक्तं तत्र संक्षेपविस्तराभ्यां भगवतः सृष्टिकर्तृत्वमुक्तम् । इदानीं नियमनकर्तृत्वमप्याह— **ह्येष इति** ।। एष भगवान् सर्वभूतान्तरात्मा सर्वप्राणिनामन्तर्यामी च । इदं च प्रमाणसिद्धमिति हिशब्दः । यद्यपि सृष्टिप्रपञ्चनं समाप्य नियमनकर्तृत्वं वक्तव्यम् । प्रकरणशुद्धिसम्भवात्। तथाप्येवंविधसृष्टिकर्तृत्वमसम्भावितमिति शंकापरिहाराय विलम्बमसहमानेन गुरुणाऽत्रैवोक्तमित्यवधेयम् ।। ४ ।।

**आ.टी.**——जननं च स्वाङ्गादेवेत्याह— **अग्निर्मूर्धेति** ।। पद्भ्यां पृथिवीत्युत्तरवाक्यान्मूर्धेत्यादिप्रथमा पञ्चम्यर्थे । 'सप्तसु प्रथमे'ति सूत्रात् मूर्ध्नोऽग्निर्जातः । चन्द्रसूर्यौ चक्षुषोः । श्रोत्राभ्यां दिग्देवाः । वेदाः वाग्विवृताः वागिन्द्रियात्प्रकटीभूताः । प्राणात् घ्राणात् वायुः। हृदयात् विश्वं चतुर्मुखः । "बह्वङ्गत्वं बहुत्वत" इति देवानां रूपान्तरापेक्षया सृष्ट्यन्तरत्वान्न ग्रन्थान्तरविरोधः । योऽग्र्यादेर्जनकः स एष हरिः विश्वस्य स्वजन्यस्यान्तरात्मा अन्तर्नियामकः । योऽग्नि-

स्तस्मात्समिधो जाताः । यश्च सूर्यस्तस्मात्सोमाच्च पर्जन्यस्तत ओषधयश्च पृथिव्यां जायन्ते ।। ४ ।।

**गू.टी.**——एते प्राणादयो विश्वधारका इति । प्राणादीनामेवाङ्गतः सृष्टिं स्पष्टमाह-– **अग्निर्मूर्धेति** ।। पञ्चम्यर्थे प्रथमा । पद्भ्यामित्युपसंहारात् । मूर्ध्नोऽग्निर्जातः, चक्षुर्भ्यां सूर्यचन्द्रौ, श्रोत्राभ्यां दिग्देवाः, वेदा वाचो वागिन्द्रियाद्विवृताः जाताः । वायुर्मुख्यः हरेः स्वरूपप्राणाज्जातः । हृदयाद्विश्वं ब्रह्मा विरिञ्चः । पद्भ्यां भूमिः स हरिः सर्वान्तरात्मा सर्वान्तः स्थित्वा नियामकश्च देवानां रूपभेदात्कल्पभेदा-दङ्गान्तरादपि जननं युक्तमत एव मुखादग्निरित्यादि । तस्मादग्निः पावकाख्यो होमसाधनश्च जातः । समिधश्च जाताः यज्ञसाधनं सर्वं जातम् । यश्च सूर्यो जातः पूर्वंसोमश्च पूर्वं जातः तस्मात्सूर्यात्सोमाच्च तदुभयद्वारा पर्जन्यं तद्द्वारा ओषधयः पृथिव्यां जायन्ते ।। ४ ।।

### भाष्यम्

**विष्ण्वङ्गानां हि नामानि द्युभ्वादीनि तु सर्वशः ।**
**क्रीडादिशक्तिरूपत्वात्तज्ज्ञत्वादन्यवस्तुषु ।। इति च ।।**

**व्या.टी.**——अग्निर्मूर्धेति सामानाधिकरण्यप्रयोगादैक्यप्रतीतिं निवारयति— **विष्ण्विति** ।। उपनिषदन्तरे द्यौर्मूर्धेति पाठभावात्तदनुसार्येवैतद्वचनमिति ज्ञातव्यम् । अनेन भगवतो मूर्धाग्निरग्निनामकः । अग्निश्च भगवन्मूर्ध्नि अग्निनामके जातत्वाद-ग्निनामेत्यादि योजना सूचिता भवति ।

**ध.टि.**——**विष्ण्वितीति** ।। अत्र मूर्धादीनामित्यर्थः । अग्निर्मूर्धेत्यादौ द्युशब्दा-भावादाह— **उपनिषदन्तर इति** ।। अत्र भाष्ये मूर्धेत्याद्यनुवादेनाग्नित्वादिकं विधेयमिति ज्ञातव्यम् । क्रीडा द्युशब्दार्थः । दिवु क्रीडेत्यादि धातोरिति ज्ञेयम् । अन्यवस्तुषु द्युवादीनि नामानीत्युक्त्या सम्बन्धः । हिशब्देन—

यस्माद्यज्ञायते चाङ्गाल्लोकवेदादिकं हरेः ।

तन्नाम वाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ।।

इत्यादि प्रमाणप्रसिद्धिं दर्शयति ।।

**वामन.टी.**—अत्रापि विष्ण्वङ्गानामित्यादि ब्रह्माण्डवचनमाह— **दिवादीनीति** ।। अग्न्यादिप्रकाशवाचकानि स्वर्गादिवाचकानि च तदङ्गजत्वादेवान्यवस्तुषु तन्नामवत्त्वं एवमधिदैवम् । विष्णोरेव प्राणादिसृष्टिरुक्ता । अधियज्ञमप्यग्न्यादीनामरण्यादिसंस्थात्कुत एव सृष्टिरुच्येत ।।

**वा.टी.**—ननु 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इति श्रुतौ द्युशब्दो नास्ति । अतो 'विष्ण्वङ्गानां हि नामानि द्युभ्वादीनि तु सर्वशः' इति वाक्यस्य कथं प्रकृतोपयोग इति चेत्सत्यम् । 'मूर्धा दिवो नाभिरग्निः पृथिव्याः' इति, 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः' इत्यादिश्रुतौ मूर्धा द्यौरिति सामानाधिकरण्यं प्रतीयते नाभिरग्निरितिवत् । दिवः द्युलोकाः सर्वे मूर्धा इति हि प्राचीनश्रुतेरर्थः । द्वितीयश्रुतेरपि सुष्ठु तेजो यस्य सः सुतेजा द्युलोको मूर्धेत्यर्थः ।

अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरधो दिशः श्रुतिः ।
द्यौः कं सुरेन्द्रास्तव बाहवोऽर्णवः कुक्षिर्मरुत्प्राणबलप्रकल्पितम् ।।

इति भागवते स्पष्टं द्यौः कं शिर इति प्रतीयते । अतो बहुधा द्युमूर्धत्वस्यैव श्रुतिस्मृत्यादौ प्रसिद्धत्वाद्बहूनामुपकारो न्याय्य इति भावेन तत्रत्यविरोधपरिहाराय स्मृतयः सर्वत्र द्युभ्वादीनीत्याहुः । तेनैव न्यायेनात्रापि समाधानं भविष्यतीतीमां स्मृतिमुद्धरतो भाष्यकारस्य भावः । हृदयं विश्वमस्येत्यस्य 'स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त । विश्वो हिरण्यगर्भः' इति भाष्योदाहृतश्रुतौ विश्वपदेन वायोर्गृहीतत्वात् हृदयं विश्वमस्येत्यत्रापि वायोर्ग्रहणे वायुः प्राण इत्यनेन पुनरुक्तिप्रसङ्गाद्विश्वमिति काचिद्देवतेत्यर्थः । 'यश्च सूर्यः सोमात् पर्जन्यौषधयः' इत्यत्र चक्षुषी चन्द्रसूर्यावित्युभयोः सहोत्पत्त्युक्तेर्यश्च सूर्यस्तस्मात्सोमः सोमाच्च पर्जन्यौषधयः पृथिव्यां जाता इत्यर्थः ।।

**व.टी.**—तत्र विष्णोर्मूर्धाद्यवयवानां अग्न्यादभिः सामानाधिकरण्यव्यपदेशः केन निमित्तेनेत्यतस्तन्नामवत्त्वादेवेति भावेनाह— **विष्ण्विति** ।। अत्र द्युनामस्थानान्तरगतमेवोक्तम् । नत्वत्र शिरसो द्युनामकत्वमुच्यते ।

**श्री.टी.**—अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावित्यादौ सामानाधिकरण्यप्रयोगबलादग्न्यादीनां भगवन्मूर्धादिभिरभेदप्रतीतिवारणाय प्रमाणेनैव तदभिप्रायमाह— **विष्णवङ्गानां हीति** ।। मूर्धादीना-मित्यर्थः । द्यौर्मूर्धेति शाखान्तरपाठाभिप्रायेणेदम् । अत्र मूर्धेत्यनुवादेनाग्नित्वादिकं विधेयमिति ज्ञातव्यम् । क्रीडादीति द्युशब्दार्थानुवादः । दिवु क्रीडेत्यादि धातोरिति ज्ञेयम् । अन्यवस्तुष्विति सम्बन्धः । तज्जत्वाद्विष्णवङ्गजन्यत्वादित्युपलक्षणम् । तदाश्रितत्वाच्चेत्यपि द्रष्टव्यम् । यथोक्तं द्वितीयस्कन्धतात्पर्ये–'प्रतिमापेक्षयाङ्गानि स्वरूपापेक्षया तज्जानि तदाश्रितानि च ।

प्रतिमापेक्षयाङ्गानि भूरादीनि स्वरूपतः ।
तदाश्रितानि तज्जानि बह्वङ्गत्वं बहुत्वतः ।। इति ।।

अत्र चाग्निरित्यनुवादेन मूर्धत्वादिकं विधेयमित्यवगन्तव्यम् । हिशब्देन–

यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।
तन्नाम वाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ।।

इत्यादि प्रमाणप्रसिद्धिं दर्शयति ।।

**उ.टी.**—अत्र भगवन्मूर्धाद्यङ्गानामग्न्यादिदेवतैक्यमुच्यते । नच तद्युक्तम् । मानान्तरविरोधादित्यतोऽन्यथा तन्मन्त्रं व्याचष्टे— **विष्ण्विति** ।। उपनिषदन्तरे द्यौर्मूर्धेति पाठसद्भावात्तदनुसारेण द्युवादीनीत्युक्तम् । द्युवादीत्युवङादेशः छान्दसः । तन्वादीनामियङुवङौ वेति वार्तिकात् । द्यौरित्यादिपदानीत्यर्थः । विष्णवङ्गानां द्यौरित्यादिशब्दवाच्यत्वे निमित्तमाह— **क्रीडादीति** ।। दिवु क्रीडाविजिगीषेत्यादि धातुव्याख्यानादिति भावः । स्वर्गादीनां तच्छब्दवाच्यत्वे निमित्तमाह । तज्जत्वादितीति टीकाकाराः । अन्ये तु हिशब्दो हेतौ । नामानीत्यस्या-वृत्तिः । द्युवादीनीति । द्यौः क्रीडापि गुणः तद्वादीनि तद्वाचकानीत्यर्थः । ततश्च यस्मात्सर्वशोऽपि

नामानि द्युवादीनि क्रीडादिवाचकानि विष्ण्वङ्गानि च क्रीडादि-रूपाणि । अतः क्रीडादिशक्तिरूपत्वात् नामानि अग्न्यादिसर्वनामानि विष्ण्वङ्गानां मूर्धादीनां नामानि वाचकानीति भाष्यं योजयति ।

## उपनिषत्

**तस्मादग्निः समिधो यश्च सूर्यः**
**सोमात् पर्जन्यौषधयः पृथिव्याम् ।।**
**पुमान् रेतः सिञ्चति योषितायां**
**बह्वीः प्रजाः पुरुषात्सम्प्रसूताः ।। ५ ।।**

**व्या.टि.**—यश्च सूर्यस्तस्मात्सोमाच्च । पर्जन्यौषधयः पृथिव्यां जाताः । अङ्गादुत्पत्तिमुक्त्वा पुरुषात्स्त्रियामुत्पत्तिमाह— **पुमानिति** ।। बह्वीः बह्व्यः ।। ५ ।।

**घ.टि.**—अग्निर्यश्च सूर्यः सोऽपि तस्मादेव समिधः सम्यगिद्धो भवति । इन्धी दीप्तौ । दीप्तो भवतीत्यर्थः । समिध इत्यस्य होम्याः अश्वत्थादिसमिध इति वार्थः । यस्मात्पर्जन्यो जातः । यस्माच्च पृथिव्यां जाता ओषधयः आप्यायिता भवन्ति । स सोमोऽपि तस्मादेव समिधो भवतीत्यर्थः । यथोक्तम्—'यदादित्यगतं तेज' इत्यादि । अत्र न केवलं सोमस्यैव पर्जन्याद्युत्पादकत्वम् । अपितु सूर्यस्यापीत्यभिप्रेत्य यश्च सूर्य इत्यस्योत्तरवाक्येनान्वयमभिप्रेत्य यश्च सूर्यस्तस्मात्सोमाच्च पर्जन्य इत्यादि व्याख्यानं टीकायां कृतम् ।। **पुमानिति** ।। आदिसृष्टौ पूर्णत्वात्पुमान्नामा वासुदेवादिचतूरूपो भगवान् योषितायां योषिच्छब्दपर्यायो योषिताशब्दः । रमारूपिण्यां मायादिनाम्न्यां स्वभार्यायां रेतः सिञ्चति । असिञ्चयत् । प्रलये स्वोदरे निवेशितं जगत् रेतोवान्निदधावित्यर्थः । तस्मात्पुरुषात् बह्वीः प्रजाः पुन्नामकब्रह्मसूत्रनामकवायुतद्भार्यादिपूर्वाः सम्यक्प्रसूताः ।। ५ ।।

**वामन.टी.—तस्मादग्निरिति** ।। अग्निः सोमश्च यज्ञपुरुषस्य दक्षिणेतरचक्षुषी तावेव हव्यवाहः सोमदेवता च अथैतावेव देवतानां होता ब्रह्मा च ऋत्विजो

मनुष्यऋत्विजोरनुमन्तारौ सूर्यो यूपमानी देवो ह्यध्वर्युजातः पर्जन्यस्तूद्गानावपि मर्त्यऋत्विजोरनुमन्तारौ सौम्यत्वान्मुख्यतः सोमाख्ये । भगवान् ओषधयो धान्याज्यबर्हिरादयः समिधो वसन्तादिनामकाः प्रयाजदेवता इध्माभिमानिन्य-श्चैताः । अथ परमपुरुषः स्वेच्छया प्रकृत्यनुसारेणापि सृष्टिं प्रवर्तयतीत्याह— **पुमानिति** ।। ५ ।।

**वा.टी.**——पूर्वं पुरुषनामकभगवदङ्गादेवोत्पत्तिरुक्ता, अधुना पुरुषात्स्त्रियश्चेति मिथुनादुत्पत्तिमाह— **पुमानिति** ।। पुमान् पुरुषनामकः परमात्मा योषितायां योषित्पदवाच्यलक्ष्म्यां रेतः सिञ्चतीत्यर्थः । 'टापञ्चापि हलन्तानाम्' इति वचनात् दिशि दिशेतिवत् वाचि वाचेतिवच्च योषिति योषितेत्यपि शब्दोऽस्तीति ज्ञेयम् । यज्ञाश्च सर्व इत्यत्र यज्ञपदेन पशुबन्धरहितं पञ्चमहायज्ञादिकं गृह्यते । क्रतुपदेन च पशुबन्धसहिताग्निष्टोमादिकं गृह्यते । कृती प्रयत्न इति धातोः बहुयत्नसाध्ययज्ञस्य क्रतुपदवाच्यत्वाद्युक्तोऽयमर्थः । अतो न पौनरुक्त्यमिति भावः ।। ५ ।।

**न.टी.**——मिथुनसृष्टिमाह— **पुमानिति** ।। पुमान् परमपुरुषः विष्णुः योषितायां स्वाश्रितायां रमायां रेतः सिञ्चति । नच प्रागुक्तदेवानां पुनर्वचनात् पुनरुक्तिरिति वाच्यम् । अत्र स्त्रियामित्युक्तेः ।। ५ ।।

**रा.खं.**——एवमङ्गेभ्य उत्पत्तिमुक्त्वा स्त्रियामुत्पत्तिमाह— **पुमानित्यादिना** ।। पूर्णत्वेन हेतुना पुमान्नामा वासुदेवो योषितायां योषिति, हलन्ताद्वेति टाप्, रमायां रेतः सिञ्चति । प्रलये स्वोदरे निवेशितं जगद्रेतोवद्रमायां निदधातीत्यर्थः । ततो बह्वीः बह्व्यः प्रजाः पुरुषात् पूर्णगुणाद्वासुदेवात्सम्प्रसूताः ।। ५ ।।

**स.टी.**——तस्माद्भगवतः अग्निदेवता जाता । यश्च सूर्यः तस्मात्सूर्यो सोमाच्च पर्जन्य औषधयश्च पृथिव्यां सम्भूताः । यश्च समिद्धोऽग्निस्तस्माज्जाता ओषधयः स्वद्यते । अग्निरेतास्वदयतीति वाक्यात् । समिध इति पाठे औदुम्बरादिसमिध इति तदर्थः । एवं भगवदङ्गादुत्पत्तिमुक्त्वा भगवतो रमायामुत्पत्तिमाह— **पुमा-**

**निति** ।। पूर्णत्वाद्वासुदेवः पुमान् 'पिपतेर्डुः मसुन्' । बहुलग्रहणात् । स योषितायाम् । टापं चापीति टाप् । योषिति । मायायां गर्भमादधात् । बह्वीः बह्व्यः पुरुषाद्विष्णोः सम्प्रसूताः प्रजज्ञिरे ।। ५ ।।

**व.टी.**——प्रकारान्तरेणाक्षरात्सृष्टिरुच्यते— **पुमानिति** ।। ५ ।।

**श्री.टी.**——एवं भगवतः सकाशादङ्गादुत्पत्तिमुक्त्वा मिथुनीभावेनोत्पत्तिमाह–– **पुमानिति** ।। आदिसृष्टौ पूर्णत्वात्पुंनामा वासुदेवादिचतूरूपो भगान् योषितायां योषिच्छब्दपर्यायो योषिताशब्दः । रमास्वरूपिण्यां मायादिनाम्न्यां स्वभार्यायां रेतः सिञ्चति असिञ्चत् गर्भमदधादित्यर्थः ।। तस्मात्पुरुषात् बह्वीः बह्व्यः प्रजाः पुन्नामकब्रह्म । सूत्रनामकवायुतद्भार्यादिरूपाः सम्यक्प्रसूताः ।। ५ ।।

**उ.टी.**—एवं तथाक्षरादित्युक्ता भगवत्कर्तृका सृष्टिः मन्त्रद्वयेन तत्त्वसृष्ट्युक्त्या अङ्गसृष्ट्युक्त्या च प्रपञ्चिता । इदानीं पुनरपि तामेव सृष्टिं प्रपञ्चयितुं पृथिव्यां भगवज्जन्ययज्ञादिसृष्टिं सर्गादिकालीनां सूक्ष्मसृष्टिं चाह— **तस्मादग्निरिति** ।। तस्माद्भगवत एव । पृथिव्यां । अयः शुभजनकं दैवम् । अयः शुभावहो विधिरिति कोशात् । ततश्च यज्ञादिधर्म इति पर्यवस्यति । अग्निः सूर्यः सोमः पर्जन्यश्चेत्यादयो यज्ञदेवताः । समिधो यज्ञाङ्गानीध्मानि । इध्ममेधःसमित्स्त्रियामिति कोशात् । ओषधयः व्रीह्यादियज्ञाङ्गद्रव्याणि च । अजायन्तेति योज्यम् । अत्र सोमादिति पञ्चम्या भगवत्कर्तृकपर्जन्यादिसृष्टौ सोमो वृष्ट्यादौ मधुररसपुष्टिकर्तृत्वेन निमित्तमात्रमिति सूचयति । एवं यज्ञतदङ्गद्रव्यादिसृष्टिमुक्त्वा सूक्ष्मसृष्टिमप्याह-– **पुमानिति** ।। ततश्चायं मन्त्रार्थः । पुमान् पूर्णत्वेन पुंनामको वासुदेवः । योषितायाम् । टापं चापि हलन्तानामिति वचनाद्योषितायामिति युक्तम् । स्वयोषिति रमायां रेतः सिञ्चति । गर्भमदधात् । तदनन्तरं पुरुषात् पूर्णषड्गुणात् बह्वीः बह्व्यः प्रजाः विरिञ्चाद्याः सम्प्रसूताः । अत्र विरिञ्चादिसर्वदेवतानां सत्त्वादिसूक्ष्मोपादानकदेहयोगलक्षणमुत्पन्नत्वमेव सम्प्रसूता इत्यनेनोच्यते । वासुदेवकर्तृकसृष्टिप्रसङ्गादिति बोध्यम् ।। ५ ।।

**आ.टी.**——तस्माद्धरेः ऋगादिवेदत्रयं शिक्षाद्यङ्गानि यज्ञाः पशुबन्धहीनाः क्रतवः पशुबन्धयुक्ताः दक्षिणास्यासंवत्सरादिरूपः कालः यजमानः तत्प्राकीप्या लोकाश्च जाताः । ते लोका दृशा यत्र लोके सोमोऽस्ति । यत्र च वायुः पवते वाति । यत्र च सूर्योऽस्ति ते लोकाः सोमवायुसूर्याधिष्ठिता इत्यर्थः । अङ्गसृष्टिमुक्त्वा मिथुनसृष्टिमाह— **पुमानिति** ।। पुमान्हरिर्योषितायां श्रियां रेतस्सिञ्चति । रेतोद्वारा बह्वीः प्रजाः ब्रह्माद्याः पुरुषाज्जाताः । "मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यह"मित्यादि गीतोक्तिः ।। ५ ।।

**गू.टी.**——अङ्गसृष्टिमुक्त्वा मिथुनसृष्टिमाह— **पुमानिति** ।। पूर्णत्वात्पुमान् हरिः स्वयोषितायां रमायां रेतः सिञ्चति ततो रेतसः तस्मात्पुरुषाद्धरेः बह्वीर्बह्व्यः प्रजाः ब्रह्माद्याः प्रसूताः जाताः ।। ५ ।।

## भाष्यम्

**वासुदेवः पुमान्नामा पूर्णत्वात् स स्वयोषिति ।**
**रमायां गर्भमदधात् प्रजास्तस्मात् प्रजज्ञिरे ।। इति च ।।**

**व्या.टी.**——पुमान् रेतः सिञ्चतीत्यस्य प्रकृतसृष्ट्या सङ्गत्यभावप्रतीतिं निवारयन्नाह-— **वासुदेव इति** ।।

**ध.टि.**——**असङ्गतत्वप्रतीतिमिति** ।। अक्षरनामकभगवतः सकाशात्सृष्टेः प्रकृततया तस्या एव वक्तव्यत्वेन लौकिकस्त्रीपुरुषाभ्यां सृष्टिकथनस्यायुक्तत्वादिति भावः ।। **वासुदेव इतीति** ।। अत्र वासुदेवादिचतुरूपी भगवानित्यर्थः । योषितीत्यनेन "टापं चैव हलन्तानामि"त्युक्त्या योषिच्छब्दपर्यायो योषिताशब्द इत्युक्तं भवति । रमायां मायादिनाम्नां स्वयोषिती स्वभार्यायामित्यर्थः। रेतः सिञ्चतीत्यस्याभिप्रायो गर्भमदधादिति । प्रलये स्वोदरे निवेशितं जगत् सृष्टिकाले रमायां न्यधत्तेत्यर्थः । प्रजाः पुन्नामकब्रह्मपूर्वाः इति भाष्यार्थः ।।

**वामन.टी.**—एतदभिप्रायं वासुदेव इत्यादिब्रह्माण्डवचनेनैव प्रकाशयति ।

**निति** ।। पूर्णत्वाद्वासुदेवः पुमान् 'पिपतेर्डुः मसुन्' । बहुलग्रहणात् । स योषितायाम् । टापं चापीति टाप् । योषिति । मायायां गर्भमादधात् । बह्वीः बह्व्यः पुरुषाद्विष्णोः सम्प्रसूताः प्रजज्ञिरे ।। ५ ।।

**व.टी.**——प्रकारान्तरेणाक्षरात्सृष्टिरुच्यते— **पुमानिति** ।। ५ ।।

**श्री.टी.**——एवं भगवतः सकाशादङ्गादुत्पत्तिमुक्त्वा मिथुनीभावेनोत्पत्तिमाह– – **पुमानिति** ।। आदिसृष्टौ पूर्णत्वात्पुंनामा वासुदेवादिचतूरूपो भगान् योषितायां योषिच्छब्दपर्यायो योषिताशब्दः । रमास्वरूपिण्यां मायादिनाम्न्यां स्वभार्यायां रेतः सिञ्चति असिञ्चत् गर्भमदधादित्यर्थः ।। तस्मात्पुरुषात् बह्वीः बह्व्यः प्रजाः पुन्नामकब्रह्म । सूत्रनामकवायुतद्भार्यादिरूपाः सम्यक्प्रसूताः ।। ५ ।।

**उ.टी.**——एवं तथाक्षरादित्युक्ता भगवत्कर्तृका सृष्टिः मन्त्रद्वयेन तत्त्वसृष्ट्युक्त्या अङ्गसृष्ट्युक्त्या च प्रपञ्चिता । इदानीं पुनरपि तामेव सृष्टिं प्रपञ्चयितुं पृथिव्यां भगवज्जन्ययज्ञादिसृष्टिं सर्गादिकालीनां सूक्ष्मसृष्टिं चाह— **तस्मादग्निरिति** ।। तस्माद्भगवत एव । पृथिव्यां । अयः शुभजनकं दैवम् । अयः शुभावहो विधिरिति कोशात् । ततश्च यज्ञादिधर्म इति पर्यवस्यति । अग्निः सूर्यः सोमः पर्जन्यश्चेत्यादयो यज्ञदेवताः । समिधो यज्ञाङ्गानीध्मानि । इध्ममेधःसमित्स्त्रियामिति कोशात् । ओषधयः व्रीह्यादियज्ञाङ्गद्रव्याणि च । अजायन्तेति योज्यम् । अत्र सोमादिति पञ्चम्या भगवत्कर्तृकपर्जन्यादिसृष्टौ सोमो वृष्ट्यादौ मधुररसपुष्टिकर्तृत्वेन निमित्तमात्रमिति सूचयति । एवं यज्ञतदङ्गद्रव्यादिसृष्टिमुक्त्वा सूक्ष्मसृष्टिमप्याह- – **पुमानिति** ।। ततश्चायं मन्त्रार्थः । पुमान् पूर्णत्वेन पुंनामको वासुदेवः । योषितायाम् । टापं चापि हलन्तानामिति वचनाद्योषितायामिति युक्तम् । स्वयोषिति रमायां रेतः सिञ्चति । गर्भमदधात् । तदनन्तरं पुरुषात् पूर्णषड्गुणात् बह्वीः बह्व्यः प्रजाः विरिञ्चाद्याः सम्प्रसूताः । अत्र विरिञ्चादिसर्वदेवतानां सत्त्वादिसूक्ष्मोपादानकदेहयोगलक्षणमुत्पन्नत्वमेव सम्प्रसूता इत्यनेनोच्यते । वासुदेवकर्तृकसृष्टिप्रसङ्गादिति बोध्यम् ।। ५ ।।

**आ.टी.**——तस्माद्धरेः ऋगादिवेदत्रयं शिक्षाद्यङ्गानि यज्ञाः पशुबन्धहीनाः क्रतवः पशुबन्धयुक्ताः दक्षिणास्यासंवत्सरादिरूपः कालः यजमानः तत्प्राकीप्या लोकाश्च जाताः । ते लोका दृशा यत्र लोके सोमोऽस्ति । यत्र च वायुः पवते वाति । यत्र च सूर्योऽस्ति ते लोकाः सोमवायुसूर्याधिष्ठिता इत्यर्थः । अङ्गसृष्टिमुक्त्वा मिथुनसृष्टिमाह— **पुमानिति** ।। पुमान्हरिर्योषितायां श्रियां रेतस्सिञ्चति । रेतोद्वारा बह्वीः प्रजाः ब्रह्माद्याः पुरुषाज्जाताः । "मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यह"मित्यादि गीतोक्तिः ।। ५ ।।

**गू.टी.**——अङ्गसृष्टिमुक्त्वा मिथुनसृष्टिमाह— **पुमानिति** ।। पूर्णत्वात्पुमान् हरिः स्वयोषितायां रमायां रेतः सिञ्चति ततो रेतसः तस्मात्पुरुषाद्धरेः बह्वीर्बह्वयः प्रजाः ब्रह्माद्याः प्रसूताः जाताः ।। ५ ।।

## भाष्यम्

**वासुदेवः पुमान्नामा पूर्णत्वात् स स्वयोषिति ।**
**रमायां गर्भमदधात् प्रजास्तस्मात् प्रजज्ञिरे ।। इति च ।।**

**व्या.टी.**——पुमान् रेतः सिञ्चतीत्यस्य प्रकृतसृष्ट्या सङ्गत्यभावप्रतीतिं निवारयन्नाह-— **वासुदेव इति** ।।

**ध.टि.**——**असङ्गतत्वप्रतीतिमिति** ।। अक्षरनामकभगवतः सकाशात्सृष्टेः प्रकृततया तस्या एव वक्तव्यत्वेन लौकिकस्त्रीपुरुषाभ्यां सृष्टिकथनस्यायुक्तत्वादिति भावः ।। **वासुदेव इतीति** ।। अत्र वासुदेवादिचतुरूपी भगवानित्यर्थः । योषितीत्यनेन "टापं चैव हलन्तानामि"त्युक्त्या योषिच्छब्दपर्यायो योषिताशब्द इत्युक्तं भवति । रमायां मायादिनाम्नां स्वयोषिती स्वभार्यायामित्यर्थः। रेतः सिञ्चतीत्यस्याभिप्रायो गर्भमदधादिति । प्रलये स्वोदरे निवेशितं जगत् सृष्टिकाले रमायां न्यधत्तेत्यर्थः । प्रजाः पुन्नामकब्रह्मपूर्वाः इति भाष्यार्थः ।।

**वामन.टी.**——एतदभिप्रायं वासुदेव इत्यादिब्रह्माण्डवचनेनैव प्रकाशयति ।

अत्र पुनर्विशेषो भगवतैवानुव्याख्यायां सुव्यक्तं व्याख्यातः ।

ततो जातः पुमान्नाम ब्रह्मास्यां वासुदेवतः ।।
सूत्रात्मा प्राणनामा च देव्यौ प्रकृतिमानिनी ।
ततो रूपमहंनाम ब्रह्मणोऽहंकृतिः शिवः ।।
ब्रह्मणो बुद्धिनाम्नोमा तत इन्द्रो मनोऽभिधः ।
स्कन्दश्च तत एवान्ये सर्वे देवाः प्रजज्ञिरे ।। इति ।।

**स.टी.**——तदभ्यधात्— **वासुदेव इति** ।।

**व.टी.**—— तस्यार्थो **वासुदेव इति** ।।

**श्री.टी.**——ननु भगवतोऽक्षरात्सृष्टिः प्रकृता सैव वक्तव्या पुमान्रेतः सिञ्चति योषितायामित्यादिना लौकिकस्त्रीषु पुरुषाभ्यां सृष्टिकथनमसङ्गतमित्यतः प्रमाणेनैव सङ्गततया व्याचष्टे — **वासुदेव इति** ।। वासुदेवादिचतूरूपी भगवानित्यर्थः । योषितीत्यनेन योषिच्छब्दपर्यायो योषिताशब्द इत्युक्तं भवति । रमायां मायादिनाम्न्यां स्वयोषिति स्वभार्यायामित्यर्थः । रेतः सिञ्चतीत्यस्याभिप्रायो गर्भमदधादिति । प्रजाः पुन्नामकब्रह्मपूर्वाः ।।

**उ.टी.**——नन्वत्र प्रसिद्धस्त्रीपुंप्रसङ्गेनाखिलप्रपञ्चोत्पत्तिरुच्यते । तच्च प्रत्यक्षादिबाधितमित्यतः प्रमाणेनैव व्याचष्टे— **वासुदेव इति** ।।

## उपनिषत्

**तस्मादृचः साम यजूंषि दीक्षा**
**यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।**
**संवत्सरश्च यजमानश्च लोकाः**
**सोमो यत्र पवते यत्र सूर्यः ।। ६ ।।**

**व्या.टि.**——क्रतवः पशुबन्धयुक्तः ।। ६ ।।

**ध.टि.**——ऋगादिशब्दैर्देवा अपि ग्राह्याः । सर्वे यज्ञाः देवर्षिपितृभूतमनुष्ययज्ञरूपाः पञ्चमहायज्ञाः । क्रतुशब्दस्य पौनरुक्त्यमाशंक्य पशुबन्धयुक्ता इति व्याख्यानं कृतम् । यत्र लोके सोमश्च पवते सूर्यश्च पवते । धातूनामनेकार्थत्वात्सव्यापारं कुरुते इति यावत् । यद्वा यत्र सोमः सूर्यश्च स्तः पवते वायुरिति शेषः ।। ६ ।।

**वामन.टी.**—वाग्विवृताश्च वेदा इति यदुक्तं तत्प्रपञ्चयति— **तस्मादृच इति**।। विष्णोरेव ह्यृगादिमन्त्राः तन्मूला दीक्षादयश्च प्रवृत्ताः संवत्सरादियज्ञकार्यः तत्कर्ता तत्फलं च तस्मादेव बभूवुः ।। ६ ।।

**न.टी.**——यज्ञाः प्रधानज्योतिष्टोमादयः । क्रतवश्चातुर्मास्याद्यङ्गयागाः पशुबन्धयुक्ताः ।। ६ ।।

**रा.खं.**——न केवलं प्रजाः अन्यदपीत्याह— **तस्मादिति** ।। पुरुषादित्यर्थः । ऋच इत्यादौ सम्प्रसूतपदानुषङ्गो यथायोगं ध्येयः । तत्र प्रसवोऽभिव्यक्तिः । यज्ञा अग्निहोत्रादयः । सर्वे क्रतवः सोमयागाः पशुसम्बद्धाः । अत्र ऋगादिशब्दैस्तदभिमानिनश्च ग्राह्याः । यजमानः यज्ञक्रतूनामनुष्ठाता सम्प्रसूत इत्यर्थः । लोका इत्युक्तं, ते के लोका इत्यत आह— सोमश्चन्द्रो यत्र पवते चरति, सूर्यो यत्र पवते ते लोका इत्यर्थः ।। ६ ।।

**स.टी.**——साध्याः—

ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च ।
सरस्वती सुपर्णी च वारुणी साध्यनामकाः ।। इत्युक्ताः ।। ६ ।।

**व.टी.**—आध्यात्मिकवस्तूनां सृष्टिरपि तस्मादेवेत्युच्यते— **सप्तप्राणा इत्यादिना** ।। ६ ।।

**श्री.टी.**——ऋगादिशब्दैर्देवता अपि ग्राह्याः । सर्वे यज्ञाः देवर्षिपितृभूतमनुष्ययज्ञरूपाः पञ्चमहायज्ञाः । क्रतवः पशुबन्धादियुक्ताः । यत्र येषु लोकेषु सोमः

पवते सूर्यश्च पवते । धातूनामनेकार्थत्वात् । स्वव्यापारं कुरुत इति यावत् । यद्वा यत्र सोमः सूर्यश्च स्तः पवते, वायुरिति शेषः ।।

**उ.टी.**—एवं तत्त्वसृष्टिकथनेनाङ्गसृष्टिकथनेन सूक्ष्मसृष्टिकथनेन च तथाक्षरात्पुरुषात्सोम्य भावाः प्रजायन्त इति वाक्योक्ता सृष्टिः प्रपञ्चिता । इदानीं प्रकारान्तरेणापि तां प्रपञ्चयति— **तस्मादिति** ।। पुरुषादित्यर्थः । पूर्वं वाग्विवृताश्च वेदा इत्यविभक्तानां वेदानामीश्वरादभिव्यक्तिरुक्ता । इदानीं विभक्तानां सृष्टिरुच्यत इति न पुनरुक्तिः । अत्र ऋगादीनां त्रयाणां ग्रहणं त्रेतायुगाभिप्रायेण । त्रेतायां स त्रिधाऽभवदित्युक्तेरिति ध्येयम् । ऋच इत्यादौ सम्प्रसूतपदं यथायोगं लिङ्गवचनव्यत्ययेनानुषञ्जनीयम् । ऋगादीनां प्रसूतत्वं नामाभिव्यक्तिः । दीक्षा दीनां तूत्पत्तिरिति विवेकः । यज्ञाः अग्निहोत्रादयः । सर्वे क्रतवः सोमयागाः । पशुबन्धाश्च । यद्यपि यज्ञक्रतुशब्दौ पर्यायौ । यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुरित्यमरोक्तेः । तथापि स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः इत्यैतरेयोपनिषदुक्तानां पञ्चविधयज्ञानां मध्ये अग्निहोत्रादयो यज्ञशब्देन गृहीताः । पशुयज्ञादिव्यक्तयस्तु क्रतव इत्यनेन । अन्यथा पौनरुक्त्यप्रसङ्गादिति बोध्यम् । यद्वा क्रीयते सोमो अत्रेति क्रतुः । क्रीणातेः डतुच् । एवं च क्रतुशब्दः ससोमकयागे वर्तत इति अमरटीकानुसारेण सोमयागाः क्रतवः । तदन्ये यज्ञा इत्यपौनरुक्त्यम् । वस्तुतस्तु क्रतवोऽग्निष्टोमाद्याः । यज्ञाः देवानुद्दिश्य द्रव्यत्यागः । "उद्दिश्य देवान् द्रव्याणां त्यागो यज्ञ इतीर्यत" इत्यभिधानात् । सामान्यविशेषज्ञत्वेन भेद इति गीताभाष्यटीकानुसारेणेति योज्यम् । अत्र ऋगादिशब्दैस्तदभिमानिनो देवा अपि ग्राह्याः । यजमानः यज्ञक्रतूनामनुष्ठाता । यत्र सोमोऽस्ति यत्र पवते वायुरिति शेषः । यत्र लोके सूर्योऽस्ति । ते लोकाः सम्प्रसूता इति योज्यम् । एतच्चोपलक्षणम् । अर्चिरादिमार्गेण ब्रह्मलोकं गच्छतां मार्गमध्ये गम्याः सूर्यचन्द्रवायुलोकादयः सर्वेऽपि ग्राह्या इति ज्ञेयम् ।। ६ ।।

**आ.टी.**—आदित्यत्वादिजातिभेदेन बहुधा विद्यमाना देवाश्च साध्या मनुष्या

वयांसि पक्षिणः गवादिपशवश्च जाताः । "भूतं भूताभिमानी चे"त्युक्तरीत्या चेतनाचेतनाश्च ग्राह्याः । अत्र प्रपञ्च्यप्रपञ्चकभावेन बाह्यमिथुनसृष्टिभेदेन वा कल्पभेदेन वा द्वारभेदेन रूपान्तरेण वा अपौनरुक्त्यं द्रष्टव्यम् ।।

**गू.टी.——**यज्ञतत्साधनादेः स्पष्टमुत्पत्तिमाह— **तस्मादिति** ।। ऋगादिवेदत्रयं शिक्षाविधिश्च, क्रतवः पशुबन्धयुक्ताः, अन्ये तु यज्ञाः, संवत्सरो वसन्तादि-लक्षणः कालः, यजमानो दीक्षितः, लोकाः तत्प्राप्याः, यत्र लोके सूर्यः प्रवर्तते यत्र लोके च सोमश्च काम्यकर्मिणां सोमाधिष्ठितस्वर्गः । निवृत्तकर्मिणां ज्ञानद्वारा सूर्याधिष्ठितोऽर्चिरादिलोकः । अत्रापि चेतनाचेतनं सर्वयज्ञसम्बन्धि जातमिति ज्ञेयम् ।।

## उपनिषत्

**तस्माच्च देवा बहुधा सम्प्रसूताः**
**साध्या मनुष्याः पशवो वयांसि ।**
**प्राणापानौ व्रीहियवौ तपश्च**
**श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ।। ७ ।।**

**ध.टि.——**तस्माच्च तस्मादेव पुंसः ब्रह्माण्डाद्बहिरुत्पन्ना ब्रह्माद्या देवाः साध्याश्च तदन्तर्बहुधा अंशेन सम्भूताः मनुष्याद्याश्च भूमौ तस्मादेव सम्भूता इत्यर्थः । यद्वा तस्माच्च तत्प्रेरणयैव इन्द्राद्या देवा भूमौ बहुधा अर्जुनादिरूपेण सम्भूता इत्यर्थः । वयांसि पक्षिणः । प्राणापानौ तदाद्याः पञ्चप्राणस्योत्पत्तिः वायुः प्राण इति पूर्वमङ्गादुक्ता । अत्र तु स्त्रियामुच्यते इति भेद इति ज्ञातव्यम् । यद्यपि बह्वीः प्रजाः देवा बहुधा सम्प्रसूता इत्युक्त्या प्राणस्योत्पत्तिः प्रागुक्तैव । तथापि सामान्येनैवोक्ता । अत्र तु विशिष्योच्यत इति भेदः । न"चैतस्माज्जायते प्राण" इति विशिष्योत्पत्तिरपि अयुक्तैवेति वाच्यम् । तस्य प्रतिज्ञावाक्यत्वेन तद्वाक्यप्रतिज्ञातोत्पत्तेरेवाङ्गात् स्त्रियां चोच्यमानत्वेनादोषात् ।। ७ ।।

**वामन.टी.**—देवाश्च पुनरपि तस्मादेव नानायोनिषु बहुधा सम्प्रसूताः । बहु-साधनेच्छात्वात् । बहुधा साधनं तु प्राणापानादिप्रवर्तनं, तपआदिजीव-धर्म-नियमनं च ।। ७ ।।

**रा.खं.**—तस्मात्पुरुषाद्योषिद्द्वारा देवा बहुधा सम्प्रसूताः । तथा साध्यादयोऽपि सम्प्रसूताः । वयांसि पक्षिणः तपश्च कृच्छ्रचान्द्रायणादि श्रद्धा आस्तिक्यबुद्धिः सत्यं यथार्थवचनम् । सम्प्रसूतपदस्य यथायोगमनुषङ्गस्सर्वत्र ज्ञेयः ।। ७ ।।

**श्री.टी.**—तस्माच्च तस्मादेव ब्रह्माण्डाद्बहिरुत्पन्ना ब्रह्माद्या देवाः साध्याश्च तदन्तर्बहुधा अंशेन सम्भूता मनुष्याद्याश्च भूमौ तस्मादेव सम्भूता इत्यर्थः । यद्वा तस्माच्च तत्प्रेरणयैवेन्द्राद्या देवा भूमौ बहुधा अर्जुनादिरूपेण सम्भूता इत्यर्थः । प्राणापानौ तदाद्या पञ्च प्राणस्योत्पत्तिः वायुः प्राण इति पूर्वमङ्गादुक्ता । अत्र तु स्त्रियामुच्यत इति भेद इत्यवगन्तव्यम् । अत एव मुख्यप्राणरूपपुत्रो-त्पत्तिकामः सन् लक्ष्म्यां रमत इति हेतोः अनकाममारेति विष्णोर्नाम ऐतरेयो-पनिषदि प्रसिद्धमित्यवगन्तव्यम् । यद्यपि बह्वीः प्रजा देवा बहुधा सम्प्रसूता इत्युक्त्या प्राणस्याप्युत्पत्तिरुक्तैव । तथापि सामान्येनैवोक्ताऽत्र तु विशिष्योच्यते । तच्चाधिकारिवर्गेषूत्तमत्वाभिप्रायेणेति द्रष्टव्यम् । नचैतस्मात्प्राण इति विशिष्योत्पत्ति-रप्युक्तैवेति वाच्यम् । तस्य प्रतिज्ञावाक्यत्वेन तद्वाक्यप्रतिज्ञातोत्पत्तेरेवात्राङ्गात्स्त्रियां चोच्यमानत्वेनादोषत्वात् ।। ७ ।।

**उ.टी.**—उक्तं सर्वमर्थं संक्षिप्याह— **तस्माच्चेति** ।। बहुधा सूक्ष्मदेहयोगेन स्थूलदेहयोगेन अङ्गजन्यदेहयोगेनेत्यादिबहुप्रकारेण देवाः तस्माच्च पुरुषादेव सम्प्रसूता इत्यन्वयः। साध्यास्तन्नामकगणदेवताः । वयांसि पक्षिणः । वयःपक्षिणि बाल्यादा-वित्यभिधानात् ।। **प्राणापानाविति** ।। उपलक्षणमेतत् । पञ्च प्राणा इत्यर्थः । व्रीहियवावित्युपलक्षणम् । सर्वौषधय इत्यर्थः ।। **तप इति** ।। कायिकवाचिक-मानसिकभेदेन त्रिविधं भगवद्गीतोक्तं तपः कृच्छ्रचान्द्रायणादिकं चेत्यर्थः । श्रद्धा आस्तिक्यबुद्धिः। सत्यं यथार्थवचनम् । ब्रह्मचर्यम्—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ।।

इति स्मृत्या ब्रह्मचर्यस्वरूपं बोध्यम् । विधिः विधानम् । विधिर्विधाने दैवे चेति कोशात् । अत्र सर्वत्र सम्प्रसूतपदं यथायोगं लिङ्गवचनव्यत्ययेनानुषञ्जनीयम् ।।

**आ.टी.**——प्राणायामहेतू प्राणापानौ । जाठराग्निसहायौ वायू वा । हविर्भूतौ व्रीहियवौ । तपः चान्द्रायणादिकायक्लेशः । सत्यं साधु हितम् । ब्रह्मचर्यं गुह्येन्द्रियनियमनम्, सन्ध्यादिविधिः ।। ७ ।।

**गू.टी.**——देवाश्च वसुरुद्रादित्यादिभेदाद्बहुधा जाताः । साध्या देवविशेषाः, श्रेयस्साधनशीला वा । पशवोऽजादयः, वयांसि कपिञ्जलादयः प्राणापानौ पूरण-रेचनाख्यौ व्रीहियवौ हविष्यसाधनभूतौ तप आलोचनं कृष्यादिर्वा । श्रद्धा कर्मादावास्तिक्यं, सत्यं यथार्थं भाषणं, यथार्थज्ञानपूर्वककर्माचरणं वा । ब्रह्मचर्यं गुह्येन्द्रियनियमनं, ब्रह्मपूजा वा। ध्यानादिविधिश्च । एवं मोक्षसाधनं च जातम् ।। ७ ।।

## उपनिषत्

**सप्त प्राणाः प्रभवन्ति तस्मा-**
**त्सप्तार्चिषः समिधः सप्त होमाः ।**
**इमे लोका येषु चरन्ति प्राणा**
**गुहाशयां निहितास्सप्त सप्त ।। ८ ।।**

**व्या.टी.**——नचैतस्माज्जायते प्राण इत्यनेन पुनरुक्तिः । सप्त प्राणा इत्यस्य अत्र स्त्रियामुत्पत्त्युक्तेः । समिधो विषयाः ।। ८ ।।

**ध.टि.**——सप्तप्राणा मनोबुद्धिसहायाः श्रोत्राद्याः सप्तज्ञानेन्द्रियाणि तस्मात्पुरुषाद्भगवतो भवन्ति । अत्र पौनरुक्त्यमाशंक्य परिहरति— **न चैतस्मादिति** ।। प्राण इत्यनेनेति इत्यादिवाक्यगतेन मनस्सर्वेन्द्रियाणि चेत्यनेनेत्यर्थः । यथाश्रुते एतस्माज्जायते प्राण इत्यस्य मुख्यप्राणोत्पत्तिपरत्वेन इन्द्रियोत्पत्तिपरत्वाभावेन तदंशेन पौनरुक्त्यप्रसक्तेः । नच मुख्यप्राणोत्पत्तिविषय एवानेन पौनरुक्त्यमाशंक्यत इति वाच्यम् । तथा सति सप्तप्राणा इत्यस्येन्द्रियोत्पत्तिविषयकत्वेन परिहारासङ्गतेरिति ध्येयम् । सप्तार्चिषः सप्तेन्द्रियजन्याः ज्ञानरूपा वृत्तयः । समिधो रूपाद्याः सप्त विषयाः । सप्त होमाः सप्तेन्द्रियाणां सप्त विषयैः सह होमाः । सम्बन्धाः सन्निकर्षाः । गुहाशयां गुहाशयायां बुद्धौ बुद्ध्यर्थं ज्ञानोत्पादनार्थमिति यावत् । ये प्रतिपुरुषशरीरं सप्त सप्त प्राणाः भगवता निहिताः स्थापिताः सन्ति । ते प्राणा येषु लोकेषु चरन्ति । ते लोका इन्द्रियाधिष्ठानभूताः गोलोकाश्च भवन्तीत्यर्थः।। ८ ।।

**वामन.टी.**—अथ ज्ञानेन्द्रियाणां तद्देवतादीनां च विशेषतो विष्णोरेव प्रभव इत्याह— **सप्तेति** ।। सप्त प्राणा ज्ञानेन्द्रियाणि तद्देवताश्चेति सिद्धम् ।। ८ ।।

**वा.टी.**——सप्त प्राणा इत्यत्र बुद्ध्या सह सप्त ज्ञानेन्द्रियाणि प्राणपदेनोच्यन्ते । एषां सप्त वृत्तयः ज्ञानोदयाय प्रवृत्तयः अर्थप्रकाशकत्वसाम्यादर्चिरूपत्वाच्चार्चिःपदेनोच्यन्ते । लोकपदेन 'लोकस्तु भुवने जने' इत्यनुशासनादिन्द्रियभूमिस्थानीयगोळका उच्यन्त इत्यर्थः । समिधः विषयाः । मित् मितिस्तया सहिताः समिध इति व्युत्पत्त्या तद्योग्यविषयाणां समित्पदवाच्यत्वमिति भावः । लौकिकसमिधामपि एतावत्परिमाणा एतावत्सङ्ख्याका इति मितिसहितत्वादेव समित्पदवाच्यत्वमिति ज्ञेयम् । हु दानादानयोरिति धातोरग्रावाहुतीनां दानरूपसम्बन्धो हि होम इत्युच्यते । अतोऽत्रापीन्द्रियाणां सम्बन्धो होम इति भावः । हृदयगुहायां मनोरूपेण शेत इति व्युत्पत्त्या गुहाशया बुद्धिः । मानसं ज्ञानमित्यर्थः । तस्यां गुहाशयायाम् । तादर्थ्ये चेयं सप्तमी । 'लोपः समाने' इति सूत्रादेकयकारलोप

इत्यर्थः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति प्राक् सामान्येनोक्त-दशेन्द्रियेषु परमोपकारित्वाज्ज्ञानेन्द्रियाणि पृथक्कृत्य कृतानीन्द्रियाणि तद्वृत्तीः, तत्स्थानानि गोळकानि, तद्विषयांस्तत्सम्बन्धांश्च सप्त सप्तधा विभज्य गुहाशयां निहितेति ज्ञानाख्यं तत्फलं चोक्त्वा सप्त सप्त निहिता इति प्रतिशरीरं निहितत्वोक्त्या च बहुधा प्रमेयविशेषस्य निरूपितत्वात्पुनरुक्तिशंकावसरोऽपि न । किन्तु 'संकोच-विस्तराभ्यां हि प्रवदन्ति मनीषिणः' इति वचनात्प्रपञ्च्यप्रपञ्चकभावलक्षणसङ्गत्या उत्खातांकुरस्य पुनः प्रतिरोपणवद्बहुफलवत्त्वेनावश्यकत्वात्प्रागुक्तसृष्टेरेव पुनः प्रपञ्चनम् । अतोऽतिचतुरा सेयमुपनिषदं व्याख्यातुर्भाष्यकारस्य व्याख्येति ज्ञेयम् ।। ८ ।।

**स.टी.**——प्राणा इन्द्रियाणि । अर्चिषः वृत्तयः समिधः विषयाः, होमाः सम्बन्धाः, लोकाः गोलकाः, गुहाशयां गुहाशयायां बुद्धौ 'समाने लोप' इति एकयकारलोपः । तदर्थं सप्त सप्त प्रतिपुरुषम् । निहिता गुहाशयां प्रतीतिर्वा । गुहायामाशयं प्रतीतिवा । आशयो बुद्धिः । निहितं गुहाविः, गुहास्वाततमितिवत्सप्तम्यर्थे प्रथमा । आशयामिति दैर्घ्यं त्ववधारणे । "दैर्घ्यं प्लुतं च हुंकारो बिन्दुरप्यवधारणे" इति शब्दनिर्णयात् । तथाच तत्त्वप्रदीपेऽभ्यधात्— **गुहाशयां निहिताः सप्त सप्तेति** ।। गुहाशयां बुद्धिर्निहित इत्यादि । गुहाशयामिति गतिं प्रति सप्त सप्तेति विशेषितत्वाद्गतिसाधनानीन्द्रियाणि सप्त । पञ्च तु कर्मेन्द्रियाणीति तद्विषयं द्वादशप्राणा इति वाक्यमिति न तद्विरोधः । अत एवासुसूत्रत् "सप्तमतेर्विशेषितत्वादि"ति । हस्तादयस्तु स्थितेतो नैवमिति । तदिदमापातत्वे सप्तार्चिष इत्यादि ।। ८ ।।

**न.टी.**——प्राणादयो पञ्चमनोबुद्धीतु द्वे इति सप्तप्राणाः । सप्तार्चिषः मनोवृत्तयः समिधो विषयाः होमाः इन्द्रियविषयसम्बन्धाः । प्राणाः इन्द्रियाणि एषु चरन्ति । त इमे सप्तलोकाः गोलकाः भगवदुत्पन्नाः ते प्रतिशरीरं सप्त सप्त गुहाशयां गुहा-शयायां बुद्धौ बुद्ध्यर्थं ज्ञानसाधनभूता इत्यर्थः । निहिताः भगवता स्थापिता वर्तन्ते । सर्वरूपाः सर्वदिङ्मनसाः । भगवतः सर्वकर्तृत्वमुपपादयति— **येनेति** ।।

येन कारणेन एष परमात्मा भूतैः जगत्कारणवस्तुभिः सह अन्तरात्मा कार्यजनकत्व-शक्तिप्रदत्वेन तदन्तर्यामी सन् तिष्ठति। तेन कारणेन भगवतः सर्वकर्तृत्वमुपपन्नम् ॥ ८ ॥

**रा.खं.**—सप्त प्राणाः घ्राणरसनचक्षुःश्रोत्रत्वङ्मनोबुद्धिरूपाणि सप्तेन्द्रियाणि प्रभवन्ति तस्मात्पुरुषाद्योषिद्द्वारेति भावः । तेन 'एतस्माज्जायते प्राणो मनः' इत्यादिना पूर्वत्रेन्द्रियाणां सृष्ट्युक्तावपीह योषिद्द्वारकसृष्ट्युक्तेर्न पुनरुक्तिरिति ज्ञेयम् । सप्तार्चिषस्सप्तेन्द्रियवृत्तयः । समिधः गन्धादिविषयाः । होमा इन्द्रियाणां विषयैः सम्बन्धास्सप्तेत्यर्थः । इमे लोकाः सप्त, ते के लोकाः इत्यत आह—येषु स्थित्वा प्राणास्सप्त चरन्ति । विषयैस्सह सम्बद्धा भवन्तीत्यर्थः । इन्द्रियगोलका इति यावत् । किमर्थं सृष्टाः प्राणा इत्यत आह— गुहाशयां गुहाशयायां, गुहा हृदयमाशयः स्थानं यस्यास्तस्यां बुद्धौ, निमित्तसप्तमी । प्राणिनां ज्ञानोत्पत्त्यर्थं प्रतिशरीरं सप्त सप्त प्राणा निहिताः सन्तो येषु चरन्ति ते लोका इत्यन्वयः । तथाच सूत्रं 'सप्त गतेर्विशेषितत्वाच्च' इति ॥ ८ ॥

**श्री.टी.**—मनः सर्वेन्द्रियाणीति सामान्येन सर्वेन्द्रियाणामुत्पत्तिरुक्ता तत्रेतरेन्द्रिया-पेक्षया ज्ञानेन्द्रियाणां श्रेष्ठत्वाभिप्रायेण विशिष्य तेषामुत्पत्तिमाह— **सप्तप्राणा इत्यादिना** ॥ मनोबुद्धिसहायाः घ्राणाद्याः सप्त प्राणाः सप्तज्ञानेन्द्रियाणि तस्मा-त्पुरुषाद्भगवतो भवन्ति । यथोक्तं सप्तगतेर्विशेषितत्वाच्चेति । सप्तार्चिषः सप्तेन्द्रियजन्या ज्ञानरूपा वृत्तयः । समिधः रूपाद्याः सप्तहोमाः सप्तेन्द्रियाणां सप्तविषयैः सह होमाः सम्बन्धाः सन्निकर्षाः गुहाशयां गुहाशयायां बुद्धौ बुद्ध्यर्थं ज्ञानोत्पादनार्थमिति यावत् । ये प्रतिपुरुषशरीरं सप्तसप्तप्राणा भगवता निहिताः स्थापिता भवन्ति । ते प्राणा येषु लोकेषु चरन्ति ते लोका इन्द्रियाधिष्ठानभूता गोलकाश्च भवन्तीत्यर्थः ॥ ८ ॥

**उ.टी.**—प्रतिशरीरमिन्द्रियादिसृष्टिरपि पुरुषादेव भवतीत्याह— **सप्त प्राणा इति** ॥ ततश्चायं मन्त्रार्थः—तस्मात्पुरुषात् सप्त प्राणाः ज्ञानेन्द्रियाणि

श्रोत्रस्पर्शनचक्षूरसनघ्राणमनोबुद्धिरूपाणि प्रभवन्ति उत्पद्यन्ते । अर्चिषो ज्ञानेन्द्रियवृत्तयः समिधो विषयाः होमाः विषयेन्द्रियसम्बन्धाः गुहाशयां गुहाशयायां स्वरूपज्ञानव्यावृत्त्यर्थं विशेषणं बुद्धौ । यथा "सीम्नि पुष्कलको हत" इत्यत्र निमित्तात्कर्मयोगेऽपीति वार्तिकेन फले सप्तमी । निमित्तं फलमिति व्याख्यानात् तथात्रापि बुद्धाविति निमित्तसप्तमी । प्राणाः निहिता इति कर्मकारकयोगसद्भावात् इयमेव च तादर्थ्यसप्तमीत्यन्यत्रोक्तम् । तथाच वृत्तिरूपबुद्ध्यर्थं प्रतिशरीरं सप्त सप्त निहिताः प्राणाः येषु गोलकेषु चरन्ति त इमे लोकाश्च तस्मात्प्रभवन्तीत्यन्वयः ।। ८ ।।

**आ.टी.**——सदा प्राण्यात्ममनोबुद्धियुताः श्रोत्रादीन्द्रियरूपाः सप्तार्चिषः इन्द्रियवृत्तयः समिधो विषयाः । होमास्तत्सम्बन्धाः इमेऽध्यक्षसिद्धाः लोकाः इन्द्रियगोलकाः गुहाशयां गुहाशयायां "बुद्धौ समाने लोप" इति आद्ययकारलोपः । बुद्ध्यर्थमुत्पादनाय प्रतिदेहं वर्तमानाः सप्त सप्त प्राणा येषु गोलकेषु स्थित्वा स्वस्वविषयं प्रति चरन्ति । ते गोलका इति पूर्वेणान्वयः ।। ८ ।।

**गू.टी.**——प्रतिशरीरं ज्ञानेन्द्रियसृष्टिमाह— **सप्तेति** ।। श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धिरूपाः सप्त प्राणाः इन्द्रियाणि तस्मात्प्रभवान्ति जायन्ते ज्ञानजननशक्ता वा सप्तार्चिषस्तद्वृत्तयः । सप्त समिधः । तद्विषयः । सप्तहोमाः तयोः सम्बन्धाः । गुहाशयां गुहाशयायां हृदयगुहास्थितबुद्धौ बुद्धिजननार्थं प्रतिशरीरं सप्त सप्त येषु गोलकेषु ईश्वरेण निहिताः स्थापिताः प्राणाः चरन्ति रश्मिद्वारा विषयान्प्रति धावन्ति त इमे प्रत्यक्षसिद्धगोलकाश्च सप्तापि जाता इति सम्बन्धः ।। ८ ।।

## भाष्यम्

**सप्तार्चिषो वृत्तयः । होमाः सम्बन्धाः । लोका गोलकाः । गुहाशयां बुद्धौ । 'लोपः समाने' इति सूत्रादेकयकारलोपः । प्रतिपुरुषं सप्त सप्त ।**

**व्या.टी.**——अप्रतीतेरर्चिर्होमलोकगुहाशयाशब्दानामर्थानाह— **सप्तेत्यादिना** ।। इन्द्रियवृत्तयः समिदाख्यविषयसम्बन्धाः । बुद्धौ बुद्ध्यर्थम् । सप्तमीत्वे गुहाशयायामिति स्यादित्यत आह— **लोप इति** ।। समाने वर्णे परतः पूर्वस्य लोपो भवति । सप्त सप्तेति वीप्सायाम् । अन्वयं प्रदर्शयति— **प्रतिपुरुषमिति** ।। बुद्ध्यर्थं प्रतिपुरुषं सप्त सप्त निहिता इत्यन्वयः ।।

**घ.टि.**——इन्द्रियवृत्तय इन्द्रियजन्यज्ञानानि । उपनिषद्गतसमिच्छब्दव्याख्यानमुपलक्षणया भाष्यकाराभिप्रेतमित्यभिप्रेत्याह— **समिदाख्यविषयसम्बन्धा इति** ।। अनेन समिधोरूपाद्याविषया इति व्याख्यातं भवति । गोलका इत्यस्येन्द्रियाधिष्ठानानीति व्याख्या द्रष्टव्या । तादर्थ्यसप्तमीमभिप्रेत्याह— **बुद्धौ बुद्ध्यर्थमिति** ।। बुद्ध्युत्पादनार्थमित्यर्थः ।। **पूर्वस्येति** ।। पूर्वस्य वर्णस्य क्वचिल्लोपो भवति । न सर्वत्रेति सूत्रार्थः । अन्यथा "गुहाशयायैव न देहमानिन" इत्यादिप्रयोगानुपपत्तिरिति ज्ञातव्यम् । प्रतिपुरुषं प्रतिदेहम् । प्रतिपुरुषमनुगतिसूचनं वीप्सायाः प्रयोजनमवधेयम् ।।

**वामन.टी.**—अर्चिरादयः क इत्याकांक्षायामाह— **सप्तार्चिष इत्यादि भाष्येण** ।। प्राणानामर्चिषो वृत्तयः । प्रकाशविशेषा इत्यर्थः । को वा तेषां विषयसम्बन्धाः इन्द्रियगोलकाः शष्कुल्यादयः । गुहाशयायामित्यत्र पूर्वयकारलोपात् गुहाशयामिति भवति । 'समाने लोप' इति सूत्रात् ।।

**व.टी.**——तद्व्याचष्टे— **सप्तार्चिष इत्यादिना** ।। गुहाशयां निहितास्सप्त सप्तेत्येतद्व्याचष्टे— **गुहाशयामिति** ।। तर्हि गुहाशयायामिति स्यात् । ननु गुहाशयामितीति तत्राह— **लोप इति** ।।

**श्री.टी.**——अप्रतीत्यन्यथाप्रतीतिपरिहारायार्चिर्होमलोकगुहाशयशब्दार्थमाह— **सप्तार्चिष इत्यादिना** ।। वृत्तयः सप्तेन्द्रियजन्या वृत्तयो ज्ञानानि । रूपाद्या विषयाः समिध इत्यपि द्रष्टव्यम् । सम्बन्धाः सप्तेन्द्रियाणां सप्तविषयैः सह

सन्निकर्षा इत्यर्थः । गोलकाः इन्द्रियाधिष्ठानभूता इत्यर्थः । बुद्धौ विषयसप्तमीयम्। बुद्धिविषये बुद्ध्युत्पादनार्थमित्यर्थः । ननु गुहाशयामिति द्वितीयाश्रवणाद्बुद्धिमिति व्याख्येयं बुद्धाविति कथमुक्तम् । नचेयं सप्तमीति वाच्यम् । तथात्वे गुहाशयायामिति स्यादिति चेत् । सत्यम् । एकयकारलोपाङ्गीकारात् । किमत्र नियामकमिति चेत् । महाव्याकरणसूत्रमेवेत्याह— **लोपः समान इति** ।। समाने वर्णे परतः पूर्वस्य वर्णस्य क्वचिल्लोपो भवति न सर्वत्रेति सूत्रार्थः । अन्यथा गुहाशयायैव न देहमानिन इत्यादिप्रयोगानुपपत्तिरिति ज्ञातव्यम् । सप्त सप्तेति द्विर्वचनं चतुर्दश-सङ्ख्यालाभायेति प्रतीतिवारणाय वीप्सेति सूचयन् तदभिप्रायं दर्शयति— **प्रति-पुरुषमिति** ।। प्रतिपुरुषदेहम् । तथाच प्रतिपुरुषमनुगतिसूचनार्थं सप्त सप्तेति द्विर्वचनमित्यर्थः ।।

**उ.टी.—**अत्रार्चिर्हेतिः शिखा स्त्रियामिति कोशानुसारेण अर्चिषो ज्वाला इति नार्थः । प्रमाणविरोधादिति भावेनार्चिःपदमनूद्य व्याचष्टे— **सप्तार्चिषो वृत्तय इति** ।। इन्द्रियजन्यज्ञानानीत्यर्थः । प्रकृतसङ्गततया होमा इत्येतदनूद्य व्याचष्टे-— **होमाः सम्बन्धा इति** ।। विषयेन्द्रियसम्बन्धा इत्यर्थः । प्रसिद्धार्थत्वप्रतीति-निरासाय लोका इत्येतदनूद्य व्याचष्टे— **लोका गोलका इति** ।। इन्द्रियगोलका इत्यर्थः । गुहाहृदयमाशय आश्रयो यस्यासौ तथाभूतमिति कृते हृदयाश्रितत्वं प्रतीयते । तदनुकूलं विशेष्यमाह— **गुहाशयायां बुद्धाविति** ।। ननु द्वितीयान्तस्य विशेषणस्य सप्तम्यन्तं विशेष्यं कथमुक्तम् । गुहाशयायामिति च कथमुक्तमित्यत आह— **लोपः समान इति** ।। पूर्वशब्दस्य तत्समाने शब्दे परे लोपो भवतीति सूत्रार्थः ।। **एकयकारलोप इति** ।। आकारसहितपूर्वयकारलोप इत्यर्थः । तथाच गुहाशयामिति न द्वितीयान्तम् । किन्तु गुहाशयायामिति सप्तम्यन्तमेव । तत्र याशब्दलोपेन गुहाशयामिति प्रयुज्यते । अतो नोक्तदोष इति भावः । सप्तसप्ते-त्यनयोर्विशेषणविशेष्यभावे कृते इन्द्रियाणां सङ्ख्याधिक्यं प्रतीयते । तच्च सप्त प्राणा इत्यनेन विरुद्धमित्यत आह— **प्रतिपुरुषं सप्तसप्तेति** ।। सप्त सप्तेति वीप्सायां द्विर्वचनम् । प्रतिपुरुषमिति चाध्याहार्यमिति भावः ।।

## उपनिषत्

**अतः समुद्रा गिरयश्च सर्वेऽ-**
**स्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च सर्वा ओषधयो रसाश्च**
**येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ।। ९ ।।**

**व्या.टी.**——सर्वरूपाः सर्वदिङ्मुखाः ।। ९ ।।

**घ.टि.**——सर्वे समुद्रा गिरयश्च अतो अस्मात्पुरुषाद्भवन्तीति सम्बन्धः । सर्वरूपाः सर्व दिङ्मुखाः सिन्धवो गङ्गाद्या नद्यः अस्मादेतत्प्रेरणयैव स्यन्दन्ते । स्यन्दु प्रस्रवणे । प्रवाहवन्त्यो भवन्तीत्यर्थः । येनाक्षरेण प्रेरितः । एषोऽन्तरात्मा जीवो भूतैर्युक्तो भौतिकशरीरबद्धस्सन् तिष्ठति । अतश्चास्मादेवाक्षरात्पुरुषादेव ओषध्यादयो भवन्तीत्यर्थः । येन पुंरूपेण योषिद्द्वारा सृष्टैर्भूतैः सहान्तरात्मा अन्तर्यामिरूपं तिष्ठति । स पुमानेतत्सर्वं ससर्जेति वा । येन कारणेनैषः परमात्मा भूतैर्जगत्कारणवस्तुभिः सहान्तरात्मा तत्तत्कार्यजनकशक्तिप्रदत्वेन तदन्तर्यामी सन् तिष्ठति तेन कारणेन भगवतः कर्तृत्वमिति वा ।। ९ ।।

**वामन.टी.**——सर्वभूतानां चलनादिशक्तिरपि तन्नियतैवेत्याह— **अत इति** ।। अतो विष्णोरेव समुद्रादीनां तत्तच्छक्तिः प्रवर्तते । येनैष परमात्मा सर्वभूतानामन्तर्नियामकत्वेन तिष्ठति ।। ९ ।।

**रा.खं.**——अतोऽस्मात्पुरुषात्प्रभवन्तीत्यनुषङ्गः । सर्वरूपाः सर्वदिङ्मुखाः सिन्धवो नद्यः, अस्मात्पुरुषात्स्यन्दन्ते प्रवहन्ति, रसाश्च प्रभवन्तीति योज्यम् । येन पुरुषेण योषिद्द्वारा सृष्टैर्भूतैस्सहान्तरात्मा अन्तर्यामिरूपी तिष्ठते तिष्ठति स पुमानेतत्सर्वं ससर्जेत्यर्थः ।। ९ ।।

**श्री.टी.**——सर्वे समुद्रा गिरयश्च । अतोऽस्मात्पुरुषाद्भवन्तीति सम्बन्धः ।

सर्वरूपाः प्राच्यादि नानादिगभिमुखगमनस्वभावाः सिन्धवो गङ्गाद्या नद्योऽस्मादेतत्प्रेरणयैव स्यन्दन्ते । 'स्यन्दू प्रश्रवणे' प्रवाहवत्यो भवन्तीत्यर्थः । येनाक्षरेण प्रेरित एषोऽन्तरात्मा जीवो भूतैर्युक्तो भौतिकशरीरबद्धः सन् तिष्ठते । अतश्चास्मादेवाक्षरात्पुरुषादोषध्यादयो भवन्तीत्यर्थः । यद्वा एष अन्तरात्मा जीवोऽपि येनाक्षरपुरुषेणोत्पद्यत इत्यर्थः । किं घटादिवत्स्वरूपेणैवोत्पद्यते नेत्युक्तम् । भूतैस्तिष्ठत इति । भूतकार्यैर्देहादिभिर्युक्ततया तिष्ठत इत्यर्थः । तथाच देहसम्बन्ध एवोत्पत्तिरिति भावः । हीति प्रमाणप्रसिद्धिं दर्शयति ।। ९ ।।

**उ.टी.**—तस्मादग्निः समिध इति प्रागुक्तां सृष्टिं प्रपञ्चयितुं पृथिव्यां समुद्रादिसृष्टिरपि पुरुषादेव भवतीत्याह— **अत इति** ।। सर्वे समुद्राः गिरयश्च अतः पुरुषात्प्रभवन्तीत्यनुषञ्जनीयम् । सर्वरूपाः नानादिगभिमुखाः सिन्धवो नद्यः । सिन्धुः समुद्रे नद्यां चेति कोशात् । अस्मात्स्यन्दन्ते । 'स्यन्दू प्रस्रवणे' स्रवन्तीत्यर्थः । सर्वा ओषधयः फलपाकान्ताः व्रीह्यादयः । रसाश्च मधुरादयः शृङ्गारादयश्च । अतश्च पुरुषादेव प्रभवन्तीति योज्यम् । ननु भगवानेव चेतनाचेतनानां सर्वेषामपि स्रष्टेति अतीतमन्त्रैरभिहितम् । तत्कथम् । विरिञ्चादीनां केषाञ्चिदेव भगवानुत्पादकः, अन्येषां तु विरिञ्चाद्या एवोत्पादका इत्यन्यत्रोक्तत्वादित्यत आह— **येनेति** ।। येन कारणेन एष भगवानन्तरात्मा अन्तर्यामी सन् भूतैर्व्यत्ययेन सप्तम्यर्थे तृतीया विरिञ्चादिसर्वभूतेषु । तिष्ठते तिष्ठति । तेन कारणेन विरिञ्चादिसृष्टानामपि तदन्तर्यामिभगवतैव सृष्टत्वात्पुरुषादेव प्रभवन्तीति यत्तत्र प्रागुक्तं तत्सर्वमुपपन्नमिति भावः ।। ९ ।।

**आ.टी.**——अतो हरेः सर्वे समुद्रादयश्च जाताः । सर्वरूपाः सर्वदिङ्मुखाः सिन्धवो नद्यश्चास्मादेव जाताः स्यन्दन्ते । सर्वा नदीमात्रकादय ओषधयस्तद्रसाश्चास्मादेव जाताः । येन कारणेन एष हरिः अन्तरात्मा भूतस्तिष्ठति तेन तदधिष्ठानद्वारा सर्वे तज्जन्या एवेत्यर्थः ।। ९ ।।

**गू.टी.**——अत एव समुद्रादयोऽपि जाताः । सर्वरूपाः सर्वदिङ्मुखाः सिन्धवो

नद्यश्च स्यन्दन्ते चलन्ति । एष भूतः भूतसमूहः येन जातः येन च तिष्ठति स्थितिं प्राप्नोति । स एवान्तरात्मा अन्तःस्थितः सन्ननादिकर्ता ।। ९ ।।

## उपनिषत्

**पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ।**
**एतद् यो वेद निहितं गुहायां**
**सोऽविद्याग्रन्थिं विकिरति ह सोम्य ।। १० ।।**

**।। इति तृतीयः खण्डः ।।**

**व्या.टी.**—सृष्टिकर्मज्ञानादेर्भगवतो नित्यत्वशंकां निवारयंस्तस्य तदैक्यमाह- – **पुरुष इति** ।। विश्वं सर्वं इदमित्युक्तं विशदयतोक्तम् ।। **विश्वं कर्म तप इति** ।। १० ।।

**ध.टि.**—**सृष्टिकर्मज्ञानादेरिति** ।। अक्षरनामकस्य पुरुषस्य यज्जगत्सर्जनादिरूपं कर्मोक्तं यच्च तपसा चीयत इत्यादिना ज्ञानादिकमुक्तं तस्य सर्वस्य सृष्टिकर्म-ज्ञानादेरित्यर्थः । "पुरुष एवेदं विश्वमि"त्यत्र विश्वं जगदित्यन्यथाप्रतीतिवारणाय व्याचष्टे— **विश्वं सर्वमिति** ।। भगवतो यत्कर्म जगत्सर्जनादिरूपा परिस्पन्दरूपा वा चेष्टा यच्च तपो ज्ञानम् । उपलक्षणमेतत् । द्युतिबलादेर्धर्मजातस्य । तथाच कर्मतपःप्रभृतीदं विश्वं सर्वमपि परामृतं ब्रह्म । मुक्तनियामकत्वेन देहहान्यादि-रहितत्वेन च परामृतशब्दवाच्यः पूर्णगुणत्वाद्ब्रह्मशब्दवाच्यश्च पुरुषो भगवानेवे-त्यर्थः । एवंवेत्तुः फलमाह— **एतदिति** ।। हे सौम्य सोमपानार्हेति शौनकसम्बो-धनम् । एतदुक्तप्रकारेण समस्तधर्मात्यन्ताभिन्नं यथा सुदीप्तादित्यादिनोक्तमाहात्म्यो-पेतमक्षरनामकं परं ब्रह्म गुहायां हृदयगुहायां दहराकाशस्थितं वेद अपरोक्षतो जानाति स अविद्याग्रन्थिं लिङ्गशरीरं विकिरति परित्यजति मुक्तो भवतीत्यर्थः । हेत्यनेन भिद्यते हृदयग्रन्थिरित्यादि प्रमाणप्रसिद्धिं दर्शयति ।। १० ।।

**वामन.टी.**—ननु किमिदमीश्वरस्य सृष्ट्यादि नित्यमाहोस्विदनित्यम् । नित्यं

चेदौपाधिकं स्वाभाविकं वा । औपाधिकं चेत् पराधीनत्वादमुख्यं स्वाभाविकं चेत्किमत्र प्रमाणमित्याकांक्षायामाह— **पुरुष एवेति** ।। १० ।।

**न.टी.**——भगवत्कर्मज्ञानादेर्भगवता भिन्नत्वशंकां निवारयन् तस्य तदैक्यमाह-— **पुरुष इति** ।। इदमित्युक्तं विशदयतोक्तम् । विश्वं सर्वं कर्म जगत्सर्जनादि-व्यापारः । तपः ज्ञानं च । परामृतं ब्रह्मपुरुषः । परामत ब्रह्माख्यः परमपुरुषो विष्णुरेव । कविरिति ज्ञानेन शिथिलीकरोति ।। १० ।।

**रा.खं.**——तपसा ज्ञानेन चीयते सम्बद्ध्यत इत्यत्र ब्रह्मणो ज्ञानस्य च भेदः प्रतीयते । अक्षरात्सम्भवतीह विश्वमित्यनेनोक्तसृष्टिक्रियया तदाक्षिप्तबलादिना च लोक इव भेदः प्रतीयते । तां भेदप्रतीतिं निवारयन् भगवदभेदं ज्ञानादेराह-— **पुरुष एवेत्यादिना** ।। कर्म सृष्टिक्रिया । तपो ज्ञानम् । उपलक्षणमेतत् द्युतिबलादेर्धर्मजातस्य । तथा च कर्मतपःप्रभृतीदं विश्वं सर्वं धर्मजातं परामृतं परामृताख्यो ब्रह्मशब्दितः पुरुष एव भगवानेव, नतु धर्मधर्मिणोर्भेदो भगवति मन्तव्य इति । तदाह सूत्रं 'प्रतिषेधाच्च' इति । 'एकमेवाद्वितीयं' 'नेह नानास्ति किञ्चन' इति भेदस्य निषेधादित्यर्थः । एतज्ज्ञानिनः फलमाह— **एतद्यो वेदेति**।। एतत्स्रष्टृत्वादिगुणैस्सविशेषाभिन्नतया विशिष्टं, सर्वप्राणिहृदयगुहायां निहितं ब्रह्म योऽधिकारी वेद सोऽविद्याग्रन्थिं प्रकृतिबन्धं विकिरति कॄ विक्षेपे, विक्षिपति निरस्यति, मुक्तो भवतीत्यर्थः । सोम्य सोमपानार्हेति शौनकसम्बोधनम् । हेति हर्षे ।। १० ।।

**स.टी.**——यत्परमैश्वरस्य कर्म जगत्सर्जनरूपाच्चैषा यच्च तपःपदाभिधं ज्ञानं तत्सर्वं लोकवद्भगवत इत्याशंक्य निषेधति— **पुरुष एवेति** ।। भगवतः कर्मचेष्टा तपो ज्ञानं च परामृतब्रह्माख्याः पुरुषो भगवानेव । एतद्धृदयगुहायां निहितं यो वेद स इह जन्मनि हे सोम्याविद्याग्रन्थिं विकिरति विनाशयति ।।

**व.टी.**——एतच्च जगत्स्रष्टृत्वादिकं भगवतः स्वरूपेव नतु ततोऽभिन्नमित्यु-च्यते— **पुरुष एवेदमिति** ।। १० ।।

**श्री.टी.**—अक्षरनामकस्य पुरुषस्य यज्जगत्सर्जनादिरूपं कर्मोक्तं यच्च तपसा चीयत इत्यादिना ज्ञानमुक्तं तथा सर्वजगत्सृष्ट्युक्त्या बलचिकीर्षाप्रयत्नादयो धर्मा अप्युक्तप्रायाः । तत्र कर्मज्ञानादिधर्मैर्भगवतो भेदशंकां वारयंस्तेषां तदैक्यमाह — **पुरुष एवेदमिति** ।। भगवतो यत्कर्म जगत्सर्जनादिरूपा परिस्पन्दरूपा वा। चेष्टा यच्च तपः ज्ञानं यच्चेदं प्रमाणप्रमितं बलचिकीर्षाप्रयत्नादिधर्मजातं तद्विश्वं सर्वमपि परामृतं ब्रह्म मुक्तनियामकत्वेन स्वातन्त्र्येण निमित्तेन देहहान्यादि-रहितत्वेन च परामृतत्वादिशब्दवाच्यः पूर्णगुणत्वाद्ब्रह्मशब्दवाच्यः पुरुषो भगवानेवेत्यर्थः । तथाच कर्मादिधर्मात्यन्ताभिन्न एव भगवान्विशेषबलेनैव तद्वानि-त्युच्यत इति भावः । एवंवेत्तुः फलमाह— **एतदिति** ।। हे सोम्य योऽधिकारी एतदुक्तप्रकारेण समस्तधर्मात्यन्ताभिन्नं यथा सुदीप्तादित्यादिनोक्तमहिमोपेतं वाक्षरनामकं परं ब्रह्म गुहायां हृदयगुहायां दहराकाशे स्थितं वेद अपरोक्षतो जानाति सोऽविद्याग्रन्थिं लिङ्गशरीरं विकिरति परित्यजति मुक्तो भवतीत्यर्थः । हेत्यनेन भिद्यते हृदयग्रन्थिरित्यादिप्रमाणप्रसिद्धिं दर्शयति ।। १० ।।

**उ.टी.**—ननु तथाक्षरात्सम्भवतीह विश्वमित्यादिना तत्र तत्र भगवतः सृष्टिकर्तृत्वमुक्तम् । तेन सर्जनक्रियायाः भगवद्भिन्नत्वं प्राप्तम् । क्रियातत्कर्त्रोर्भेदस्यैव लोके दृष्टत्वात् । एवं तपसा चीयत इति सम्बन्धोक्त्या ज्ञानस्य ब्रह्मभिन्नत्वं प्राप्तम् । तपःशब्देन ज्ञानग्रहणात् । सम्बन्धस्य च भेदव्याप्तत्वात् । नच तद्युक्तम् । ब्रह्मक्रियाज्ञानयोर्ब्रह्मात्यन्ताभिन्नत्वादित्यत आह— **पुरुष एवेति** ।। १० ।।

ततश्चायं मन्त्रार्थः—विश्वं सर्वं भगवतः कर्म सर्जनादिक्रिया चेष्टा । तपो ज्ञानं च । परामृतं नित्यमुक्तं ब्रह्म । परामृतब्रह्माख्यं इति यावत् । पुरुषो भगवानेव। भगवत्क्रियादिकं सर्वं भगवदत्यन्ताभिन्नमिति यावत् । उक्तार्थे तात्पर्यद्योतनाय एतद्वेत्तुः फलमाह— **एतद्यो वेदेति** ।। हे सोम्य गुहायां हृदयगुहायाम् । निहितं एतत् सृष्ट्यादिक्रियया ज्ञानादिगुणेन च अत्यन्ताभिन्नं सर्वकर्तृत्वादिलक्षणं च ब्रह्म वेद गुरुमुखाच्छृणोति । सः अविद्याग्रन्थिं भावरूपाज्ञानबन्धम् । विकिरति

कॄ विक्षेपे, विक्षिपति शिथिलीकरोतीति यावत् । तदुक्तम्—ज्ञानेन च तदज्ञानमित्यत्र प्रथमज्ञानं परोक्षमिति गीताभाष्यव्याख्यानावसरे प्रमेयदीपिकायां परोक्षज्ञानमविद्यां शिथिलयतीति । श्रुत्वा मत्वा तथा ध्यात्वेति सूत्रभाष्यव्याख्यानावसरे तत्त्वप्रकाशिकायां च श्रुत्वा तदज्ञानं पराणुद्येति । शृणुयाद्यावदज्ञानमित्याद्यागमे चायमेवार्थोऽवगम्यते । अत्र प्रमेयदीपिकादावविद्यां शिथिलयतीति यदविद्या-शिथिलीकरणमुक्तं यच्च पराणुद्येत्युक्तं तदविद्याग्रन्थेः शिथिलीकरणाभिप्रायेण । तेनात्राविद्याग्रन्थिमिति पदं सार्थकमिति बोध्यम् । अत्रोपनिषदि यद्गुहानिहितमित्या-दिनान्तर्यामिभगवदुपासनं तत्र तत्रोक्तं तत् अन्तरुपासकाभिप्रायेण । अन्येषां तु सर्वेषां अन्तर्यामिभगवज्ज्ञानमावश्यकं किञ्चिदुपासनं च । यथोक्तम्—येषां बहिरुपासनेन मोक्षस्तेषामपि हृद्युपासनं किञ्चित्कार्यमेवेति । एवं सर्वत्रापि भगवन्महिमोक्तिस्तदुपासनयोग्यानां तदुपासार्थम् । अन्येषां तु तज्ज्ञानार्थम् । यथोक्तम्—ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणेति ।। १० ।।

**आ.टी.**——भगवतो गुणकर्मज्ञानादेर्धर्मस्य तद्भिन्नत्वादिशंकां निवारयन् तदैक्यमाह-– **पुरुष इति** ।। इदं विश्वं सर्वं पुरुष एव । तस्यैव विवरणं सर्वसृष्ट्यादिकर्म । सर्वं तदीयं तपआदिकं परामृतं अत्यन्ताविनाशि ब्रह्मैव तदभिन्नमेवेति । हे सोम्य हृद्गुहायां निहितमीदृशं ब्रह्म योऽपरोक्षतो वेत्ति सोऽविद्याग्रन्थिमज्ञानादिरूपं ग्रन्थिं तन्निमित्तं वा कर्मसमुदायं विकिरति । कॄ विक्षेपे । स्ववैरिदैत्येषु क्षिपति, तदसम्बद्धो भवतीत्यर्थः ।। १० ।।

**गू.टी.**——सृष्टिकर्मज्ञानादेर्भगवतो भिन्नत्वशंकां निवारयन् तस्य तदैक्यमाह–– **पुरुष इति** ।। भगवतो यत्कर्म जननादिचेष्टा यच्च तपो ज्ञानं तत् इदं विश्वं सर्वं परामृतब्रह्माख्यः पुरुषो भगवानेव । हरेः सृष्ट्यादिकर्तृत्ववेत्तुः फलमाह–– **एतदिति** ।। हृदयगुहायां निहितं ब्रह्म यो वेत्ति सोऽविद्याग्रन्थिमविद्याबन्धं इह लोके क्षिपति । हे सोम्याऽविद्यां त्यक्त्वा मुक्तो भवतीत्यर्थः ।। १० ।।

**इति तृतीयखण्डमन्त्रार्थः**

**भाष्यम्**

**भगवतः कर्म चेष्टा तपो ज्ञानं च परामृतब्रह्माख्यः पुरुषो भगवानेव ।**

**यैषा चेष्टा भगवतो यच्च ज्ञानं परात्मनः ।**

**तत्सर्वं भगवानेव ये च धर्मा बलादयः ।। इति च ।।**

**'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिः ।**

**व्या.टी.**—पुरुष एवेदं विश्वं कर्मेत्यत्रेदं विश्वं जगत् तत्कर्मादि च ब्रह्मेति प्रतीयते तां निवारयंस्तदर्थमाह— **भगवत इति** ।। भगवच्चेष्टादेस्तत्स्वरूपत्वं समाख्याश्रुतिस्मृतिभ्यां समर्थयते— **यैषेति** ।। **स्वाभाविकीति** ।।

**ध.टि.**—कर्मादीत्यादि पदेन तप आदिकं ग्राह्यम् ।। **प्रतीयत इति** ।। पुरुषो जीवः संसारी परामृतं मुक्तजातम् । कर्म तप आद्युपलक्षितमिदं सर्वं विश्वं ब्रह्मैवेति परकृतव्याख्यारीत्येत्यर्थः ।। **तां निवारयन्निति** ।। अन्यथा "द्वा सुपर्णा" "मुक्तानां परमा गतिः" "अमृतस्यैष सेतुः" "स इदं सर्वमसृजते"त्यादिप्रमाणविरोधः स्यादित्याशयः ।। **भगवत इतीति** ।। कर्मेत्यनूद्य चेष्टेति व्याख्यानं जगत्सर्जनादिरूपा परिस्पन्दरूपा च क्रियेत्यर्थः । तप इत्यनूद्य ज्ञानमिति व्याख्यातम् । परामृतं ब्रह्म पुरुष एक एवेत्यन्वयमभिप्रेत्य विशेषणविशेष्यभावोपपत्त्यर्थं परामृतब्रह्माख्यस्तदुभयशब्दवाच्य इत्युक्तमिति भाष्यार्थः ।। **यैषेतीति** ।। सर्वमिति विश्वशब्दार्थः । पुरुष एवेत्यस्यार्थो भगवानेवेति । ये च धर्मा बलादय इति प्रमाणप्रमितवस्तुवाचीदंशब्दव्याख्यानमित्यवगन्तव्यम् ।। **स्वाभाविकीति** ।। अत्र ज्ञानबलाभ्यां सहिता क्रिया ज्ञानबलक्रिया । स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः ।।

**वामन.टी.**—एतद्वाक्यार्थं भगवतः कर्मेत्यादिना विवृणोति । यदीदमीश्वरस्य सुखचेष्टाख्यं सृष्ट्यादिकर्म तपःशब्दितनिश्चयज्ञानं च तदिदं विश्वमपि परामृतब्रह्माख्यपुरुषो भगवानेव अतो नेदमनित्यं नाप्यौपाधिकम् । किन्तु स्वाभाविकमेवेत् र्थः । अस्मिन्नर्थेऽपि ब्रह्माण्डवचनमाह— **यैषां चेष्टेति** ।। ययैत-

त्स्वाभाविकभक्तिज्ञानाद्यनन्तगुणवद्ब्रह्म स्वहृदिस्थो वेद सोऽनाद्यविद्या-त्मकं संसारग्रन्थिमिह ब्रह्मणि प्रविश्य विकरोति विनाशयतीत्यर्थः ।।

**स.टी.**——सस्मरे स्मृतिरत्रार्थे श्रुतिश्चाभिशुश्रुवे— **यैषेति स्वाभाविकीति** ।।

**व.टी.**——तद्व्याचष्टे— **भगवत इति** ।। अत्र चेष्टाज्ञानशब्दौ कर्मतपःशब्द-व्याख्यानरूपौ । अत्रैव स्मृतिसंवादमाह— **य एष इति** ।। क्रीडादीनां भगवदभेदे श्रुतिं चाह— **स्वाभाविकीति** ।।

**श्री.टी.**——पुरुष एवेदमिति वाक्यं परेणेत्थं व्याख्यातम् । पुरुषो जीवः संसारी परामृतं मुक्तजातं कर्म तप आद्युपलक्षितमिदं सर्वं विश्वं ब्रह्मैवेति। तदसत् । "द्वा सुपर्णा" "मुक्तानां परमा गतिः" "अमृतस्यैष सेतुः" "स इदं सर्वमसृजते"त्यादि प्रमाणविरोधादित्याशयेनाक्षरनामकस्य भगवतो यज्जगत्सर्जनादिरूपं कर्मोक्तं यच्च तपसा चीयत इत्यादिना ज्ञानमुक्तं तथा सर्वजगत्सृष्ट्युक्त्या बलचिकीर्षाप्रयत्नादयो धर्मा अप्युक्तप्रायाः । तत्र कर्मतपआदिधर्मैर्भगवतो भेदप्रतीतिवारणायेदं वाक्यमित्यभिप्रेत्य सम्यग्व्याचष्टे— **भगवत इत्यादिना** ।। कर्मेत्यनूद्य चेष्टेति व्याख्यातं जगत्सर्जनादिरूपपरिस्पन्दरूपा च क्रियेत्यर्थः । तप इत्यनूद्य ज्ञानमिति व्याख्यातम् । परामृतं ब्रह्म पुरुष एवेत्यन्वयमभिप्रेत्य विशेषणविशेष्यभावोपपत्त्यर्थं परामृतब्रह्मा-ख्यस्तदुभयशब्दवाच्य इत्युक्तम् । अत्रार्थे प्रमाणमाह— **यैषेति** ।। सर्वमिति विश्वशब्दार्थः । पुरुष एवेत्यस्यार्थो भगवानेवेति । ये च धर्मा बलादय इति प्रमाणप्रमितवस्तुवाचीदंशब्दव्याख्यानमित्यवगन्तव्यम् । नन्वनित्यानां क्रियाणां नित्येन भगवता कथमभेदः स्यात् । विरुद्धधर्माधिकरणत्वस्य भावभेदा-व्यभिचारित्वात् । अन्यथा जगति भेदाभावप्रसङ्गादिति चेत् । अत्र ब्रूमः । भगवद्वृत्तिक्रियाणामपि नित्यत्वमेवाङ्गीकृतमिति विरुद्धधर्माधिकरणत्वस्यासिद्धिः । तथाहि भगवत्सम्बन्धिसर्जनादिक्रियाणामनित्यत्वं किं प्रमाणबलादङ्गीक्रियते उत नित्यत्वे बाधकसद्भावात् । अथवा तत्साधकप्रमाणाभावात् । नाद्यः । भगवत-स्तत्क्रियायाश्चाप्रत्यक्षत्वेन तदनित्यत्वस्य प्रत्यक्षेण प्रत्येतुमशक्यत्वात् । लिङ्गा-

भावेनानुमानानुपपत्तेः । क्रियात्वं लिङ्गमिति चेन्न । तत्किं धात्वर्थत्वं परिस्पन्दत्वं वा । नाद्यः । ज्ञानेच्छाप्रयत्नैः सत्तया च व्यभिचारात् । न द्वितीयः । ज्ञानादिसर्व-क्रियाणामपरिस्पन्दरूपत्वेन भागासिद्धत्वात् । ईश्वरपरिस्पन्दपक्षीकारे त्वाश्रया-सिद्धिस्तार्किकेण तस्यानङ्गीकृतत्वात् । क्रियात्वस्यानित्यत्वेनाविनावृत्तौ बाधका-भावादप्रयोजकता च । कार्यत्वेन सोपाधिकत्वं च । तस्यापि साधने बाधः । परास्य शक्तिरिति श्रुत्या क्रियायाः स्वाभाविकत्वोक्त्याऽकार्यत्वावगमात् । असत्यावरणे प्रागूर्ध्वं चानुपलम्भो लिङ्गमिति चेत् । अनुपलम्भः किं प्रत्यक्षेणोत प्रमाणमात्रेण । नाद्यः । योग्यतयानुपलम्भविशेषणेऽसिद्धिः । भगवत्क्रियाया अयोग्यत्वात् । अन्यथा गगनादौ व्यभिचारात् । द्वितीये त्वसिद्धिः । आगमादिनो-पलब्धेः । असत्यावरणे कदाचिदेवोपलम्भो लिङ्गमिति चेन्न । वर्णनित्यत्व-वादेऽनैकान्त्यात् । नित्यापि भगवत्क्रिया कदाचिदभिव्यक्तेः कदाचिदेवोपलभ्यत इत्यङ्गीकारे बाधकाभावेनाप्रयोजकत्वाच्च । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रिय-ग्राह्यत्वं लिङ्गमिति चेन्न । वर्णनित्यत्ववादे वर्णेषु व्यभिचारात् । विशेष्यासिद्धेश्च बाह्येन्द्रियग्राह्यसजातीयत्वस्य विवक्षितत्वान्न विशेष्यासिद्धिरिति चेन्न । परमाण्वादौ व्यभिचारात् । नाप्यागमाद्भगवत्क्रियाऽनित्यतावगतिः । स हि भगवत्क्रियाऽनित्ये-त्येवमात्मको वा स्यात्स इमांल्लोकानसृजतेत्येवमात्मको वा । आद्यस्तु नोपलभ्यते । द्वितीयस्तु स ऐक्षत सोऽकामयतेत्यादिना तुल्यः । तथाचासृजतेति कादाचित्कता-वगत्या क्रियाया अनित्यत्वे ज्ञानेच्छयोरपि तत्कुतो न भवेदिति । अस्तु तर्हि नित्यत्वे बाधकसद्भावादिति द्वितीयः पक्षः । तथाहि—यदि सृष्टिसमयेऽपि संहारक्रिया विद्येत तदा तथैव श्रुत्यादावुपलभ्येत जननविनाशौ च घटस्य युगपत्प्रसज्जेयाताम् । किञ्च यदीश्वरक्रिया नित्या स्यात्तर्हि क्रियायाः संयोगविभागौ प्रत्यनपेक्षकारणत्वात्तदुत्पत्तिसातत्यप्रसङ्गः । अपि चेश्वरक्रिया संयोगविभागौ करोति न वा । नेति पक्षे क्रियात्वं व्याहन्येत । संयोगविभागौ प्रत्यनपेक्ष-कारणत्वस्यैव कर्मत्वात् । आद्ये किं स्वसत्तोत्तरक्षणे करोति उत विरम्य । नाद्यः । स्वसत्ताया इदंप्रथमताभावेन संयोगादिविशेषस्य विवक्षितक्षणादपि

पूर्वमुत्पत्तिप्रसङ्गात् । न द्वितीयः । पूर्वोत्तरावस्थयोरविशिष्टायाः क्रियाया विरम्यव्यापारायोगात् । उत्तरसंयोगस्य कर्मविनाशकत्वेन कृतसंयोगस्य कर्मणोऽवस्थानानुपपत्तेश्चेति चेत् । उच्यते । तत्तत्कार्यजननशक्तिरेव क्रियेत्युच्यते नान्या । तथाच शक्तिरूपेणानित्या सा सर्जनादिक्रिया यदा व्यज्यते तदा व्यवहारालम्बनं तत्तत्कार्यजननी च भवतीत्यङ्गीकारात् । तत्र यत्तावदुक्तं यदि सृष्टिसमयेऽपि संहारक्रिया स्यात्तदा तथा व्यवह्रियेतेति । तदसत् । व्यक्तिरूपेणैव व्यवहारालम्बनत्वात् । यदपि जननविनाशौ युगपत्स्यातामिति । तदपि व्यक्त्यवस्थाया एव शक्तेर्जनकत्वादनुपपन्नम् । यच्च क्रियाया नित्यत्वसंयोगविभागोत्पत्तिसातत्यप्रसञ्जनं तदप्येवमेव परिहृतम् । व्यक्त्यवस्थोपेताया एव क्रियायाः संयोगादिजनकत्वाङ्गीकारात्तस्याश्च सर्वदाऽभावात् । किञ्चैवं पटसामग्र्याः पटोत्पत्तावनपेक्षत्वात्पटोत्पत्तिसातत्यं स्यात् । ननु सामग्री तमेव पटं जनयेदुत पटान्तरम् । नाद्यः । प्रागभावस्यापि सामग्रीविनष्टत्वात् । तस्य च पटोत्पत्त्यविनष्टत्वेन सामग्र्या विकलत्वात् । न द्वितीयः । पूर्वपटेन प्रतिबद्धत्वात् । तत्कथं पटोत्पत्तिसातत्यापादनमिति चेत् । सत्यम् । सममेत्प्रकृतेऽपि क्रियायामपीति । यदपीश्वरक्रियासंयोगविभागौ करोति नवेति पृष्टम् । तत्र करोतीति ब्रूमः । कुर्वन्ती च विरम्यैव । नच तदनुपपत्तिः । व्यक्त्यविशिष्टत्वात् । नच कृतसंयोगस्य कर्मणो व्यवस्थानानुपपत्तिः । अनित्यक्रियासु तद्व्यवस्थोपपत्तेः । ननु केयं शक्तेर्व्यक्तिर्नाम । न तावत्प्रतीतिः । तस्या ईश्वरापेक्षया नित्यसिद्धत्वेनोक्तदोषानुवृत्तेः । परापेक्षया कदाप्यभावात् । भावेऽपि कार्योत्पादस्य तदनपेक्षत्वादिति चेत् । मैवम् । व्यक्तिशब्देन शक्तेरेव सृष्ट्यादिकालविशेषसम्बन्धरूपावस्थाविशेषस्य विवक्षितत्वात् । ननु क्रियायाः शक्तिव्यक्तिरूपे परस्परं भिन्ने उताभिन्ने । आद्ये शक्तिरेव नित्या व्यक्तिस्त्वनित्येत्यापन्नम् । शक्तेः सार्वकालिकत्वाद्व्यक्तेश्च कादाचित्कत्वात् । तच्चानिष्टं भवताम् । द्वितीये त्वनिवृत्तः । सदाव्यक्तव्यवहारप्रसङ्ग इति चेन्न । अभिन्ने एव शक्तिव्यक्ती । नचोक्तदोषः । अभेदे भेदकार्यनिर्वाहस्य विशेषस्याङ्गीकारेण तद्बलात्सदा व्यवहारप्रसङ्गाभावोपपत्तेः । ननु यदि शक्तिव्यक्तिधर्मभूतः

सविशेषविशेषिभ्यां शक्तिव्यक्तिभ्यां भिन्नस्तदा शक्तिव्यक्त्योरपि भेदः स्याद्धर्मत्वाविशेषात् । यदि चाभिन्नस्तदा पुनर्व्यवहारादिसांकर्यमिति चेन्न । अभिन्न एवायं विशेषः शक्तिर्व्यक्तिभ्याम् । नचोक्तदोषः । अभिन्नोऽपि पुनर्विशेषवानङ्गीक्रियते। नचानवस्था । स्वनिर्वाहकत्वाङ्गीकारात् । एवं शक्तिव्यक्तिरूपतामङ्गीकृत्य समाधानं परेणाप्यवश्यं वाच्यम् । अन्यथा परमेश्वरस्य ज्ञानेच्छाप्रयत्नलक्षणसंहारव्यापारस्य नित्यत्वात्सदा संहारक्रिया स्यादित्यतिप्रसङ्गस्तन्मतेऽपि समानः । ननु नित्यमपि परमेश्वरेच्छादिकं सहकारिसद्भाव एव कार्यकारीति चेन्न । असहकारिणामपि नित्यत्वात्परमेश्वरेच्छायत्तत्वाच्च । ननु नेच्छामात्रं संहारादिकारणं किन्तु सञ्जिहीर्षादिकमेवेति चेत् । तत्किं नित्येच्छादितो व्यतिरिक्तमेव सञ्जिहीर्षादिकमुत संहारादिविशेषणविशिष्टं तदेव । नाद्यः । अनभ्युपगमात् । अभ्युपगमेऽपि वा तत एव संहारादिसिद्धाविच्छादिकल्पनावैयर्थ्याच्च । न द्वितीयः । सति संहारादौ सञ्जिहीर्षादिकं ततः संहारादिरिति परस्पराश्रयप्रसङ्गात्। तस्माच्छक्तिव्यक्तिरूपता सर्वथानुसरणीया । सा च समा क्रियायामपीति । नन्वस्त्वेवं सर्जनादिरूपायाः क्रियायाः नित्यत्वेन भगवदात्मकत्वं परिस्पन्दरूपायास्तु क्रियायाः कथं भगवदात्मकत्वमुक्तं युज्यते । परिस्पन्दरूपक्रियाया एवेश्वरेऽभावादिति चेन्न । परिस्पन्दाभावे प्रमाणाभावात् । परममहत्परिमाणमस्तीति चेत् । अणुमध्यमपरिमाणाभ्यां सत्प्रतिपक्षत्वात् । नच तेन स्त इति स्वरूपासिद्धिरिति वाच्यम्। परममहत्त्वेऽपि तथा वक्तुं शक्यत्वेन तथाप्यसिद्धेः । नच महतो महीयानिति श्रुत्या ममतात्सिद्धिरिति वाच्यम् । अणोरणीयानिति श्रुत्या ममापि तत्सिद्धेः । अणोरणीयस्त्वमप्रत्यक्षत्वोपलक्षणम् । नाणुपरिमाणसाधकमिति चेत् तर्हि महतो महत्त्वमपि परमपूज्यत्वमेवेति न महत्परिमाणसाधकमिति वक्तुं शक्यत्वात् । ननु विरोधेन परिमाणद्वयाङ्गीकारायोगान्महत्परिमाणमेवाङ्गीकृत्याणोरणीयस्त्वमप्रत्यक्षत्वोपलक्षकत्वमित्येव वाच्यमिति चेत्तर्हि प्रथमप्राप्तत्वादणुत्वमेव ग्राह्यम्। तथाच महतो महत्त्वं परमपूज्यत्वमित्येवाङ्गीक्रियताम् । अङ्गीकृत्य चेदमुदितम्। वस्तुगत्या लोकदृष्ट्या विरुद्धानामपि धर्माणां भगवति समावेशस्य यस्मि"न्विरुद्ध-

गतयोऽप्यनिशं पतन्ती"त्यादिप्रमाणप्रमितत्वेन भगवति युगपदणुत्वमहत्त्वयोरविरुद्धत्वात् । यथोक्तमनुव्याख्याने—

अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ।।
ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्व.... ।।

अविरोधेन गोविन्दे सन्तीति । तस्माद्भगवति परिस्पन्दरूपक्रियाया अपि सत्त्वेन तस्याश्च नित्यत्वाच्छक्तिव्यक्त्यङ्गीकारेणातिप्रसङ्गपरिहारसम्भवाद्युक्तं तस्या भगवदभेदकथनमित्यास्तां विस्तरः । उक्तं चैतत्सर्वमनुव्याख्याने लिङ्गपादे—

अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता ।
इति चेत्सविशेषोऽपि क्रियाशक्त्यात्मना स्थिरः ।।
शक्तिता व्यक्तिता चेति विशेषोऽपि विशेषवान् ।
अभिन्नोऽपि............................ ।। इति ।।

नन्वेवं भगवतोऽन्यत्र घटादावपि क्रियायाः नित्यत्वमङ्गीक्रियताम् । शक्तिव्यक्तिस्वीकारेण सकलदोषपरिहारादिति चेत् । सत्यमङ्गीकुर्मो यदि तन्नित्यतायां प्रमाणं स्यात् । सति निर्बाधप्रमाणे तद्विपरीतेषु च व्यवहारेषु सत्सु तदन्यथानुपपत्त्या कल्पनैषा प्रभवति । नच घटादिक्रियाया नित्यत्वे निर्बाधं प्रमाणमस्ति । अस्ति च भगवत्क्रियाया नित्यत्वे तदित्याह— **स्वाभाविकीति**।। ज्ञानबलाभ्यां सहिता क्रिया । स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः । तथाच नित्यत्वसिद्धिरिति भावः । एतेन नित्यत्वसाधकप्रमाणाभावात्क्रियाया अनित्यत्वमिति तृतीयः पक्षोऽप्यपास्तो वेदितव्यः । "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतेरेव साधिकायाः सत्त्वात् । यथोक्तमनुव्याख्याने—"क्रियादिश्च स्वभाव इति हि श्रुतिरि"ति ।

**उ.टी.**—अत्र विश्वं कर्मपुरुष एवेति सर्वकर्मणः पुरुषैक्यमुच्यते । एवं विश्वं तपः पुरुष एवेति सर्वतपसस्तदैक्यमुच्यते । तदुभयमयुक्तम् । देवदत्तादिनिष्ठ-

कर्मतपसां ब्रह्मैक्याभावादित्यतः सम्बन्धिप्रदर्शनपूर्वकं कर्मपदं तावदनूद्य व्याचष्टे-— **भगवत इति** ।। एवं तपः कृच्छ्रादिकर्म चेत्यभिधानोक्तं तपो ब्रह्मणि प्रमाणबाधितम् । तत्कथं तस्य तदैक्यमुच्यत इत्यतः तपःपदमनूद्य व्याचष्टे-- - **तपो ज्ञानं चेति** ।। ननु कर्म तपश्च पुरुष एवेत्युक्तमयुक्तम् । प्रसिद्धपुरुष-तादात्म्याभावादित्यतः पुरुषं विशिनष्टि— **परामृतब्रह्माख्यः पुरुष इति** ।। अनेन परामृतं नित्यमुक्तं यद्‌ब्रह्म स पुरुष इति योजना सूचिता । परामृतब्रह्माख्य इति तु फलितार्थकथनमिति ज्ञातव्यम् । एवं विशेषणविशेष्यभावान्वये सति पर्यवसितमर्थमाह— **भगवानेवेति** ।। भगवत्क्रियाज्ञानयोस्तदैक्ये श्रुतिस्मृती पठति— **यैषेति** ।। **स्वाभाविकीति च** ।। ननु क्रियायाः सादिविनाशित्वात्कथं ब्रह्मैक्यमिति चेत् । उच्यते । नात्र क्रिया परिस्पन्दः किन्तु कार्यानुकूलशक्तिरेव । एतच्च लिङ्गपादसुधायां स्पष्टम् । तथाच शक्तेरनादिनित्यत्वान्न कश्चिद्दोष इति ।। **येन धर्मा बलादय इति** ।। तथाच मन्त्रे कर्मतपःशब्दाभ्यां सर्वेऽपि भगवद्धर्मा उपलक्षणीया इति भावः ।।

**इति तृतीयखण्डभाष्यार्थः**

# अथ चतुर्थः खण्डः

## उपनिषत्

**आविः सन्निहितं गुहाचरं नाम महत् पदम् ।**
**अत्रैतत् सर्वमर्पितमेजत् प्राणन्निमिषच्च यत् ।। १ ।।**

**व्या.टि.**——आविरित्यादिनाप्युपदेशप्रकार एवोच्यते । पद्यते प्राप्यत इति पदम् । एजत् चेष्टमानं । प्राणत् जीवत् । निमिषत् अक्षिपक्ष्मचलनवत् ।। १ ।।

**ध.टि.**——।। **आविरित्यादिनापीति** ।। आविः प्रकटं यथा भवति तथा वैकुण्ठादिस्थानत्रये सम्यङ्निहितम् । जीवहृद्गुहायां चरतीति गुहाचरम् । महत् बहिरपि व्याप्तं पदं मुक्तस्य सर्वस्य प्रसिद्धिद्योतकम् । नामेत्यव्ययम् । यदेजत्प्राणन्निमिषच्च एतत्सर्वमत्र हरावर्पितं तदाधारतया तिष्ठतीत्यर्थः ।। १ ।।

**वामन.टी.**—यत्र सर्वजीवानां हृदयगुहायामाविर्भावाय प्रतिचक्षणाय सन्निहितं वैष्णवं महत्पदं अस्मिन्नेतज्जगत्सर्वमर्पितम् । एजत् तिर्यग्जातं प्राणादेवासुरं निमिषत् स्थावरम् । चशब्दाज्जडं च ।। १ ।।

**न.टी.**——प्रकारान्तरेण भगवत्तत्त्वमुपदिशति— **आविरिति** ।। गुहाचरं ब्रह्मादिसर्वहृदयगुहायां स्वेच्छया चरतीति गुहाचरम् । आविः सन्निहितं आविर्भूतत्वेन स्थितम् । एतन्नाम प्रसिद्धम् । महत् श्रेष्ठम् । पद्यते पाप्यत इति पदम् । मुमुक्षुप्राप्यम् । एजत् चेष्टमानं । प्राणत् जीवनवत् । निमिषत् अक्षिपक्ष्मपादवत् ।। १ ।।

**रा.खं.**——पुनर्भगवतो महिमान्तरमुपदिष्टवानङ्गिराः शौनकं प्रतीत्याह वेदपुरुषः-– **आविरित्यादिना** ।। आविर्नित्याभिव्यक्तस्वरूपम् । व्याप्तत्वात्सर्वसन्निहितम् । गुहाचरं हृदयगुहायां चरतीति गुहाचरम् । पद्यते प्राप्यत इति पदम् । महदुत्तमं प्राप्यं नाम प्रसिद्धम्, उक्तगुणत्वेन प्रसिद्धमित्यर्थः । अत्र आविरादिगुणयुक्ते

भगवति एतत्सर्वमर्पितमाश्रितम् । तत्सर्वं किमित्यत आह— **एजदिति** ।। एजृ कम्पने, सामान्यचेष्टोपेतम् । प्राणद्विशेषचेष्टायुक्तम् । निमिषत् चक्षुषी निमील्य स्थितम्, जाग्रत्स्वप्नसुषुप्त्याद्यवस्थोपेतं, यदेतज्जगज्ञानथ जानासि तत्तत्सर्वमत्रार्पितमित्यर्थः ।। १ ।।

**स.टी.**—आविरित्यादिनाप्युपदेशप्रकार एवोच्यते । आविः प्रकाशमानसन्निहितम्। प्राप्यत इति पदम् । एजच्चेष्टमानम् । प्राणत् जीवत् । निमिषत् अक्षिपक्ष्म-चलनवत् ।। १ ।।

**श्री.टी.**—पुनरपि शिष्यान्प्रतिगुरूपदेशप्रकार एवोच्यते— **आविरित्यादिना**।। आविः प्रकटं यथा भवति तथा वैकुण्ठादिस्थानत्रये सम्यङ्निहितं जीवगुहायां चरतीति गुहाचरं महत् बहिरपि व्याप्तम् । पद्यत इति पदं प्राप्यम् । यद्वा महत्पदं महाप्राप्यं प्रधानप्राप्यं अर्चिरादिसाधारण्यप्रतीतिवारणायेदं विशेषणम् । उक्तस्य सर्वस्य प्रसिद्धिद्योतकं नामेत्यव्ययम् । यदेजत् चेष्टमानं प्राणत् जीवनकृत् निमिषत् अक्षिपक्ष्मचलनवत् इत्येतत्सर्वं अत्र हरौ समर्पितं तदाधारतया तिष्ठतीत्यर्थः ।। १ ।।

**उ.टी.**—नन्वस्तु ब्रह्म जगज्जन्मादिकारणमिति । अस्तु च जगत्स्रष्टृत्वादि-विशिष्टब्रह्मज्ञानमविद्याग्रन्थिं विकिरतीति । तथापि ब्रह्मज्ञानार्थितां प्राप्तैरस्माभिः किं कर्तव्यमिति शिष्यैः पृष्टेन गुरुणा ब्रह्मज्ञानार्थं युष्माभिस्तच्छ्रवणादिकं कर्तव्यमित्युपदेष्टुं उत्तरो मन्त्रसन्दर्भ उक्तः । तत्र तावदविद्याशिथिलीभावफलकत्वा-द्गुणविशेषविशिष्टब्रह्मश्रवणं कर्तव्यमिति गुरुः शिष्यान्प्रत्याह— **आविरित्यादिना मन्त्रद्वयेन** ।। यद्गुहाचरं हृदयगतं ब्रह्म । आविः नित्याभिव्यक्तस्वरूपम् । सन्निहितं सर्वजीवानां समीपवर्ति । महत् उत्तमम् । पदं पद्यते प्राप्यत एतदिति पदम् । सुषुप्तप्राप्यं मुक्तप्राप्यं वा । एतत्सर्वं प्रमाणसिद्धमिति दर्शयितुं नामेत्युक्तम्। अत्र एवम्भूतगुणके तस्मिन्नन्तर्यामिणि । एजत् 'एजृ कम्पने' सकलकर्मेन्द्रिय-व्यापारवत् । प्राणत् श्वासादिव्यापारवत् । निमिषत् अक्षिपक्ष्मव्यापारवत् ।

उपलक्षणमेतत् । सर्वज्ञानेन्द्रियव्यापारवत् । जागरादिसर्वव्यापाराणामन्तर्याम्यधीनत्वं ज्ञापयितुं त्रिविधोक्तिः । एवम्भूतं यज्जीवजातम् । एतत्सर्वमर्पितमाश्रितम् ।। १ ।।

**आ.टी.**——"अवस्थितेरिति काशकृत्स्न" इत्युक्तं सर्वाधारत्वमाह— **आविरिति** ।। यद्धृद्गुहान्परं तत्स्थितं ज्ञानिनं प्रति आविः प्राकट्येन सन्निहितं महनीयं प्राप्यं चात्रास्मिन्ब्रह्मणि एतत्सर्वमर्पितं स्थितं तत्स्थितं एतदेवाह— एजत् चेष्टमानं प्राणत् जीवत् यच्च निमिषत् अक्षिपक्ष्मचलनवत् इत्यादि सर्वधर्मविशिष्टधर्म्याधारमित्यर्थः ।। १ ।।

**गू.टी.**——महिमान्तरमाह— **आविरित्यादिना** ।। गुहाचरं नाम गुहास्थितनामकं महत् महनीयं पद्यत इति पदम् । महद्भिः पद्यत इति वा आविः प्रकटम् । सन्निहितं सर्वत्र यद्ब्रह्म अत्र एतत्सर्वं जगदर्पितं स्थितम् । कीदृशं । एजत् चेष्टमानं प्राणत् जीवत् यच्च निमिषत् अक्षिपक्ष्मचलनवत् ।। १ ।।

## उपनिषत्

**एतज्ज्ञानथ सदसद्वरेण्यं**
**परं विज्ञानाद् यद्वरिष्ठं प्रजानाम् ।**
**यदर्चिमद् यदणुभ्योऽणु च**
**यस्मिंल्लोका निहिता लोकिनश्च ।। २ ।।**

**व्या.टि.**——सदसद्वरेण्यं कार्यकारणाभ्यां श्रेष्ठम् । प्रजानां च वरिष्ठम् ।। २ ।।

**ध.टि.**——एतत्सदसद्वरेण्यं कार्यकारणाभ्यां श्रेष्ठम् । मूर्तामूर्तप्रपञ्चाभिमानिदेवैर्वरणीयमिति वा जानथ । यद्विज्ञानात् विज्ञानतत्त्वाभिमानिविरिञ्चात्परमुत्तमम् । प्रजानां वरिष्ठमतिशयेनोत्तमम् । यदर्चिमत् अर्चिष्मत्कान्तिमत् । यदणुभ्योऽणु परमसूक्ष्मभूतं शश्वदेकप्रकारम् । अणुभूतमित्येकं पदं वा । भूतं भूतानीति वा । लोका भूरादयो लोकिनस्तत्रत्या जनाश्च यस्मिन्निहिताः ।। २ ।।

**वामन.टी.**—एतत्सर्वाधारं विष्णुपदं जानथ ।। २ ।।

**न.टी.**—सदसद्वरेण्यं कार्यकारणाभ्यां श्रेष्ठम् । प्रजानां च वरिष्ठम् । विज्ञानात् विज्ञानतत्त्वाभिमानिविरिञ्चाद्वरिष्ठम् ।। २ ।।

**रा.खं.**—पुनः किं रूपं ब्रह्मेत्यत आह— **सदसदिति** ।। तदक्षरं सदसद्भ्यां मूर्तामूर्ताभ्यां, कार्यकारणाभ्यां वा वरेण्यं श्रेष्ठं, वृञ एण्यप्रत्ययः । विज्ञानाच्चतुर्मुखात् परमुत्तमं, "विज्ञानशक्तिरहमासमनन्तशक्ते"रित्यादेः । प्रजानां वरिष्ठं श्रेष्ठम् । यदर्चिमदर्चिष्मत्, यच्चाणुभ्योऽणु च, यस्मिन् लोका लोकिनो लोकस्था जना लोकाभिमानिनो वा निहिताः तदेतदुक्तगुणविशिष्टमक्षरं ब्रह्मेत्यर्थः ।। २ ।।

**श्री.टी.**—एतत्सदसद्वरेण्यं कार्यकारणाभ्यां श्रेष्ठं मूर्तामूर्तप्रपञ्चाभिमानिदेवैर्वरणीयमिति वा जानथ । यद्विज्ञानाद्विज्ञानशब्दवाच्यमहत्तत्वाभिमानितया मुख्यविज्ञानशब्दवाच्याद्ब्रह्मणश्चतुर्मुखात्परं उत्तमं प्रजानां वरिष्ठं अतिशयेनोत्तमम् । यदर्चिमत् अर्चिष्मत् कान्तिमत् यदणुभ्योऽणु परमसूक्ष्मम् । लोका भूरादयः । लोकिनस्तत्रत्या जनाश्च । यस्मिन्निहितास्तदेतदक्षरनामकं ब्रह्मैव ।। २ ।।

**उ.टी.**—यच्च सदसद्वरेण्यं सदसद्भ्यां मूर्तामूर्ताभ्यां कार्यकारणाभ्यां वा वरेण्यं श्रेष्ठम् । यच्च विज्ञानात्परम् । यच्च प्रजानां वरिष्ठं अतिशयेन सर्वप्रजोत्तमम् । यच्चार्चिमत् कान्तिमत् । यच्चाणुभ्योऽप्यतिशयेनाणुभूतम् । यस्मिंश्च लोकाः पृथिव्यादयः लोकिनः लोकपालाश्च निहिताः स्थिताः । एतत् एवंभूतगुणकं अन्तर्यामिरूपं जानथ । छान्दसोऽयं प्रयोगः । जानीत शृणुतेति मन्त्रद्वयार्थः । नन्वत्र परमित्येतत् वरिष्ठमित्यनेन गतार्थम् । किञ्च विज्ञानादित्येतत्प्रजानां वरिष्ठमित्यत्र न हेतुः ।। २ ।।

**आ.टी.**—सदसद्वरेण्यं कार्यकारणश्रेष्ठं विज्ञानाच्चतुर्मुखात्परं प्रजानां च वरिष्ठं जानीत । अर्चिष्मत् प्रकाशयुतम् । अणुभ्योऽप्यणुभूतम् । यस्मिन्ब्रह्मणि लोका भूरादयः लोकिनस्तदधिपतयश्च स्थिताः ।। २ ।।

**गू.टी.**——विज्ञानाद्ब्रह्मणो विरिञ्चात् परं प्रजानां वरिष्ठं च यत् तदेतज्ज्ञानथ । यच्चार्चिमत् ज्ञानरूपार्चिर्युक्तं अणुजीवेभ्योऽप्युणुभूतम् । यस्मिंल्लोका लोकाधिपाश्च तिष्ठन्ति ।। २ ।।

## भाष्यम्

**विज्ञानाद्ब्रह्मणः परम्। 'नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः' इति भागवते ।**

**व्या.टी.**——परं विज्ञानादित्युक्तं विज्ञानं किमिति न ज्ञायतेऽतस्तदाह— **विज्ञानादिति** ।। ब्रह्मणो विज्ञानशब्दवाच्यत्वं हरेस्तत्परत्वं च कुतः सिद्धमित्यतस्तत्र प्रमाणसम्मतिमाह— **नाभीति** ।।

**ध.टि.**——यावद्द्रव्यभाविधर्माणां धर्मिणाऽत्यन्ताभेद एवेत्याशयः ।। **न ज्ञायत इति** ।। विज्ञानशब्दितबोधापरत्वस्याल्पत्वेनाविवक्षणीयत्वादिति भावः ।। **विज्ञानादितीति** ।। अत्र ब्रह्मणश्चतुर्मुखादित्यर्थः । यश्चापि विज्ञानतत्त्वं गुणसन्निरोधमित्यादिवचनाद्विज्ञानशब्दवाच्यं महत्तत्त्वं प्रसिद्धम् । तथापि तदभिमानित्वादभिमान्यधिकरणन्यायेन विज्ञानशब्दवाच्यत्वं मुख्यतश्चतुर्मुखस्यैवेति भावः ।। **नाभिह्रदादितीति** ।। अत्र भागवते भगवन्तं प्रति चतुर्मुखवचनमिति शेषः । तेनाहमित्युपपन्नम् । यच्छब्दस्य रूपं विचित्रमिदमस्य विवृण्वतो मे मारीरिषीष्टनिगमस्य गिरां विसर्ग इत्युत्तरार्धेनान्वयो द्रष्टव्यः । तथाचायं श्लोकार्थः । अहमम्भसि लयकालीने उदके सतो विद्यमानस्यानन्तशक्तेर्यस्य पुंसो नाभिह्रदाद्विज्ञानशक्तिर्विज्ञानशब्दवाच्यमहत्तत्त्वप्रेरणे शक्तिर्यस्यासौ विज्ञानशक्तिरहमासम्। अस्य परमपुरुषस्य रूपं प्रतिमास्थानीयं इदं विश्वं विवृण्वतो विस्तरेण कुर्वतो मे निगमस्य वेदस्यावयवभूतानां गिरां वाक्यानां पदानां च विसर्गो विशिष्टमुच्चारणं व्याख्यानं वा मारीरिषीष्ट मा लुप्यतामिति ।।

**वामन.टी.**—परं विज्ञानादित्येतत् विशेषणं व्याख्याति— **विज्ञानाद्ब्रह्मणः परमिति** ।। नतु विज्ञानतत्त्वात् परं महत्तत्त्वाख्यं पदं सदसद्वरेण्यं देवासुर-

जनकं एवमेतज्ज्ञानर्थेति । चतुर्मुखाख्यब्रह्मैवात्र प्रतिपाद्यते । एतद्ब्रह्म चतुर्मुख इति पूर्वोक्तत्वाच्चेति । मैवम् । नच मुख्ये सत्यमुख्योऽर्थो ग्राह्य इति वचनात् । अमुख्यत्वं चास्य तस्मादेतज्ज्ञायत इत्यत्रैवोक्तम् । नन्वेवमपि विज्ञानशब्दस्य महत्तत्त्वदैवते प्रयोगप्रसिद्धिर्नास्तीत्यत आह— **नाभिहृदादिति** ।। विशिष्टं ज्ञानं शक्तिश्च स्वरूपं यस्येति विज्ञानशक्तिर्ब्रह्मा सर्वप्रजानामपि वरिष्ठं हि ।।

**व.टी.**——परं विज्ञानाद्यद्वरिष्ठं प्रजानामित्यत्र विज्ञानात्परमिति शब्देन ब्रह्मणो दुर्विज्ञेयत्वमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **विज्ञानादीति** ।। विज्ञान-शब्दस्य चतुर्मुखवाचित्वे प्रयोगं चाह— **नाभीति** ।।

**श्री.टी.**——तत्र परं विज्ञानादित्यवबोधात्परत्वमुच्यमानमसङ्गतमित्यतो विज्ञानशब्दार्थमाह— **विज्ञानादिति** ।। ब्रह्मणश्चतुर्मुखादित्यर्थः । यद्यपि विज्ञानतत्त्वं गुणसन्निरोधमित्यादि-वचनाद्विज्ञानशब्दवाच्यं महत्तत्त्वं प्रसिद्धं तथापि तदभिमानि-त्वादभिमान्यधिकरणन्यायेन विज्ञानशब्दवाच्यत्वं मुख्यतश्चतुर्मुखस्यैवेति भावः । वरिष्ठमित्यनेनान्वयप्रतीतिवारणाय परमित्यनुवादेनान्वयो दर्शितः । ब्रह्मणो विज्ञान-शब्दवाच्यत्वे हरेस्तत्परत्वे च प्रमाणमाह— **नाभिहृदादिति** ।। भागवते भगवन्तं प्रति चतु-र्मुखवचनमिति शेषः । तेनाहमित्युपपन्नम् । यच्छब्दस्य रूपं विचित्रमिद-मस्य विवृण्वतो मे मारीरिषीष्टनिगमस्य गिरां विसर्ग इत्युत्तरार्धेनान्वयो द्रष्टव्यः। तथाचायं श्लोकार्थः । इहाम्भसि लयकालीने उदके सतो विद्यमानस्य अनन्त-शक्तेर्यस्य पुंसो नाभिहृदाद्विज्ञानशक्तिर्विज्ञानशब्दवाच्यमहत्तत्त्वप्रेरणे शक्तिर्यस्यासौ विज्ञानशक्तिरहमासं अस्य परमपुरुषस्य रूपं प्रतिमास्थानीयमिदं विश्वं विवृण्वतो विस्तरेण कुर्वतो मे निगमस्य वेदस्यावयवभूतानां गिरां वाक्यानां पदानां च विसर्गो विशिष्टमुच्चारणं व्याख्यानं वा मारीरिषीष्ट मा लुप्यतामिति । तथाचात्र महत्तत्त्वस्य विज्ञानशब्दवाच्यत्वोक्त्याभिमान्यधिकरणन्यायेन मुख्यतो ब्रह्मण एव तच्छब्दवाच्यत्वं तस्य च परमपुरुषनाभिहृदजातत्वोक्त्या हरेस्तत्परत्वं च सिद्धमित्यवगन्त्यम् ।।

**उ.टी.**——प्राकृतपुरुषे विज्ञानसद्भावेऽपि सर्वप्रजोत्तमत्वाभावादित्यतो विज्ञानशब्दार्थं वदन्नन्वयमपि दर्शयति— **विज्ञानाद्ब्रह्मणः परमिति** ।। तथाच सर्वप्रजोत्तमत्वं कैमुत्येन साधयितुं विरिञ्चोत्तमत्वमुच्यत इति भावः । ब्रह्मणो विज्ञानशब्दवाच्यत्वे विष्णोस्तदुत्तमत्वे च प्रमाणमाह— **नाभीति** ।। विज्ञानशक्तिः अहं अम्भसि सतः विद्यमानस्य जलशायिनः अनन्तशक्तेः यस्य पुंसो भगवतः नाभिह्रदादासं उत्पन्नः । यस्येत्यस्य भगवत इति प्रकृतेनान्वयः । चतुर्मुखवाक्यमिदम् । अत्र चतुर्मुखेन स्वस्य विज्ञानशक्तित्वमुच्यते । तेन विज्ञानाद्ब्रह्मण इति व्याख्यानमुपपन्नम् । यस्य नाभिह्रदादहमासमिति परब्रह्मजातत्वं विरिञ्चस्योच्यते तेन ब्रह्मणः परमिति व्याख्यानं चोपपद्यत इति ध्येयम् ।। १-२ ।।

**तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।**
**तदेतत्सत्यं तदमृतं ब्रह्म वेद्धव्यं सोम्य विद्धि ।। ३ ।।**

**ध.टि.**——तदेतदक्षरनामकं ब्रह्मैव । स अक्षरशब्दवाच्यो विष्णुः प्रणयनात्प्राणः । तदु तदेव वक्तृत्वाद्वाक् । मन्तृत्वान्मनः । तदेतत्सत्यं सद्भिः प्राप्यम् । तदेवामृतं मृतिरहितम् । तदेव वेद्धव्यं विद्धि वेधय ।। ३ ।।

**न.टी.**——अक्षरं नाशरहितं विष्ण्वाख्यं ब्रह्म सर्वप्रणयनात्प्राणः । वक्तृत्वात् वाक् । मन्तृत्वान्मनः । अमृतं नित्यमुक्तम् । वेद्धव्यं विद्धि वेधय ।। ३ ।।

**रा.खं.**——महिमान्तरमाह— **स प्राण इति** ।। प्राण इति विधेयापेक्षया स इति पुल्लिङ्गनिर्देशः । प्रकर्षेण अनिति चेष्टते, जगत्प्रेरयतीति प्राणः । तदक्षरं वक्ति समस्तवेदानित्येव वाक्, नतु प्रसिद्धवागाद्यभेदादित्येवकारार्थ उशब्दः । तदक्षरं मनुते सर्वमिति मनः । तदेतदक्षरं सत्यं अपराधीनस्वरूपम् । षद्लृ विशरणे इति धातोः सतः शरीरतो विशरणशीलान् जीवान् यमयति नियमयतीति वा सत्यं तदमृतं देहतोऽपि नाशरहितं, हे सोम्य ।। ३ ।।

**स.टी.**—— वेद्धव्यं लक्षीकरणीयं विद्धि जानीहि ।। ३ ।।

**व.टी.**——अस्यैव माहात्म्यान्तरमुच्यते— **तदेतदक्षरं ब्रह्मेत्यादिना** ।। ३ ।।

**श्री.टी.**——सः अक्षरशब्दवाच्यो विष्णुः प्रणयनात्प्राणः । तदु तदेव । वक्तृत्वाद्वाक् मन्तृत्वान्मनः तदेतत्सत्यं सद्भिः प्राप्यं तदेवामृतं मृतिरहितं तदेव वेद्धव्यं लक्ष्यं विद्धि । तत्कर्मकं वेधं कुर्वित्यर्थः ।। ३ ।।

**उ.टी.**—एवं श्रवणं कर्तव्यमित्युक्त्वा संशयविपर्ययनिरासफलकत्वान्मननमपि कर्तव्यमिति विधत्ते— **तदेतदिति मन्त्रेण** ।। ३ ।।

ततश्चायं मन्त्रार्थः—तत् अदृश्यत्वादिगुणकम् । एतत् यथा सुदीप्तादित्यादिमन्त्रोक्त-स्रष्टृत्वादिगुणकम् । अक्षरं भगवान् । ब्रह्म सकलगुणपूर्णम् । अथ कस्मादुच्यते ब्रह्मेति 'बृहन्तो ह्यस्मिन् गुणा' इति श्रुतेः । एवं स अक्षराख्यो भगवान्प्राणः सकलप्राणिप्रेरणान्मुख्यप्राणान्तर्यामिरूपेण प्राणशब्दवाच्यः । तदु उशब्दोऽवधार-णार्थे । अक्षरमेव वा वक्तृत्वाद्वागभिमानिदेवतान्तर्यामिरूपेण वाक्शब्दवाच्यम् । तदेव मन्तृत्वान्मनोऽभिमानिदेवतान्तर्यामित्वेन मनःशब्दवाच्यं च । तदेतदक्षरमेव सत्यं मुक्तामुक्तनियामकम् । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सत् तियमिति तद्यत्सत्तदमृतम् । अथ यत् ति तन्मर्त्यं अथ यद्यं तेनोभे यच्छतीति श्रुतेः । तदक्षरं अमृतं नित्यमुक्तम् । हे सोम्य त्वं तदुक्तगुणविशिष्टमक्षरम् । विद्धि जानीहि । तन्मननं कुर्विति यावत् । अत्रार्थे वेद्धव्यमिति लुप्तोपमा । यथा धनुर्धरः शरेण वेद्धव्यं लक्ष्यं चित्तैकाग्र्येण विध्यति तथेति योज्यम् ।। ३ ।।

**आ.टी.**——तदेतदक्षरं ब्रह्म चेष्टकत्वात्प्राण इत्युच्यते । वक्तृत्वाद्वाक् मन्तृत्वा-न्मनः । सत्त्वं यापयतीति सत्यम् ।। ३ ।।

**गू.टी.**——तदेवाक्षरं ब्रह्म प्रणयनात्प्राणः वक्तृत्वाद्वाक्, मन्तृत्वान्मन, इत्युच्यते । प्राणादिषु स्थित्वा जीवनियामक इत्यर्थः । तदेतत्सत्यं ब्रह्म वेद्धव्यं लक्षं विद्धि वेधय ।। ३ ।।

**भाष्यम्**

**प्राणः प्रणयनाद्विष्णुर्वक्तृत्वाद्वागुदीरितः ।**
**मनो मन्तृत्वतो विष्णुः सर्वजीवनियामकः ।।**

**—इति शब्दनिर्णये ।।**

**व्या.टी.**—स प्राणस्तदु वाङ्मन इत्यत्र प्रसिद्धप्राणाद्येकत्वप्रतीतिं निवारयन् प्राणादिशब्दान्निर्वक्ति— **प्राण इति** ।।

**ध.टि.—प्राण इतीति** ।। अत्र प्रणयनात् प्रकर्षेण प्रेरणात् मन्तृत्वतो ज्ञातृत्वतः सर्वजीवनियामकतया तदन्तर्गतो हरिः प्रणयनादिनिमित्तैः प्राणादिशब्दैरुच्यत इत्यर्थः ।।

**वामन.टी.**—विष्णोस्स प्राणस्तदु वाङ्मनः इत्येतच्छब्दत्रयं शब्दनिर्णयवाक्येन विष्णोर्निर्वक्ति— **प्राणः प्रणयनादित्यादिना** ।।

**स.टी.**—प्रणयनात्प्राणः वक्तृत्वाद्वाक् मन्तृत्वतो मनः । तद्वभाषे— **प्राणः प्रणयनादिति** ।।

**व.टी.**— तस्यार्थः "प्राणः प्रणयनाद्विष्णुरि"त्यादिलक्षणम् ।।

**श्री.टी.**—स प्राणस्तदु वाङ्मन इत्यत्र विष्णोः प्राणाद्यभेदेन तच्छब्दवाच्यत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्राणादिशब्दान्विष्णौ प्रमाणेनैव निर्वक्ति— **प्राण इति** ।। प्रणयनात् प्रकर्षेण प्रेरणात् । प्रकर्षेण ऊर्ध्वमिति यावत् । भक्तानां नयनादिति वा । मन्तृत्वतो ज्ञातृतः सर्वजीवनियामकतया तदन्तर्गतो हरिः प्रणयनादिनिमित्तैः प्राणादिशब्दैरुच्यत इत्यर्थः ।।

**उ.टी.**—तत्र प्रसिद्धप्राणाद्यैक्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्राणादिशब्दान्निर्वक्ति— **प्राणः प्रणयनादिति** ।। एतच्च प्राणादिशब्दवाच्यत्वं मुख्यप्राणाद्यन्तर्यामिरूपेणैवेति भावेनाह— **सर्वजीवेति** ।।

## उपनिषत्

**धनुर्गृहीत्वौपनिषदं महास्त्रं**
**शरं ह्युपासानिशितं सन्दधीत ।**
**आयम्य तद्भावगतेन चेतसा**
**लक्ष्यं तदेवाक्षरं सोम्य विद्धि ।। ४ ।।**

**व्या.टी.**——वेद्धव्यं विद्धि वेधयेत्युक्तं वेधप्रकारमाह— **धनुरिति** ।। औपनिषदं उपनिषत्सिद्धम् ।। ४ ।।

**ध.टि.**——औपनिषदं धनुर्गृहीत्वा तस्मिन्धनुषीति शेषः । महास्त्रमस्त्रश्रेष्ठम् । उपासयोपासनया निशितं तीक्ष्णीकृतं शरं सन्दधीत । सम्यक्स्थापयेत् । अनन्तरं तद्धनुरायम्य विस्तार्य शरयुक्तां ज्यां कर्णान्तमानीय तच्चेतः समस्तवस्तुभ्यो नियम्य निवर्त्येति यावत् । तद्भावगतेन चेतसा स चासौ भावश्च तद्भावः । तस्मिंल्लक्ष्यभूतपदार्थ एव स्थितेनान्तःकरणेन तदक्षरं पूर्वोक्तविशेषणविशिष्टमक्षर-नामकं ब्रह्मैव लक्ष्यं तद्विद्धि तद्विषयकं वेधं कुर्वित्यर्थः ।। ४ ।।

**वामन.टी.**——अथ तद्वेद्धव्यमित्यत्र मुमुक्षोः ध्यानं वेधो विधीयते । तथाहि स वा उपनिषदाख्यं धनुर्गृहीत्वा वैष्णवास्त्राभिमन्त्रितं मनः शरं स्मरणोपानिशितं हि तद्धनुषि सन्दधीत । अथ तद्धनुराकर्णमाकृष्य वस्तुतत्त्वमपि निश्चित्य ब्रह्माक्षरसंज्ञलक्ष्यस्य ध्यानवेधः कार्यः ।। ४ ।।

**वा.टी.**——'धनुर्गृहीत्वौपनिषदं महास्त्रं' इत्यत्र औपनिषदमुपनिषदि विद्यमानं महास्त्रं महापातकनिरसनहेतुत्वान्महास्त्रपदवाच्यं प्रणवाख्यं धनुर्गृहीत्वेत्यर्थः ।।

**न.टी.**——वेधप्रकारमाह— **धनुरिति** ।। ४ ।।

**रा.खं.**——औपनिषदमुपनिषत्सम्बन्धि प्रणवाख्यं धनुर्गृहीत्वा वेद्धव्यं वेधनीयं तद्ब्रह्म विद्धि जानीहि । यथा वेध्यं लक्ष्यं वस्तु धानुष्का धनुर्गृहीत्वा शरेण

विध्यन्ति तथा त्वमपि उपनिषदर्थभूतप्रणवार्थपर्यालोचनया मनसा ब्रह्म सावधानं जानीहीत्यर्थः । वेद्धव्यं विद्धीत्युक्तमेव व्यनक्ति— **महास्त्रमित्यादिना** ।। उपासानिशितं उपासया तीक्ष्णीकृतं शरं शरवत्स्थितं मनः त्वं सन्दधीत सन्धत्स्व व्यत्ययात् । संयोजयेति यावत् । सन्धानमेव व्यक्तमाह— **आयम्येति** ।। तच्चेतः समस्तवस्तुभ्यो नियम्य, निवर्त्येति यावत्, तद्भावगतेन तदेकसम्बद्धेन चेतसा लक्ष्यं लक्ष्यभूतं तदेवाक्षरं हे सोम्य विद्धीत्यर्थः ।। ४ ।।

**स.टी.**—वेद्धव्यमित्युक्तं विवृणुते— **धनुरिति** ।। ४ ।।

**श्री.टी.**—वेधोपयुक्तं धनुः शरादिकं दर्शयति— **धनुरिति** ।। औपनिषदं उपनिषत्प्रसिद्धम् । धनुर्गृहीत्वा तस्मिन्धनुषीति शेषः । महास्त्रं अस्त्रश्रेष्ठम् । उपासया निशितं तीक्ष्णीकृतं शरं सन्दधीत सम्यक् स्थापयेत् । अनन्तरं तद्धनुरायम्य विस्तार्य शरयुक्तां ज्यां कर्णान्तमानीयेति यावत् । तद्भावगतेन चेतसा स चासौ भावश्चेति तद्भावः । तस्मिन्लक्ष्यभूतपदार्थ एव स्थितेनान्तःकरणेन तदक्षरं पूर्वोक्तविशेषणविशिष्टमक्षरनामकब्रह्मैव लक्ष्यं तत् विद्धि तद्विषयकं वेधं कुर्वित्यर्थः ।। ४ ।।

**उ.टी.**—एवं मननं कर्तव्यमित्युक्त्वा तदनन्तरं भगवद्ध्यानं कर्तव्यमित्याह— **धनुरिति** ।। हे सोम्य त्वं औपनिषदं ब्रह्मविद्यया व्याख्येयम् । शेषे इति सूत्रेणोपनिषच्छब्दाद्व्याख्येयमित्यर्थे अण्प्रत्ययः । सर्ववेदानां प्रणवव्याख्यानरूपत्वं चान्यत्र स्पष्टम् । ततश्च सर्ववेदाख्येयमित्यर्थः । महास्त्रं व्याहृत्यादिसर्वमूलमन्त्राणां व्यञ्जकत्वात्प्रधानमन्त्रप्रणवरूपम् । धनुर्गृहीत्वा तत्रोपासानिशितम् ।

सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चैव................. ।।

इत्यनुव्याख्यानोक्तेरुपासना द्विविधा । तत्र श्रवणमननात्मकशास्त्राभ्यासरूपोपासनैवात्रोपासनापदेन विवक्षिता । नतु ध्यानम् । तस्यात्राविधीयमानत्वात् । तथाचोपासनया श्रवणमननरूपोपासनया निशितं तीक्ष्णीकृतम् । अज्ञातं

संशयविपर्ययरहितमिति यावत् । शरं सन्दधीत । व्यत्ययेन प्रथमपुरुषः । सन्धत्स्व संयोजयेति यावत् । सन्धानानन्तरं च तद्भावगतेन स चासौ भावश्च तद्भावः प्रसिद्धपदार्थो भगवान् । तत्प्रवणेन चेतसान्तःकरणेन । तत् शरेण संयोजितं धनुः । आयाम्य आकृष्य । लक्ष्यं लक्ष्यसदृशम् । तत् पूर्वोक्तमक्षरमेव विद्धि जानीहि । ध्यानं कुर्वित्यर्थः ।। ४ ।।

**आ.टी.**—नित्यमुक्तं वेद्धव्यं लक्ष्यं विवेचयति । उपनिषत्सिद्धं महच्च अस्त्रं असु क्षेपणे । शरादिक्षेपकधनुर्गृहीत्वा उपासनया तीक्ष्णं शरं बध्नीयात् । भगवन्निष्ठमनसा तद्धनुरायम्य विकृष्य यदक्षरं तदेव लक्ष्यं विद्धिः ताडय ।। ४ ।।

**गू.टी.**—वेधप्रकारमाह— **धनुरिति** ।। औपनिषदं उपनिषत्सिद्धं ॐकाराख्यं धनुर्गृहीत्वा महास्त्रं पुंप्रेरितं आशुगमनशीलं असु क्षेपणे शरं लक्ष्यवेधकं श्रवणाद्युपासनया विजितमनोरूपं धनुषा संयुज्यात् । भगवद्विषयेणान्तःकरणेन आयम्याकृष्य तदेवाक्षरं ब्रह्मरूपं लक्ष्यं हनेत्यर्थः ।। ४ ।।

## उपनिषत्

**प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ।। ५ ।।**

**व्या.टी.**—किञ्च धनुः कश्च शर इत्यत आह— **प्रणव इति** ।। तन्मयः तस्मिंल्लग्नः ।। ५ ।।

**ध.टि.**— ।। **प्रणव इतीति** ।। आत्मा जीवश्चेतो वा । आत्मनो ब्रह्मणि वेधो नाम कीदृश इत्यपेक्षायामाह— **शरवदिति** ।। यथा शरो लक्ष्ये सल्लग्नो भवति एवं जीवोऽपि तन्मयः प्रणवप्रतिपाद्ये ब्रह्मण्येव संल्लग्नचित्तो भवेदित्यर्थः ।। ५ ।।

**वामन.टी.**—अथाप्युपनिषत्स्वरेण प्रणवधनुषा मनःसारेण स्वरूपचैतन्य-शरेण तल्लक्ष्यस्यैव ध्यानसारः समाधिवेधोऽप्यवश्यं विधेयः । तन्मयस्त-त्प्रविष्टचेतनो भवेत् ।। ५ ।।

**न.टी.**——औपनिषदं उपनिषत्सिद्धं किं धनुः कः शरः लक्ष्यं किमित्यत आह-– **प्रणव इति** ।। तन्मयः तल्लग्नः ।। ५ ।।

**रा.खं.**——किं धनुरादीत्यतो विविच्य दर्शयति– **प्रणवो धनुरिति** ।। आत्मा चेतः शरः । तदक्षराख्यं ब्रह्मेत्यर्थः वेद्धव्यं बोद्धव्यमित्यर्थः ।। **शरवदिति** ।। शरो यथा वेद्धव्यमनुप्रविशति तथा ज्ञान्यपि तन्मयः तत्प्रविष्टो भवतीत्यर्थः ।। ५ ।।

**स.टी.**——धनुरादि किमित्यत आह— **प्रणव इति** ।। तन्मयः तस्मिन् लग्नः ।। ५ ।।

**श्री.टी.**——उपनिषत्सिद्धं धनुः किं शरश्च क इत्यपेक्षायामाह — **प्रणव इति** ।। आत्मा जीवः आत्मनो ब्रह्मणि वेधो नाम कीदृश इत्यपेक्षायामाह — **शरवदिति** ।। यथा शरो लक्ष्ये सल्लग्नो भवत्येवं जीवोऽपि तन्मयः प्रणवप्रतिपाद्ये ब्रह्मण्येव सल्लग्नचित्तो भवेदित्यर्थः ।। ५ ।।

**उ.टी.**——औपनिषदमित्यादिविशेषणसामर्थ्यात्प्रतीतमपि धनुः कण्ठरवेण प्रकटयन्नेव शरादिकमपि विशदयति— **प्रणव इति** ।। प्रणवो धनुः लक्ष्यवेधसाधनत्वसाधर्म्यात् । आत्मा शरः लक्ष्यलग्नत्वसाधर्म्यात् । तत् ब्रह्म लक्ष्यमुच्यते । शरवेधनीयत्वसाधर्म्यात् । अप्रमत्तेन भगवति प्रमादरहितेन चेतसा ब्रह्माख्यं लक्ष्यं वेद्धव्यम् । सम्यक् ध्यातव्यम् । तथा सत्युपासकः । शरवत्तन्मयो ब्रह्मप्रचुरो ब्रह्मलग्न इति यावत् । भवेदिति योज्यम् ।। ५ ।।

**आ.टी.**——किं तद्धनुरादिकमित्यत आह— **प्रणव इति** ।। ॐकारो धनुः आत्मा मनः शरः ब्रह्मैव लक्ष्यम् । सावधानेन वेद्धव्यं ज्ञातव्यमिति यावत् । शरो यथा लक्ष्ये लग्नो भवति तथा तन्मयः तस्मिन्नेव मग्नमना भवेदित्यर्थः ।।

**गू.टी.**——एतद्विविच्याह— **प्रणव इति** ।। अप्रमत्तेनात्मना वेद्धव्यम् । तथाच शर इव तन्मयस्तस्मिंल्लग्नः । ॐकारेणैकाग्रमनसा ब्रह्मणि ध्याते सति तत्रैवातिदृढमनस्को भवतीत्यर्थः ।। ५ ।।

## उपनिषत्

**यस्मिन्द्यौः पृथिवी चान्तरिक्ष-**
**मोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथ आत्मान-**
**मन्या वाचो विमुञ्चथाऽमृतस्यैष सेतुः ।। ६ ।।**

**व्या.टी.**——यथाक्षरं प्राधान्येन ध्येयं तथान्यदप्यस्ति किमित्यतस्तन्महिमपूर्वं नेत्याह— **यस्मिन्द्यौरिति** ।। ६ ।।

**ध.टि.**——।। **यस्मिन्द्यौरिति** ।। यस्मिन् द्यौः स्वर्गः पृथिवी चान्तरिक्षम् । सर्वैः प्राणैः चक्षुरादिभिः सह मनश्चेत्येतत्सर्वमोतमाश्रितं तं सर्वाधारमेवैकमात्मानं जानथ जानीतेति शौनकोपलक्षितान्प्रत्युच्यत इति बहुवचनम् । अन्या वाचः अन्यदेवताविषयवाचो विमुञ्चथ अन्यदेवताध्यानं प्राधान्येन मा कुरुतेत्यर्थः । अमृतस्य मुक्तवर्गस्य सेतुरिव सेतुराश्रयः ।। ६ ।।

**वामन.टी.**——यदिह ध्यानाद्युपासनमुक्तम्, तद् द्युभ्वाद्यायतनमुपसंहृत्यैवेत्याह— **यस्मिन्द्यौरिति** ।। तदन्यः कश्चिदित्थमुपास्य इत्याह— **अन्या वाच इति** ।। ६ ।।

**न.टी.**——वेद्धव्यमित्युक्तं ध्येयत्वं यथा अक्षरस्याप्राधान्येनास्ति तथा अन्यस्यास्ति किमित्यतस्तन्महिमोक्तिपूर्वकं नेत्याह— **यस्मिन्निति** ।। ओतं प्रविष्टम् । प्राणैरिन्द्रियैः एकं तमेव विष्णुमेव । सर्वोत्पादकत्वेन सर्वाश्रयत्वेन जानथ । अन्या वाचो विमुञ्चथ । अन्यं सर्वोत्पादकत्वेन सर्वाश्रयत्वेन जानथेत्यर्थः । तत्र हेतुमाह— **अमृस्येति** ।। अमृतस्य मुक्तवर्गस्य एषः विष्णुस्सेतुरिव सेतुराश्रयः।।

**रा.खं.**——यथाक्षरं प्राधान्येन ज्ञेयं तथाऽन्यदप्यस्ति किं तादृशमित्यत तन्महिमोक्तिपूर्वकं नेत्याह— **यस्मिन्द्यौरित्यादिना** ।। यस्मिन्द्यौरोता पृथिवी चोता अन्तरिक्षं चोतं सर्वैः प्राणैश्चक्षुरादीन्द्रियैस्सह मनश्च यस्मिन्नोतं, वेत्

तन्तुसन्ताने, पटे तन्तव इव संश्लिष्टतया यमाश्रित्य वर्तते द्यौरादिकं तं सर्वाधारमेवैकं आत्मानं जानथ जानीत, व्यत्ययात् । शौनकोपलक्षितान् प्रत्युच्यत इति बहुवचनम् । जानथ आत्मानमिति पृथङ्निर्देशस्सर्ववैलक्षण्यज्ञापनार्थः । तदाह सूत्रे 'द्युभ्वाद्यायतनं स्वशब्दात्' इति । एतेनाऽऽधेयज्ञानं विना तदाधारत्वेन ज्ञानायोगात् 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रोक्तदिशाऽऽधेयकर्मदेवतादि-जगज्ज्ञानं सर्वाधारत्वप्रकारकब्रह्मज्ञानोपयोगि सत् परविद्या भवतीति सूचितं भवति । अत एव प्राक्कर्मदेवतादिजगदुक्तिः, अत्रैतत्सर्वमर्पितमिति चोक्तम् । अन्याः अन्यविषयाः वाचः विमुञ्चथ परित्यजत, प्राधान्येनेति भावः । तदाह सूत्रे 'हेयत्वावचनाच्च' इति । कुतस्तस्यैव ज्ञानमापाद्यमित्यत आह— **अमृतस्यैष सेतुरिति** ।। एष आत्माऽमृतस्य मुक्तवर्गस्य सेतुराश्रयः ।। ६ ।।

**स.टी.**——अदृश्यत्वादिगुणकाक्षरस्य महिमानमाह— **यस्मिन्द्यौरिति** ।। इदं द्युपृथिव्याद्याधारत्वं विष्णोरेव । तदेकनिष्ठस्वशब्दपर्यायात्मकशब्दात् । नचात्मशब्दो गौणोऽमृतस्यैष सेतुरिति ।। ६ ।।

**व.टी.**——तदेवाक्षरं सोम्य विद्धीत्यत्र ब्रह्मणः यद्विज्ञेयत्वमुच्यते तत्स्पष्टी-क्रियते— **यस्मिन्द्यौः पृथिवी चान्तरिक्षमित्यादिना** ।। ६ ।।

**श्री.टी.**——अक्षरवत्प्राधान्येन ज्ञेयत्वमन्यस्य कस्यापि नास्तीत्याशयेन तन्महिमान-माह— **यस्मिन्द्यौरित्यादिना** ।। अन्या वाचोऽन्यदेवताविषयवाचो विमुञ्चथ । अन्यदेवताध्यानं मा कुरुतेत्यर्थः । प्राधान्याभिप्रायेणायं निषेधः । "परिवारतया ग्राह्या अपि हेयाः प्रधानत" इत्युक्तत्वात् । अमृतस्येत्येकवचनं समुदायापेक्षया मुक्तवर्गस्य सेतुरिव सेतुराश्रयः मुक्तैः प्राप्य इति यावत् ।। ६ ।।

**उ.टी.**—एवं श्रवणमननध्यानरूपं भगवदुपासनं कार्यमित्युक्तम् । इदानीं तदेव कार्यं नान्यदेवतोपासनमिति सोपपत्तिकं वदन् जगत्स्थितिकर्तृत्वमुक्ताश्रयत्वरूपं भगवन्महिमान्तरमप्याह— **यस्मिन्द्यौरिति** ।। यस्मिन्पुरुषे द्यौः पृथिवी अन्तरिक्षं

च । ओतं प्रविष्टम् । यद्यपि पृथिव्यादेरन्तरिक्षस्य च विशेष्यत्वात्तद्विशेषण ओतशब्दे विशेषणानां चाजातेरिति सूत्रेण स्त्रीलिङ्गनपुंसकलिङ्गं च प्राप्नोति । तथाप्यन्तरिक्षस्य पाठतः परत्वात्तद्विशेषणओतशब्दे शब्दपरविप्रतिषेधेन नपुंसकत्वमेव युक्तम् । विप्रतिषेधे परं कार्यमिति सूत्रेण तुल्यबलविरोधे परं कार्यमित्युक्तत्वादिति ध्येयम् । अनेन भगवतः सर्वलोकस्थितिकर्तृत्वमुक्तम् । त्रिलोकविवक्षायां वैकुण्ठादेः सर्वलोकत्वादिति । एवं सर्वलोकाधारत्वमुक्त्वा सर्वेन्द्रियाधारत्वमप्याह— **मन इति** ।। मनश्च सप्तप्राणास्त्ववगतेः पञ्चप्राणास्तु कर्मण इति स्मृतेः प्राणशब्द इन्द्रियवाची । ततश्च सर्वैः प्राणैः इन्द्रियैः सह यस्मिन्नोतमित्यन्वयः । तमात्मानं परमात्मानं जानथ । छान्दसोऽयं प्रयोगः । जानीत । श्रवणमननध्यानरूपं ब्रह्मोपासनं कुरुतेति यावत् । अत्र सर्वसज्जनानां सम्बोध्यत्वात् जानथेति बहुवचनं युक्तम् । एकमेवेत्येवकारव्यावर्त्यमाह— **अन्या इति** ।। हे सज्जनाः यूयं अन्याः अन्यदेवताविषयाः वाचो विमुञ्चथ । व्यत्ययेन लोडर्थे लट् विमुञ्चतेत्यर्थः । अत्रान्यदेवतोपासननिषेधः प्राधान्याभिप्रायेण । परिवारतया तु तदुपासनमपि कार्यमेव । यथोक्तमनुव्याख्याने—

परिवारतया ग्राह्या अपि हेयाः प्रधानतः ।। इति ।। ६ ।।

**आ.टी.**——यथाक्षरं प्राथम्येन ध्येयं तथान्यदस्ति किमित्यतस्तन्महिमपूर्वं नेत्याह-— **यस्मिन्निति** ।। सर्वैः प्राणैरिन्द्रियादिभिःसह मनः यस्मिन्नोतं च यस्मिन्स्थितं य एषोऽमृतस्य मुक्तवर्गस्य सेतुराश्रयः । तमेवमेव परमात्मानं जानथ जानीध्वम् । अन्या देवतादिविषया वाचो विमुञ्चथ त्यजत ।। ६ ।।

**गू.टी.**——यथा ब्रह्म प्राधान्येन ध्येयं तथान्यदस्नि किमित्यतस्तन्महिमापूर्वं नेत्याह— **यस्मिन्निति** ।। यस्मिन्द्यौरोता पृथिव्योता अन्तरिक्षमोतं आश्रितं सर्वैश्च प्राणैरिन्द्रियैः सह मनश्चोतम् । तमेवैकमात्मानं जानथ । अन्यविषया अन्यदेवादेर्ज्ञानादिजनका वाचो विमुञ्चथ । यतोऽमृतस्य मुक्तवर्गस्य स सेतुराश्रयः ।। ६ ।।

### भाष्यम्

**अमृतस्य मुक्तस्य हेतुः । ॐ मुक्तोपसृप्यव्यपदेशात् ॐ । 'मुक्तानां परमा गतिः' इत्यादेः ।**

**व्या.टी.**——'अमृतस्यैष सेतुरि'त्यत्र जडामृताश्रयत्वप्रतीतिं निवारयन्नाह— **अमृतस्येति** ।। सेतुराश्रयः । तत्रामृतशब्दोक्ता मुक्ता इति कुत इत्यत आह–– **ॐ मुक्तेति** ।। 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमि'त्यत्र पृथिव्याद्याश्रयत्वेनोक्तः परमात्मेति कुत इत्यतः मुक्तप्राप्यत्वलिङ्गोक्तेरिति सूत्रकृतोक्तत्वादित्यर्थः । भवेदेतद्भगवतो मुक्ताश्रयत्वं यदि सिद्धं स्यात् तदेतत्कुत इत्यत आह— **मुक्तानामिति** ।।

**ध.टि.**——।। **अमृतस्येतीति** ।। अत्रैकवचनं समुदायापेक्षम् ।। **आश्रय इति** ।। प्राप्य इत्यर्थः ।। **मुक्तोपसृप्येतीति** ।। अत्र मुक्तोपसृप्येति भावप्रधानो निर्देशः ।। **मुक्तानामितीति** ।। अत्र गम्यत इति गतिः । गम्यत्वस्यार्चिरादिसाधारण्यात् परमेत्युक्तम् । तथाच मुक्तानामिति कर्तरि षष्ठी । मुक्तैः प्राप्य इत्यर्थः ।।

**स.टी.**——।। **मुक्तोपसृप्यव्यपदेशात्** ।। न रुद्रप्रधानयोः द्युभ्वाद्यायतनत्वम् । तच्छब्दाभावात् । अत एव न जीववाय्वोः । संहताः सम्बद्धः । बहुधा विजायमान इति बहुधा विजायमानत्वं भगवतो विश्वादिरूपेण सर्वजीवनियामकत्वम् । तदभाषत अमृतस्येत्यादिना प्रवृत्तय इत्यन्तेन ।।

**व.टी.**——तत्रामृतस्यैष सेतुरित्यस्य विवक्षितार्थमाह— **अमृतस्येति** ।। विष्णोर्मुक्ताश्रयत्वे स्मृतिसूत्रसम्मतिमप्याह— **मुक्तेति** ।।

**श्री.टी.**——अमृतस्यैष सेतुरित्यत्रामृतशब्दः क्षीरार्णवसञ्जातप्रसिद्धामृतपर इत्यन्यथाप्रतीतिनिरासायार्थमाह— **अमृतस्येति** ।। अत्रैकवचनं समुदायापेक्षम्। सेतुरिव सेतुराश्रयः प्राप्यः इति यावत् । अत्रामृतशब्दोक्ता मुक्ता एवेत्यत्र ज्ञापकमाह— **मुक्तोपसृप्येति** ।। भावप्रधानो निर्देशः । यस्मिन्द्यौरित्यादिवाक्ये

द्युभ्वाद्यायतनत्वेनोक्तः परमात्मा तदन्ये एवेति संशयेऽन्ये एवेति प्राप्ते द्युभ्वाद्यायतनं परमात्मैव नान्ये जीवादयः । कुतः अमृतस्येति वाक्ये मुक्तप्राप्यत्ववचनादिति सूत्रकृतैवोक्तत्वादित्यर्थः । स्यादिदं यदि मुक्तप्राप्यत्वस्य भगवल्लिङ्गत्वं स्यात्तदेव कुत इत्यतोऽत्र महाभारतसम्मतिमाह— **मुक्तानामिति** ।। गम्यत इति गतिः गम्यत्वस्यार्चिरादिसाधारण्यात्परमेत्युक्तम् । तथाच मुक्तानामिति कर्तरि षष्ठी । मुक्तैर्मुख्यप्राप्य इत्यर्थः ।

**उ.टी.**—ननु भगवदुपासनमेव कर्तव्यं नान्यदेवतोपासनमित्येतत्कुत इत्यत आह— **अमृतस्येति** ।। अत्र पीयूषममृतं सुधेति कोशोक्तामृताश्रयत्वमुच्यते । तच्चान्यदेवतोपासनं न कार्यमित्यत्र हेतुर्न भवतीत्यतो व्याचष्टे— **अमृतस्येति**।। समुदायापेक्षमेकवचनं श्रुतौ भाष्ये च प्रयुक्तम् । भगवतो मुक्ताश्रयत्वमेव कुतः येन मुक्तस्येति व्याख्यानमित्याशंक्य भगवतो मुक्ताश्रयत्वं सूत्रसहस्रनामवचनाभ्यां समर्थयते— **मुक्तोपसृप्येत्यादिना** ।। मुक्तोपसृप्यत्वेत्यर्थः । तथा चैषः द्युभ्वाद्याश्रय आत्मा अमृतस्य मुक्तवर्गस्य सेतुरिव सेतुः । वैकुण्ठादिलोकस्थभगवत्प्रापक इति मन्त्रार्थः । तथाच द्युभ्वाद्याश्रयतयोपासनं मोक्षफलार्थम् । तच्च भगवतैव भवति । तस्यैव सर्वमुक्ताश्रयत्वेन मोक्षप्रदत्वसम्भवात् । नचान्योपासनं मोक्षफलकम् । तेषां मुक्ताश्रयत्वाभावेन मोक्षप्रदत्वासम्भवात् । अतो भगवदुपासनमेव कार्यं नान्यदिति भावः ।। ६ ।।

## उपनिषत्

**अरा इव रथनाभौ संहता यत्र नाड्यः ।**
**स एषोऽन्तश्चरते बहुधा जायमानः ।। ७ ।।**

**व्या.टि.**—संहताः सम्बद्धाः विश्वादिरूपेण बहुधा जायमानः ।। ७ ।।

**ध.टि.**—रथनाभौ चक्रे अरा इव यत्र नाड्यस्संहताः स एषः सर्वजीवनियामकत्वेन सर्वजीवहृदयस्थितो विष्णुः स्वयमेक एव स्वेच्छया बहुधा जायमानः

विश्वादिरूपेण बहुधा भवन् शरीरान्तः चक्षुरादिस्थानेषु चरते चरति ।। ७ ।।

**वामन.टी.**—मुक्तामुक्तजगदाश्रयत्वं विष्णोरेवेत्यत्र ब्रह्मसूत्रं स्मृतिं च प्रमाणमाह— **अथाध्यात्ममिति** ।। स एव भगवान्सर्वधारणनियमनादि-कर्तेत्याह— **अरा इवेति** ।। ७ ।।

**न.टी.**—सदृष्टान्तं द्वासप्ततिसहस्रनाड्याश्रयत्वं सर्वनियामकत्वं चाह— **अरा इति** ।। संहताः स एष भगवान् हृदये मनोनियामकतया अनिरुद्धाख्यैकरूपेण जाग्रदादिप्रवर्तकतया बहुधा विश्वादिरूपैः जायमानः स्वेच्छयाभिव्यज्यमानः चरते ।। ७ ।।

**रा.खं.**—यत्र देहस्थे हरौ रथनाभौ रथचक्रे अरा इव नाड्यः संहतास्सम्बद्धास्स एष आत्मा बहुधा विश्वादिरूपेण जायमानः प्रादुर्भवन् अन्तः शरीरान्तश्चरते सञ्चरति ।। ७ ।।

**व.टी.**—ब्रह्मण एव ज्ञातव्यत्वसिद्ध्यर्थं तस्यैव माहात्म्यान्तरमुच्यते— **अरा इव रथनाभावित्यादिना** ।। ७ ।।

**श्री.टी.**—रथनाभौ अरा इव यत्र नाड्यः संहताः सम्बद्धाः स एष सर्वजीवनिया-मकत्वेन सर्वजीवहृदयस्थितो विष्णुः स्वयमेक एव स्वेच्छयैव बहुधा जायमानो विश्वादिरूपेण बहुधा भवन् शरीरान्तश्चक्षुरादिस्थानेषु चरते चरतीत्यर्थः । यः सर्वज्ञः सर्वविदित्युक्तार्थम् । यस्यैष महिमा भुवि भूरादिलोके प्रकटितः यस्तमसः परस्मात् अज्ञानातीतः दुर्गोत्तमो वा । तमात्मानं पराय उत्तमपुरुषार्थाय मोक्षार्थमिति यावत् ।। ७ ।।

**उ.टी.**—पूर्वं धनुर्गृहीत्वेत्यादिना ध्यानं कर्तव्यमित्युक्तम् । तच्च गुणान्तरोपसंहार-पूर्वकमोंकारार्थगुणविशिष्टत्वेनैव कार्यमित्याह— **अरा इवेति** ।। अत्र स इत्युक्तः कः । जायमान इत्युक्तोत्पत्तिश्चायुक्ता ।। तदयं मन्त्रार्थः—नाभिशब्दो रथचक्र-

द्युभ्वाद्यायतनत्वेनोक्तः परमात्मा तदन्ये एवेति संशयेऽन्ये एवेति प्राप्ते द्युभ्वाद्यायतनं परमात्मैव नान्ये जीवादयः । कुतः अमृतस्येति वाक्ये मुक्तप्राप्यत्ववचनादिति सूत्रकृतैवोक्तत्वादित्यर्थः । स्यादिदं यदि मुक्तप्राप्यत्वस्य भगवल्लिङ्गत्वं स्यात्तदेव कुत इत्यतोऽत्र महाभारतसम्मतिमाह— **मुक्तानामिति** ।। गम्यत इति गतिः गम्यत्वस्यार्चिरादिसाधारण्यात्परमेत्युक्तम् । तथाच मुक्तानामिति कर्तरि षष्ठी । मुक्तैर्मुख्यप्राप्य इत्यर्थः ।

**उ.टी.**—ननु भगवदुपासनमेव कर्तव्यं नान्यदेवतोपासनमित्येतत्कुत इत्यत आह— **अमृतस्येति** ।। अत्र पीयूषममृतं सुधेति कोशोक्तामृताश्रयत्वमुच्यते । तच्चान्यदेवतोपासनं न कार्यमित्यत्र हेतुर्न भवतीत्यतो व्याचष्टे— **अमृतस्येति**।। समुदायापेक्षमेकवचनं श्रुतौ भाष्ये च प्रयुक्तम् । भगवतो मुक्ताश्रयत्वमेव कुतः येन मुक्तस्येति व्याख्यानमित्याशंक्य भगवतो मुक्ताश्रयत्वं सूत्रसहस्रनामवचनाभ्यां समर्थयते— **मुक्तोपसृप्येत्यादिना** ।। मुक्तोपसृप्यत्वेत्यर्थः । तथा चैषः द्युभ्वाद्याश्रय आत्मा अमृतस्य मुक्तवर्गस्य सेतुरिव सेतुः । वैकुण्ठादिलोकस्थभगवत्प्रापक इति मन्त्रार्थः । तथाच द्युभ्वाद्याश्रयतयोपासनं मोक्षफलार्थम् । तच्च भगवतैव भवति । तस्यैव सर्वमुक्ताश्रयत्वेन मोक्षप्रदत्वसम्भवात् । नचान्योपासनं मोक्ष-फलकम् । तेषां मुक्ताश्रयत्वाभावेन मोक्षप्रदत्वासम्भवात् । अतो भगवदुपासनमेव कार्यं नान्यदिति भावः ।। ६ ।।

## उपनिषत्

**अरा इव रथनाभौ संहता यत्र नाड्यः ।**
**स एषोऽन्तश्चरते बहुधा जायमानः ।। ७ ।।**

**व्या.टि.**—संहताः सम्बद्धाः विश्वादिरूपेण बहुधा जायमानः ।। ७ ।।

**ध.टि.**—रथनाभौ चक्रे अरा इव यत्र नाड्यस्संहताः स एषः सर्वजीव-नियामकत्वेन सर्वजीवहृदयस्थितो विष्णुः स्वयमेक एव स्वेच्छया बहुधा जायमानः

विश्वादिरूपेण बहुधा भवन् शरीरान्तः चक्षुरादिस्थानेषु चरते चरति ।। ७ ।।

**वामन.टी.**—मुक्तामुक्तजगदाश्रयत्वं विष्णोरेवेत्यत्र ब्रह्मसूत्रं स्मृतिं च प्रमाणमाह— **अथाध्यात्ममिति** ।। स एव भगवान्सर्वधारणनियमनादिकर्तेत्याह— **अरा इवेति** ।। ७ ।।

**न.टी.**—सदृष्टान्तं द्वासप्ततिसहस्रनाड्याश्रयत्वं सर्वनियामकत्वं चाह— **अरा इति** ।। संहताः स एष भगवान् हृदये मनोनियामकतया अनिरुद्धाख्यैकरूपेण जाग्रदादिप्रवर्तकतया बहुधा विश्वादिरूपैः जायमानः स्वेच्छयाभिव्यज्यमानः चरते ।। ७ ।।

**रा.खं.**—यत्र देहस्थे हरौ रथनाभौ रथचक्रे अरा इव नाड्यः संहतास्सम्बद्धास्स एष आत्मा बहुधा विश्वादिरूपेण जायमानः प्रादुर्भवन् अन्तः शरीरान्तश्चरते सञ्चरति ।। ७ ।।

**व.टी.**—ब्रह्मण एव ज्ञातव्यत्वसिद्ध्यर्थं तस्यैव माहात्म्यान्तरमुच्यते— **अरा इव रथनाभावित्यादिना** ।। ७ ।।

**श्री.टी.**—रथनाभौ अरा इव यत्र नाड्यः संहताः सम्बद्धाः स एष सर्वजीवनियामकत्वेन सर्वजीवहृदयस्थितो विष्णुः स्वयमेक एव स्वेच्छयैव बहुधा जायमानो विश्वादिरूपेण बहुधा भवन् शरीरान्तश्चक्षुरादिस्थानेषु चरते चरतीत्यर्थः । यः सर्वज्ञः सर्वविदित्युक्तार्थम् । यस्यैष महिमा भुवि भूरादिलोके प्रकटितः यस्तमसः परस्मात् अज्ञानातीतः दुर्गोत्तमो वा । तमात्मानं पराय उत्तमपुरुषार्थाय मोक्षार्थमिति यावत् ।। ७ ।।

**उ.टी.**—पूर्वं धनुर्गृहीत्वेत्यादिना ध्यानं कर्तव्यमित्युक्तम् । तच्च गुणान्तरोपसंहारपूर्वकमोंकारार्थगुणविशिष्टत्वेनैव कार्यमित्याह— **अरा इवेति** ।। अत्र स इत्युक्तः कः । जायमान इत्युक्तोत्पत्तिश्चायुक्ता ।। तदयं मन्त्रार्थः—नाभिशब्दो रथचक्र-

मध्यमावयववाची । पिण्डिकानाभिरिति कोशात् । रथनाभौ रथचक्रमध्यमावयवे । अरा इव यत्र भगवति नाड्यः ब्रह्मनाड्यादिप्रधाननाड्यः । द्वासप्ततिसहस्र-प्रतिशाखानाड्यश्च । संहताः सङ्गताः । सनाड्याश्रयहृदयस्थो विष्णुरेषः । व्यत्ययोऽयम् । स्वेच्छया बहुधा जागरादिप्रदानार्थं विश्वादिनानारूपेण । एकधा सुप्तिकाले विश्वाद्येकीभूतप्राज्ञरूपेण च । जायमानः प्रादुर्भवन् सन् । अन्तः नेत्राद्यन्तः । चरते जागरादिप्रदानेन सर्वजीवनियमनार्थं सर्वदा चरति । एवम्भूत-गुणकं तमसः परस्तात्स्थितं अप्राकृतविग्रहं मृत्युरहितं चात्मानं हृदयस्थं विष्णुम् । पराय परब्रह्मप्राप्त्यर्थमित्यर्थः ।। ७ ।।

**आ.टी.**——रथनाभौ अराः आश्रिता यथा तथा यत्र नाड्यः संहताः सम्बद्धा स एष परमात्मा विश्वादिरूपेण बहुधा जायमानः प्रादुर्भूतः शरीरेऽन्तश्चरते तमात्मानं ॐमिति अधिकोच्चगुणरूप इति ध्यायत ध्यानं कुरुत । तथा सति तमसः अज्ञानादेः परस्तादुपरि पाराय परतीराय वः स्वस्ति । अज्ञानादिनदीं तीर्त्वा परतीरं गतस्य सुखं स्यादित्यर्थः ।। ७ ।।

**गू.टी.**——रथनाभौ रथाङ्गचक्रमध्ये अराः धारा यथाश्रितास्तथैव नाड्यो यस्मिन्संहताः सम्बद्धाः स एष हरिर्विश्वादिरूपेण बहुधा जायमानोऽन्तःशरीरे च सर्वजीवनियामकत्वेन चरते ।। ७ ।।

**भाष्यम्**

**हृदयस्थः सदा विष्णुर्बहुधा चैकधाभवत् ।**
**चरति स्वेच्छयैवान्तः सर्वजीवान्नियामयन् ।।**

**—इति प्रवृत्ते ।।**

**व्या.टी.**——परमात्मैव जाग्रत्स्वप्नसुषुप्त्यवस्थासु बहुधा जायमानो जीवः सन् शरीरान्तश्चरतीति प्रतीतिं निवारयंस्तद्वाक्यं व्याचष्टे— **हृदयस्थ इति** ।।

**ध.टि.**—— ।। **हृदयस्थ इतीति** ।। अत्र सर्वजीवान्नियामयन्सन् । अन्तर्यामि-

रूपेणेति यावत् । एकधा एकप्रकारेण सदा हृदयस्थो जीवहृदयस्थो विष्णुः स्वेच्छयैव बहुधा विश्वादिरूपेण भवन् अन्तः शरीरान्तः चक्षुरादिस्थानेषु स्वेच्छयैव चरतीति योजना ।।

**वामन.टी.**—तदभिप्रायं हृदयस्थं इत्यादिना प्रवृत्तवचनेन प्रवक्ति । नाना-नाडिभिः संहते जीवशरीरे नियामकत्वेन बहुधा व्यज्यमानः सञ्चरतीत्याह ।।

**व.टी.**—तत्र परमेश्वरस्य बहुधा जननं नाम जीवभावेनेति प्रतीतिनिरासाय यथावद्व्याख्याति— **हृदयस्थ इति** ।।

**श्री.टी.**—स एषोऽन्तश्चरते बहुधा जायमान इति वाक्यं स एष परमात्मा बहुधा जाग्रदाद्यवस्थासु बहुप्रकारेण जायमानो यो जीवस्तदात्मा सन् शरीरान्तश्चरत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे— **हृदयस्थ इति** ।। सर्वजीवान्नि-यामयन् सन् अन्तर्यामिरूपेणेति यावत् । एकधा एकप्रकारेण सदा हृदयस्थो जीवहृदयस्थो विष्णुः स्वेच्छयैव बहुधा विश्वादिरूपेण भवन् अन्तः शरीरान्तः चक्षुरादिस्थानेषु स्वेच्छयैव चरतीति योजना ।।

**उ.टी.**—अन्तश्चरणं च व्यर्थमित्याशंकापरिहाराय मन्त्रं प्रमाणेनैव व्याचष्टे— **हृदयस्थ इति** ।। अनेन तच्छब्दपरामृश्यं दर्शितम् । एकधेत्यनेन मन्त्रे बहुधेत्यत्र एकधेत्यपि ग्राह्यमिति सूचितम् ।। **भवन्निति** ।। प्रादुर्भवन्नित्यर्थः । अनेन जायमान इति व्याख्यातम् ।। **स्वेच्छयेति** ।। अनेनैषणमेषः । इषु इच्छायां भावे घञ् । सुपां सुलुगिति तृतीयायाः सुरिति सूचितम् ।। **सर्वजीवान्नियाम-यन्निति** ।। अनेनान्तश्चरणप्रयोजनमुक्तम् । स्वप्रयोजनार्थं न चरति किन्तु परप्रयोजनार्थमिति । अत्र मन्त्रे ओमित्येवेत्येवकारेण ॐकारार्थगुणपूर्णत्वादि-प्रकारेणैव ध्यानं कार्यम् । नतु निर्गुणत्वादिप्रकारान्तरेणेति सूचयति । फलेभ्यो यातीतिवत्परायेत्यत्र क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । तथाच फलान्याहर्तुमितिवत्परं प्राप्तुमित्यर्थः । तमसोऽव्यक्तात्परस्तादित्यनन्तरं स्थितमिति

मध्यमावयववाची । पिण्डिकानाभिरिति कोशात् । रथनाभौ रथचक्रमध्यमावयवे । अरा इव यत्र भगवति नाड्यः ब्रह्मनाड्यादिप्रधाननाड्यः । द्वासप्ततिसहस्र-प्रतिशाखानाड्यश्च । संहताः सङ्गताः । सनाड्याश्रयहृदयस्थो विष्णुरेषः । व्यत्ययोऽयम् । स्वेच्छया बहुधा जागरादिप्रदानार्थं विश्वादिनानारूपेण । एकधा सुप्तिकाले विश्वाद्येकीभूतप्राज्ञरूपेण च । जायमानः प्रादुर्भवन् सन् । अन्तः नेत्राद्यन्तः । चरते जागरादिप्रदानेन सर्वजीवनियमनार्थं सर्वदा चरति । एवम्भूत-गुणकं तमसः परस्तात्स्थितं अप्राकृतविग्रहं मृत्युरहितं चात्मानं हृदयस्थं विष्णुम् । पराय परब्रह्मप्राप्त्यर्थमित्यर्थः ।। ७ ।।

**आ.टी.**——रथनाभौ अराः आश्रिता यथा तथा यत्र नाड्यः संहताः सम्बद्धा स एष परमात्मा विश्वादिरूपेण बहुधा जायमानः प्रादुर्भूतः शरीरेऽन्तश्चरते तमात्मानं ओमिति अधिकोच्चगुणरूप इति ध्यायत ध्यानं कुरुत । तथा सति तमसः अज्ञानादेः परस्तादुपरि पाराय परतीराय वः स्वस्ति । अज्ञानादिनदीं तीर्त्वा परतीरं गतस्य सुखं स्यादित्यर्थः ।। ७ ।।

**गू.टी.**——रथनाभौ रथाङ्गचक्रमध्ये अराः धारा यथाश्रितास्तथैव नाड्यो यस्मिन्संहताः सम्बद्धाः स एष हरिर्विश्वादिरूपेण बहुधा जायमानोऽन्तःशरीरे च सर्वजीवनियामकत्वेन चरते ।। ७ ।।

### भाष्यम्

**हृदयस्थः सदा विष्णुर्बहुधा चैकधाभवत् ।**
**चरति स्वेच्छयैवान्तः सर्वजीवान्नियामयन् ।।**

**—इति प्रवृत्ते ।।**

**व्या.टी.**——परमात्मैव जाग्रत्स्वप्नसुषुप्त्यवस्थासु बहुधा जायमानो जीवः सन् शरीरान्तश्चरतीति प्रतीतिं निवारयंस्तद्वाक्यं व्याचष्टे— **हृदयस्थ इति** ।।

**ध.टि.**—— ।। **हृदयस्थ इतीति** ।। अत्र सर्वजीवान्नियामयन्सन् । अन्तर्यामि-

रूपेणेति यावत् । एकधा एकप्रकारेण सदा हृदयस्थो जीवहृदयस्थो विष्णुः स्वेच्छयैव बहुधा विश्वादिरूपेण भवन् अन्तः शरीरान्तः चक्षुरादिस्थानेषु स्वेच्छयैव चरतीति योजना ।।

**वामन.टी.**—तदभिप्रायं हृदयस्थं इत्यादिना प्रवृत्तवचनेन प्रवक्ति । नाना-नाडिभिः संहते जीवशरीरे नियामकत्वेन बहुधा व्यज्यमानः सञ्चरतीत्याह ।।

**व.टी.**—तत्र परमेश्वरस्य बहुधा जननं नाम जीवभावेनेति प्रतीतिनिरासाय यथावद्व्याख्याति— **हृदयस्थ इति** ।।

**श्री.टी.**—स एषोऽन्तश्चरते बहुधा जायमान इति वाक्यं स एष परमात्मा बहुधा जाग्रदाद्यवस्थासु बहुप्रकारेण जायमानो यो जीवस्तदात्मा सन् शरीरान्तश्चरत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे— **हृदयस्थ इति** ।। सर्वजीवान्नि-यामयन् सन् अन्तर्यामिरूपेणेति यावत् । एकधा एकप्रकारेण सदा हृदयस्थो जीवहृदयस्थो विष्णुः स्वेच्छयैव बहुधा विश्वादिरूपेण भवन् अन्तः शरीरान्तः चक्षुरादिस्थानेषु स्वेच्छयैव चरतीति योजना ।।

**उ.टी.**—अन्तश्चरणं च व्यर्थमित्याशंकापरिहाराय मन्त्रं प्रमाणेनैव व्याचष्टे— **हृदयस्थ इति** ।। अनेन तच्छब्दपरामृश्यं दर्शितम् । एकधेत्यनेन मन्त्रे बहुधेत्यत्र एकधेत्यपि ग्राह्यमिति सूचितम् ।। **भवन्निति** ।। प्रादुर्भवन्नित्यर्थः । अनेन जायमान इति व्याख्यातम् ।। **स्वेच्छयेति** ।। अनेनैषणमेषः । इषु इच्छायां भावे घञ् । सुपां सुलुगिति तृतीयायाः सुरिति सूचितम् ।। **सर्वजीवान्नियाम-यन्निति** ।। अनेनान्तश्चरणप्रयोजनमुक्तम् । स्वप्रयोजनार्थं न चरति किन्तु परप्रयोजनार्थमिति । अत्र मन्त्रे ओमित्येवेत्येवकारेण ॐकारार्थगुणपूर्णत्वादि-प्रकारेणैव ध्यानं कार्यम् । नतु निर्गुणत्वादिप्रकारान्तरेणेति सूचयति । फलेभ्यो यातीतिवत्परायेत्यत्र क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । तथाच फलान्याहर्तुमितिवत्परं प्राप्तुमित्यर्थः । तमसोऽव्यक्तात्परस्तादित्यनन्तरं स्थितमिति

शेषः । तदुक्तं गीताभाष्ये "तमसः परस्तादित्यव्यक्तं वै तमः परस्ताद्धि स तत इति पिप्पलादशाखायामिति" । तथाच तमसः परस्तात्स्थितं अप्राकृतविग्रहमित्यर्थः। यद्वा तमो मृत्युः । "मृत्युर्वै तमो ज्योतिरमृतमि"ति श्रुतेः । तथाच तमसः परस्तात्स्थितं मृत्युरहितमित्यर्थः ।।

## उपनिषत्

**ओमित्येव ध्यायत आत्मानं**
**स्वस्ति वः पराय तमसः परस्तात् ।। ८।।**

**व्या.टि.**——यस्य 'यः सर्वज्ञ' इत्यादेरेष महिमा भुवि भूम्यादौ प्रकटितः । तमात्मानं ध्यायत । तथा सति तमसः परस्तात्पराय वः स्वस्ति ।। ८ ।।

**ध.टि.**——जानथेत्युक्तज्ञानोपायमाह— **ओमित्येवमिति** ।। आत्मानं अशेषगुणपूर्णं मुख्यया वृत्त्या ऋगादिसर्वशास्त्रवेद्यमित्येवं जानथ । तमसः परस्तात्पराय । ज्ञानोपलक्षणमेतत् । जडप्रकृतिपरश्रीतत्त्वात् परभूतपरमात्मज्ञानाय । तथा सति एवं ध्याने सति तज्ज्ञानं भवति । तेन च परात्परज्ञानेन वः युष्माकं स्वस्ति मङ्गलं भवेदित्यर्थः ।। ८ ।।

**वामन.टी.**——भगवान् ओंकारोदितगुणैरत्युच्चो भगवानित्येवमेव परमात्मानं ध्यायत भवतां तमसः परस्तात् स्वस्ति पाराय सन्ततसुखरूपाय मोक्षायेत्यर्थः। ओंकारोदितगुणाः सार्वज्ञादय इत्यर्थः ।। ८ ।।

**न.टी.**——तद्ध्यानं विधत्ते— **ॐमिति** ।। यस्य यः सर्वज्ञः सामान्याकारेण। सर्ववित् विशेषाकारेणापि इत्यादि महिमा भुवि प्रकटितः । तमसः प्रकृतेः परस्तात् पराय अतिशयेन प्रकृतिबन्धातिक्रमणं चास्ति स्वरूपानन्दाविर्भावलक्षणमोक्षश्च स्यात् ।। ८ ।।

**रा.खं.**——जानथेत्युक्तज्ञानोपायमाह— **ओमित्येवेति** ।। आत्मानमोम् अशेषगुणपूर्णम् । मुख्यवृत्त्या ऋगादिशास्त्रवेद्यमित्येव ध्यायत । किमर्थम्? तमसः

परस्तात् पराय, ज्ञानोपलक्षणं, जडप्रकृतिपरश्रीतत्त्वात्परभूतपरमात्मज्ञानाय । एवं ध्याने सति तज्ज्ञानं भवति । तेन च परात्परज्ञानेन वो युष्माकं स्वस्ति मङ्गलं भवतीत्यर्थः ।। ८ ।।

**श्री.टी.**—ओमित्येव ध्यायत गुणपूर्णत्वेन ध्यानं कुरुत । तथा सति वो भवतां स्वस्ति मोक्षादिरूपं मङ्गलं भविष्यतीत्यर्थः ।। ८ ।।

**उ.टी.**—ॐमिति ॐमिति मन्त्रेण ॐकारार्थगुणोपसंहारपूर्वकमिति यावत् । निर्गुणत्वादिप्रकारव्यवच्छेदार्थमेवकारः । ध्यायत हे शिष्या इति योज्यम् । ध्यानफलमाह— **स्वस्ति व इति** ।। एवं सति वः नमःस्वस्तीति चतुर्थी । युष्मभ्यं स्वस्ति मङ्गलम् । अशेषानिष्टनिवृत्तिविशिष्टस्वरूपानन्दाविर्भावरूपं स्यादिति ।। ८ ।।

**गू.टी.**—एवं विश्वादिरूपमात्मानं ॐमित्योंकारवाच्यं ध्यायत । तेन ध्यानेन तमसः परस्तात् अज्ञानादि तीर्त्वा पाराय उपरि स्वस्ति सुखावस्थितिर्भवति इत्यर्थः ।। ८ ।।

## उपनिषत्

**यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ।। ९ ।।**

**व्या.टि.**—ध्यानस्थानमाह— **दिव्य इति** ।। ब्रह्मपुरे देहे । दिव्ये शरीरकोशेऽपि स्थानविशेषमाह— **व्योम्नीति** ।। व्योम्नि आकाशे ।। ९ ।।

**ध.टि.**—आत्मानं विशिनष्टि— **यः सर्वज्ञः सर्वविदिति** ।। एषः सार्वज्ञादिरूपो यस्य महिमा भुवि भूम्यादौ प्रकटितस्तमात्मानमित्यर्थः । यद्वा 'यः सर्वज्ञः स सर्ववित्' यस्यैष महिमा भुवि भूम्यादौ प्रकटितः यस्तमसः परस्तात् अज्ञानातीतः दुर्गोत्तमो वा तमात्मानं पराय उत्तमपुरुषार्थाय मोक्षार्थमिति यावत् । ओमित्येव ध्यायत । तथा सति वो भवतां स्वस्ति मोक्षादिरूपं मङ्गलं भविष्यतीत्यर्थः ।

टीकारीत्या तमसः परस्तात्परायेत्येतत्तमसोऽज्ञानात्परस्तात्परो मोक्षः तस्मा इत्यर्थकं प्रतिभाति— **दिव्य इतीति** ।। दिव्ये द्योतमाने ब्रह्मणः पुरे देहे तत्रापि व्योम्न्याकाशे एष आत्मा सम्प्रतिष्ठित इत्यर्थः ।। ९ ।।

**वामन.टी.——यः सर्वज्ञ इति** ।। एष भगवान् ब्रह्मपुरे जीवशरीरे हृदयाकाशे नित्यं प्रतिष्ठितो भवति ।। ९ ।।

**वा.टी.——**'ब्रह्मपुरे ह्येषः' इत्यत्र ब्रह्मपुरे परब्रह्मणः स्वस्य पुरस्थानीये जीवदेहे । स्वपरिवारैः सह यत्र स्थित्वा राजा राज्यं पालयति तद्धि पुरमिति भावः ।। ९ ।।

**न.टी.——**ध्यानस्थानमाह— **दिव्य इति** ।। दिव्ये भगवत्क्रीडास्थाने ब्रह्मपुरे देहे व्योम्नि आकाशे एष आत्मा परमात्मा सम्प्रतिष्ठितः । अन्ने शरीरे हृदयं सन्निधाय अधिष्ठाय ।। ९ ।।

**रा.खं.——**आत्मानं विशिनष्टि— **यस्सर्वज्ञः सर्वविदिति** ।। एष सार्वज्ञ्यादिरूपो यस्य महिमा भुवि भूम्यादौ प्रकटितः तमात्मानमित्यर्थः । कुत्रत्य आत्मा ध्येय इत्यत आह— **दिव्य इति** ।। ब्रह्मपुरे देहे दिवि भवे दिव्ये, व्योम्नो द्युसम्बन्धित्वाद्दिव्य इत्युक्तिः, व्योम्नि देहस्थाकाशे एष आत्मा प्रतिष्ठितः ।। ९ ।।

**स.टी.——**अस्य यः सर्वज्ञ इत्याद्येष महिमा भुवि भूम्यादौ प्रकटितः । पराय मोक्षाय । स्वस्ति वः स्वस्ति वर्तयितारं स्वस्त्युपपदे 'वृतु वर्तन' इत्यस्माद्धातोरन्तर्णीतण्यर्थाड्डुसिः । अथवा परमेश्वरस्वरूपं पूर्वमुपपाद्य तस्योपासनं विधत्ते । तमसः परस्तात्प्रकृतेर्विलक्षणम् । यश्च सर्वज्ञः यस्यायं महिमा भुवि प्रकटितः । तमात्मानं पराय मोक्षाय ध्यायत ओमित्येवं वः स्वस्ति । क्व च ध्यायेत्परमात्मानमित्यत उच्यते— **दिव्य इति** ।। ब्रह्मपुरे देहे व्योम्नि एष आत्मा मनोमयः ज्ञानमयः प्राणशरीरनेता । अन्ते प्राणिनामुपजीवनर्निमित्तप्रतिष्ठितः हृदयं सन्निधाय अधिष्ठाय स्थितः ।। ९ ।।

**श्री.टी.——**तद्ध्यानस्थानमाह— **दिव्य इति** ।। दिव्ये द्योतमाने ब्रह्मणः पुरे

देहे तत्र हि व्योम्नि आकाशे एष आत्मा सम्प्रतिष्ठितः ।। ९ ।।

**उ.टी.**—ननु हृदयस्थो बहुधैकधा च भवंश्चरतीत्युक्तम् । तत्किं क्वचित्प्रदेशे सम्यक् स्थित्वैव प्रदेशान्तरे नानाभूतश्चरतीत्यत आह— **यः सर्वज्ञ इति** ।। यः सर्वज्ञः सर्वैर्विन्दतीति सर्ववित् । 'विद्लृ लाभ' इत्यस्माद्विदभिदच्छिदेत्यादिना क्विप् । प्राप्तसकलकामः । यस्य एषः जागरादिप्रदत्वरूपो महिमा । भुवि प्रसिद्धः । स्वर्गादिस्थानां स्वप्राद्यभावात् । एष आत्मा विष्णुर्ब्रह्मपुरे देहे । तत्रापि दिव्ये दिवि भूताकाशे भवं दिव्यम् । भूताकाशात्मकमिति यावत् । दहरोऽस्मिन्नन्तरा आकाश इत्यत्राकाशशब्देन भूताकाशो विवक्षित इति छान्दोग्यभाष्ये हृदयाकाशस्य भूताकाशात्मकत्वाभिधानात् । तस्मिन् व्योम्नि आकाशे सम्प्रतिष्ठितः । सर्वदाविर्भूततया प्रतिष्ठित इत्यर्थः ।। ९ ।।

**आ.टी.**—यस्यात्मनो जगत्सर्जनादिकारणमहिमा भूम्यादौ प्रकटितः यश्च सर्वज्ञः सर्वलाभवान्पूर्णः स एषः परमात्मा ब्रह्माधिष्ठानब्राह्मणादिशरीरे तत्रापि दिव्ये वायौ तत्रापि हृदयाकशे वर्तते ।। ९ ।।

**गू.टी.**—तपसा चीयत इति यत्तपस्तज्ज्ञानमुक्तं तदस्तीत्याह— **य इति** ।। यज्ञरूपो यद्ज्ञानयुक्तः स सर्ववित् सर्वदा विद्यमानः सर्वज्ञः सदा सर्वज्ञ इत्यर्थः । 'विदि सत्तायाम्' । यद्वा सामान्यविशेषाकाराभ्यां सर्वज्ञः सर्ववित् सर्वलाभवान्वा 'विद्लृ लाभे' । यस्य चैष पूर्वोक्तो महिमा भुवि दिवि च प्रकरितोऽस्ति । ध्यानस्थानमाह— **दिव्य इति** ।। ९ ।।

## उपनिषत्

**मनोमयः प्राणशरीरनेता**
**प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।**
**तद् विज्ञानेन परिपश्यन्ति धीरा**
**आनन्दरूपममृतं यद् विभाति　　　　।। १० ।।**

टीकारीत्या तमसः परस्तात्परायेत्येतत्तमसोऽज्ञानात्परस्तात्परो मोक्षः तस्मा इत्यर्थकं प्रतिभाति— **दिव्य इतीति** ।। दिव्ये द्योतमाने ब्रह्मणः पुरे देहे तत्रापि व्योम्न्याकाशे एष आत्मा सम्प्रतिष्ठित इत्यर्थः ।। ९ ।।

**वामन.टी.—यः सर्वज्ञ इति** ।। एष भगवान् ब्रह्मपुरे जीवशरीरे हृदयाकाशे नित्यं प्रतिष्ठितो भवति ।। ९ ।।

**वा.टी.**—'ब्रह्मपुरे ह्येषः' इत्यत्र ब्रह्मपुरे परब्रह्मणः स्वस्य पुरस्थानीये जीवदेहे । स्वपरिवारैः सह यत्र स्थित्वा राजा राज्यं पालयति तद्धि पुरमिति भावः ।। ९ ।।

**न.टी.**—ध्यानस्थानमाह— **दिव्य इति** ।। दिव्ये भगवत्क्रीडास्थाने ब्रह्मपुरे देहे व्योम्नि आकाशे एष आत्मा परमात्मा सम्प्रतिष्ठितः । अन्ने शरीरे हृदयं सन्निधाय अधिष्ठाय ।। ९ ।।

**रा.खं.**—आत्मानं विशिनष्टि— **यस्सर्वज्ञः सर्वविदिति** ।। एष सार्वज्ञ्यादिरूपो यस्य महिमा भुवि भूम्यादौ प्रकटितः तमात्मानमित्यर्थः । कुत्रत्य आत्मा ध्येय इत्यत आह— **दिव्य इति** ।। ब्रह्मपुरे देहे दिवि भवे दिव्ये, व्योम्नो द्युसम्बन्धित्वाद्दिव्य इत्युक्तिः, व्योम्नि देहस्थाकाशे एष आत्मा प्रतिष्ठितः ।। ९ ।।

**स.टी.**—अस्य यः सर्वज्ञ इत्याद्येष महिमा भुवि भूम्यादौ प्रकटितः । पराय मोक्षाय । स्वस्ति वः स्वस्ति वर्तयितारं स्वस्त्युपपदे 'वृतु वर्तन' इत्यस्माद्धातोरन्तर्णीतण्यर्थाड्डसिः । अथवा परमेश्वरस्वरूपं पूर्वमुपपाद्य तस्योपासनं विधत्ते । तमसः परस्तात्प्रकृतेर्विलक्षणम् । यश्च सर्वज्ञः यस्यायं महिमा भुवि प्रकटितः । तमात्मानं पराय मोक्षाय ध्यायत ओमित्येवं वः स्वस्ति । क्व च ध्यायेत्परमात्मानमित्यत उच्यते— **दिव्य इति** ।। ब्रह्मपुरे देहे व्योम्नि एष आत्मा मनोमयः ज्ञानमयः प्राणशरीरनेता । अन्ते प्राणिनामुपजीवननिमित्तप्रतिष्ठितः हृदयं सन्निधाय अधिष्ठाय स्थितः ।। ९ ।।

**श्री.टी.**—तद्ध्यानस्थानमाह— **दिव्य इति** ।। दिव्ये द्योतमाने ब्रह्मणः पुरे

देहे तत्र हि व्योम्नि आकाशे एष आत्मा सम्प्रतिष्ठितः ।। ९ ।।

**उ.टी.**—ननु हृदयस्थो बहुधैकधा च भवंश्चरतीत्युक्तम् । तत्किं क्वचित्प्रदेशे सम्यक् स्थित्वैव प्रदेशान्तरे नानाभूतश्चरतीत्यत आह— **यः सर्वज्ञ इति** ।। यः सर्वज्ञः सर्वैर्विन्दतीति सर्ववित् । 'विदॢ लाभ' इत्यस्माद्विदभिदच्छिदेत्यादिना क्विप् । प्राप्तसकलकामः । यस्य एषः जागरादिप्रदत्वरूपो महिमा । भुवि प्रसिद्धः । स्वर्गादिस्थानां स्वप्राद्यभावात् । एष आत्मा विष्णुर्ब्रह्मपुरे देहे । तत्रापि दिव्ये दिवि भूताकाशे भवं दिव्यम् । भूताकाशात्मकमिति यावत् । दहरोऽस्मिन्नन्तरा आकाश इत्यत्राकाशशब्देन भूताकाशो विवक्षित इति छान्दोग्यभाष्ये हृदयाकाशस्य भूताकाशात्मकत्वाभिधानात् । तस्मिन् व्योम्नि आकाशे सम्प्रतिष्ठितः । सर्वदाविर्भूततया प्रतिष्ठित इत्यर्थः ।। ९ ।।

**आ.टी.**—यस्यात्मनो जगत्सर्जनादिकारणमहिमा भूम्यादौ प्रकटितः यश्च सर्वज्ञः सर्वलाभवान्पूर्णः स एषः परमात्मा ब्रह्माधिष्ठानब्राह्मणादिशरीरे तत्रापि दिव्ये वायौ तत्रापि हृदयाकशे वर्तते ।। ९ ।।

**गू.टी.**—तपसा चीयत इति यत्तपस्तज्ज्ञानमुक्तं तदस्तीत्याह— **य इति** ।। यज्ञरूपो यद्ज्ञानयुक्तः स सर्ववित् सर्वदा विद्यमानः सर्वज्ञः सदा सर्वज्ञ इत्यर्थः। 'विदि सत्तायाम्' । यद्वा सामान्यविशेषाकाराभ्यां सर्वज्ञः सर्ववित् सर्वलाभवान्वा 'विदॢ लाभे' । यस्य चैष पूर्वोक्तो महिमा भुवि दिवि च प्रकरितोऽस्ति । ध्यानस्थानमाह— **दिव्य इति** ।। ९ ।।

## उपनिषत्

**मनोमयः प्राणशरीरनेता**
**प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।**
**तद् विज्ञानेन परिपश्यन्ति धीरा**
**आनन्दरूपममृतं यद् विभाति** ।। १० ।।

**व्या.टी.——मनोमयो ज्ञानमय इति** ।। अन्ने शरीरे । हृदयं सन्निधाय अधिष्ठाय स्थितः । तस्य दर्शनायोग्यत्वे तद्ध्यानं व्यर्थमिति न मन्तव्यमित्याह— **तदिति** ।। १० ।।

**ध.टि.——**मनोमयो ज्ञानमय इति अर्थं वदन्नेव प्रतीकं गृह्णाति । मनोमयः प्राणशरीरनेता इन्द्रियशरीरयोर्नियामकोऽयमात्मा भगवान् अन्ने अन्नविकारे शरीरे हृदयं दहराकाशमधिष्ठाय प्रतिष्ठित इत्यनेन शारीराकाशविशेषहार्दाकाश-रूपस्थलोक्तिः ।। **तदितीति** ।। यदानन्दरूपमानन्दात्मकशरीरं यदमृतं यच्च सदा विभाति । स्वप्रकाशं सत् वर्तते । तद् ब्रह्म धीराः ध्यानपरिपाकवन्तो विज्ञानेन 'विज्ञानमात्मयोग्यं स्यात्' इति वचनादात्मयोग्यज्ञानेन विज्ञानशब्द-वाच्यचतुर्मुखानुग्रहेणेति वा परिपश्यन्ति विषयीकुर्वन्ति । अपरोक्षीकुर्वन्ति चेत्यर्थः ।। १० ।।

**वामन.टी.——**स एवान्ये प्रतिष्ठितो हृदयं प्रविश्य प्राणादीन् प्रवर्तयति ।।

**वा.टी.——**देहस्थितजीववद्भगवतोऽज्ञानादिदोषलेपो नास्तीति भावेनोक्तम् ।। **मनोमय इति** ।। सम्पूर्णज्ञान इत्यर्थः । किं प्रयोजनमित्यत उक्तम् ।। **प्राणशरीरनेतेति** ।। प्राणैरिन्द्रियैः करणैः सह जीवशरीरं श्रवणदर्शनस्पर्शनघ्राणना-स्वादनाभिलापग्रहणगमनरमणोत्सर्गाख्यव्यापारेषु नियन्तेत्यर्थः । अन्नेऽन्नमये देहे हृदयं मनस्सन्निधायाधिष्ठाय मनो यत्र तिष्ठति तत्र तिष्ठतीत्यर्थः । अन्नपदेन जीवैर्भुक्तान्नपानादीनां च भगवानेव वैश्वानररूपेण पाचकः, तद्रसेन शरीरपोषकश्चेति सूचितम् । विज्ञानेन 'विः पक्षिपरमात्मनोः' इति वचनाद्विष्णुविषयकश्रवणमनन-ध्यानाख्यज्ञानेनेत्यर्थः । धीराः यमनियमप्राणायामादिना पापपुरुषनिर्दहने समर्थाः । परिपश्यन्ति ब्रह्माद्याः परितः सर्वत्र पश्यन्ति, अन्ये परितः अग्नौ, हृदि, प्रतिमायां वा पश्यन्ति । कथं पश्यन्तीत्यत उक्तम्— **आनन्दरूपमिति** ।। ज्ञानमयत्वस्य प्रागुक्तत्वाज्ज्ञानानन्दपदोपलक्षितस्वयोग्यगुणपूर्णतया अनाद्यनन्तकालेष्वपि देहवियोगाख्यमरणरहिततया च पश्यन्ति । तत्र विलक्षणदेहवत्त्वाख्योपपत्ति-

सूचनायानन्दरूपमित्युक्तम् । विभाति विशेषेण भातीत्युक्त्यानन्तसूर्यसमदीप्तिमत्त्वं सूचितम् ।। १० ।।

**न.टी.**——मनोमयः ज्ञानरूपः । प्राणशरीरनेता इन्द्रियदेहप्रवर्तकः सन् प्रतिष्ठितः । तस्य दर्शनायोग्यत्वे किं ध्यानेनेत्यत आह— **तदिति** ।। यत् आनन्दरूपममृतं भगवत्स्वरूपं विभाति तत् विज्ञानेन शास्त्रजन्यश्रवणादिना धीराः दृढतत्त्वज्ञानाः परिपश्यन्ति ।। १० ।।

**रा.खं.**——शरीराकाशेऽपि हृदयरूपस्थलविशेषमाह— **मनोमय इति** ।। ज्ञान-प्रचुरः पूर्णज्ञान इत्यर्थः । प्राणशरीरनेता प्राणानां पञ्चवायूनां सर्वेन्द्रियाणां च शरीरस्य च नेता प्रेरकः । एतेन देहे तस्य स्थितौ कृत्यं दर्शितम् । प्राणादिनेतृत्वं चाज्ञस्य न युक्तमित्यतो मनोमय इत्युक्तिः । अन्ने अन्नविकारे देहे, कार्यकारण-योरभेदोपचारात् । हृदयं सन्निधाय अधिष्ठाय प्रतिष्ठितः स्थितः । तस्य दर्शनायोग्यत्वे ध्यानं व्यर्थमित्यत आह— **तद्विज्ञानेनेति** ।। यदानन्दरूपममृतं विभाति । 'अतोऽनन्तेन तथाहि लिङ्गम्' इति सूत्रोक्तदिशाऽव्यक्तैकस्वभावमप्यचिन्त्या-द्भुतशक्त्या विशेषेण भाति आविर्भवति । तद्रूपं धीराः पटुतरश्रवणमनन-निदिध्यासनवासनावासितान्तःकरणजन्येन विज्ञानेन परिपश्यन्ति विषयी-कुर्वन्तीत्यर्थः । तथाच सूत्रं 'प्रकाशश्च कर्मण्यभ्यासात्' इति ।। १० ।।

**श्री.टी.**——देहाकाशेऽपि स्थानविशेषमाह— **मनोमय इति** ।। ज्ञानमयः प्राणशरीरनेता इन्द्रियशरीरयोर्नियामकोऽयमात्मा भगवान् अन्ने अन्नविकारे शरीरे हृदयं देहाकाशं सम्यक् निधाय अधिष्ठाय प्रतिष्ठितः प्रकर्षेण स्थितः । तस्य दर्शनायोग्यत्वात्तद्ध्यानं व्यर्थमिति नाशंकनीयमित्याह— **तदिति** ।। यदानन्द-रूपमानन्दात्मकशरीरं यदमृतं यच्च सदा विभाति । स्वप्रकाशं सद्वर्तते । तद् ब्रह्म धीराः ध्यानपरिपाकवन्तः विज्ञानेन विज्ञानमात्मयोग्यं स्यादिति वचना-दात्मयोग्यज्ञानेन परिपश्यन्ति विषयीकुर्वन्तीत्यर्थः । यद्वा विज्ञानशब्दवाच्य-चतुर्मुखेन तदनुग्रहेणेति यावत् । परिपश्यन्ति अपरोक्षीकुर्वन्तीत्यर्थः ।। १० ।।

**उ.टी.**—नन्वेवं तर्हि विष्णुर्देहे कस्मिंश्चिदवकाशविशेषे वर्तत इति प्राप्तम् । तथाच हृदयस्थत्वभङ्ग इत्याशंकां परिहरन् ध्यानेन ब्रह्मापरोक्षज्ञानं भवतीत्याह-– **मनोमय इति** ।। अत्र यत्तच्छब्दावध्याहार्यौ । यो हृदयं सन्निधाय सम्यगाश्रित्य मनोमयः मयतेऽसाविति मयः । अयवयपयमयेत्यादि दण्डकपठितान्मयते पचाद्यच् । धातूनामनेकार्थत्वात्प्रेरक इत्यर्थः । मनसो मयः मनोमयः । प्राणशरीर-नेता प्राणानामिन्द्रियाणां शरीरस्य च नेता प्रेरकः । सः हृदयस्थो विष्णुः । हृदयं सन्निधाय स्थिते व्योम्नीत्यनुवर्तते । हृदयाकाशे । अन्नशब्दो मर्त्यवाची । यदन्नेनातिरोहतीति मन्त्रव्याख्याने तथैवोक्तेः । तथाच हृदयावकाशस्थिते अन्ने मर्त्ये प्रतिष्ठित इति योजना । यथा मन्दिरे मञ्जूषा तत्र मालास्तीत्यभिप्रायेण मन्दिरे मणिमालेत्युच्यते । तथा हृदयस्थव्योम्नि जीवः तत्र बिम्बरूपो विष्णुरस्ती-त्यभिप्रायेण व्योम्न्यात्मा सम्प्रतिष्ठित इत्युक्तम् । एवं हृदये व्योम । तत्रोक्तरीत्या विष्णुरिति भावेन हृदयस्थो विष्णुरुच्यत इति भावः । तदनेनोक्तशंकानिरासः ।। **तद्विज्ञानेनेति** ।। धिया रमन्त इति धीराः श्रवणमनन-पूर्णाः । विज्ञानेन स्वस्वयोग्यध्यानेन । यद्ब्रह्म आनन्दरूपं आनन्दात्मकाकारविशिष्टम् । रूपं स्वभावे सौन्दर्ये आकारश्लेषयोरपीति रूपशब्दस्याकारवाचित्वावगमात् । अत एवामृतं स्वरूपतो देहतश्च नाशरहितं विभाति स्वतः प्रकाशते । नित्याविर्भूत-रूपमिति यावत् । तद्ब्रह्म परिपश्यन्तीत्यन्वयः । अत्र साक्षात्कारविषयदर्शनार्थ-मानन्दरूपमित्याद्युक्तम् ।। १० ।।

**आ.टी.**—मनोमयः ज्ञानरूपः स्वेच्छाधीनप्रवृत्तिर्वा प्राणानां शरीराणां च नियामकः अन्नजन्यदेहे वा अन्ने तदर्थं तत्पाकार्थं हृदयं प्राप्य वैश्वानररूपेण वर्तते । आनन्दरूपं आनन्दशरीरं नित्यं प्रकाशते । तदेतद्ब्रह्म विज्ञानेन चतुर्मुखप्रसादेन ज्ञानिनस्सम्यक्पश्यन्ति ।। १० ।।

**गू.टी.**—लोकविलक्षणे ब्रह्मपुरे वायुशरीरे व्योम्न्याकाशे आत्मा सदा सन्निहितः । किञ्चान्नेऽन्नजन्यमानुषशरीरे हृदयं सन्निधाय मनोमयो ज्ञानरूपः प्राणशरीरनेता ।

तयोर्नियामकः सन् तिष्ठति । तस्य दर्शनायोग्यत्वे तद्ध्यानं व्यर्थमित्यत आह-
– **तदिति** ।। आनन्दः रूपं शरीरं यस्य तदानन्दरूपमत एवामृतं नित्यं यच्च विभाति प्रकाशते तद्ब्रह्म धीरा ध्यानस्था विज्ञानेनापरोक्षेण परिपश्यन्ति विषयीकुर्वन्ति ।। १० ।।

## उपनिषत्

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।। ११ ।।**

**व्या.टि.**—तद्दर्शनेन किं भवतीत्यतः संसारकारणाविद्याग्रन्थ्यादिरपगच्छतीत्याह-
– **भिद्यत इति** ।। ११ ।।

**ध.टि.**— ।। **भिद्यत इतीति** ।। परा उत्तमा ब्रह्माद्या अवरा यस्मादसौ परावरस्तस्मिन्भगवति दृष्टे सति अस्यापरोक्षज्ञानिनः कर्माणि अप्रारब्धानि क्षीयन्ते भस्मीभवन्ति । पश्चात् हृदयग्रन्थिरविद्या लिङ्गशरीरमिति यावत् । भिद्यते विदारणं भवति । नश्यतीति यावत् । तत्प्रयुक्ताः सर्वे संशयाश्छिद्यन्ते इत्यर्थः ।। ११ ।।

**वामन.टी.**—तस्मिन्विज्ञानेन परिदृष्टे हृदयग्रन्थिशरीरं लिङ्गं भिद्यते । बन्धककर्माणि च तस्य क्षीयन्ते ।। ११ ।।

**वा.टी.**—तद्दर्शनफलमाह ।। **भिद्यत इति** ।। हृदयग्रन्थिपदेन ग्रथि बन्धन इति धातोः चक्षुःप्रवृत्तिप्रतिबन्धकपटलवदनादिकालमारभ्य परमात्मदर्शने जीवस्य स्वरूपदर्शने च प्रतिबन्धकीभूतदर्शनकरणजीवमनोमालिन्यकर्त्री माया गृह्यते । भेदनं च परमात्मदर्शनप्रतिबन्धकमायाया अपसरणं, जीवस्वरूपप्रतिबन्धिकायाश्च नाशः । कर्माण्यप्रारब्धानि । अत एवात्र सर्वपदाप्रयोगः । परा ब्रह्माद्या अवरा यस्मात्सः परावरः । नतु परावरस्वरूप इति परकीयोऽर्थः । नीचोच्चभावस्यैकस्मिन्नसम्भवेन विरोधात् । सर्वोत्तमतया भगवद्दर्शनं च मोक्षहेतुः, न त्वैक्यज्ञानमिति भावः ।। ११ ।।

**न.टी.**——तेन जायमानफलमाह— **भिद्यत इति** ।। श्रवणेन हृद्गताविद्याग्रन्थिः भिद्यते अपगच्छति । मननेन सर्वसंशयाः छिद्यन्ते नश्यन्ति । ध्यानेन परा उत्तमा अवरा यस्य तस्मिन् परावरे तस्मिन्परमात्मनि दृष्टे अपरोक्षीकृते सति अस्य च अपरोक्षज्ञानिनस्तु सर्वकर्माणि क्षीयन्ते । संञ्चितागामिसर्वपापविनाशाश्लेषवुपयान्ति ।। ११ ।।

**रा.खं.**——तद्दृष्टेः फलमाह— **भिद्यत इति** ।। परा अपि ब्रह्मादयोऽवरा यस्मात्स परावरः तस्मिन्परावरे तस्मिन्सर्वोत्तमे तस्मिन्नानन्दरूपे हरौ दृष्टे सति हृदयग्रन्थिः अविद्यातन्मूलरागद्वेषदुःखादिरूपो बन्धो भिद्यते अपयाति । अज्ञानमूलास्सन्देहविपर्ययाश्चापगच्छन्ति । अस्यापरोक्षज्ञानिनः कर्माणि सञ्चितागामीन्यप्रारब्धानि कर्माणि क्षीयन्ते । सञ्चितानां क्षयो नाशः । आगामिनामश्लेषः । तथाच सूत्रं 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति ।। ११ ।।

**स.टी.**——तद्दर्शनस्य फलम्— **भिद्यत इति** ।। ११ ।।

**श्री.टी.**——तदपरोक्षज्ञानजन्यं फलमाह— **भिद्यत इत्यादिना** ।। परा उत्तमा ब्रह्माद्या अवरा यस्मादसौ परावरस्तस्मिन्भगवति दृष्टे सति । अस्यापरोक्षज्ञानिनः कर्माणि अप्रारब्धानि क्षीयन्ते भस्मीभवन्ति । पश्चाद्धृदयग्रन्थिरविद्या लिङ्गशरीरमिति यावत् । भिद्यते विदीर्णं भवति नश्यतीति यावत् । तत्प्रयुक्ताः सर्वे संशयाश्छिद्यन्त इत्यर्थः ।। ११ ।।

**उ.टी.**—एवं ध्यानेन ब्रह्मसाक्षात्कारो भवतीत्युक्तम् । ततः किं भवतीत्यत आह— **भिद्यत इति** ।। मन्त्रे भिद्यत इति कर्म कर्तरि लकारः । भिद्यते काष्ठं स्वयमेवेतिवत् । एवं छिद्यन्ते क्षीयन्त इत्यत्रापि बोध्यम् । हृदयग्रन्थिरविद्या । अयतेऽसावित्ययः । पचाद्यच् । हृदि अयः हृदयः । सप्तमीति योगविभात्समासः। ततश्च जीवो विष्णुश्च तदर्थः । ग्रन्थिशब्दो बन्धकवाची । चौरादिकात् ग्रन्थबन्धन इत्यस्मात्करणे औणादिके डप्रत्यये कृते उक्तार्थलाभात् । ततश्च हृदयस्य जीवस्य

विष्णोश्च ग्रन्थिः बन्धिकेति कृते हृदयग्रन्थिपदादविद्या लभ्यते । स्वभावाज्ञान-वादस्येत्यनुव्याख्यानसुधायामज्ञानस्य जीवेश्वरोभयावरकत्व-प्रतिपादनात् । अत एव सुधायां हृदयग्रन्थिरविद्येति व्याख्यातम् । अविद्या नाम सत्त्वादिगुणविशिष्ट-मूलप्रकृतिः । द्रव्यं कर्म चेत्यनुव्याख्यानसुधायां गुणविशिष्टप्रकृतेर्विद्याविरोधित्वेना-विद्यात्वाभिधनात् । तद्भेदो नाम तद्ध्वंसः । मूलप्रकृतेर्नित्यत्वेऽपि तस्याः उक्तो यो गुणविशिष्टाकारः तस्य श्रुत्यादिबलेन ध्वंसाङ्गीकारे दोषाभावात् । अत एव सुधायामनादेः कीदृशो विनाशः इत्याशंक्य स्वरूपध्वंस एवेत्युक्तम् । प्रागविद्याग्रन्थिं विकिरतीत्यत्र जीवस्याविद्यया सह यो ग्रन्थिस्तस्य शिथिलीभाव-लक्षणो नाशः श्रवणेन भवतीत्युक्तम् । अत्र त्वविद्याया एवापरोक्षज्ञानेन ध्वंसो भवतीत्युच्यत इति महान् भेदः । संशया इत्यत्र संशयपदं बन्धार्थकम् । संशयो न संशयः । संपूर्वाच्छीङो भावेऽजिति सूत्रेणाच्प्रत्ययः । धातूनामनेकार्थत्वा-च्छीङो बन्धार्थकत्वम् । ततश्च संशया इत्यस्य बन्धा इत्यर्थः । ते च बहवः अविद्याबन्धः, लिङ्गदेहबन्धः, परमाच्छादकप्रकृतिबन्धः, कामक्रोधादिबन्धः, कर्मबन्धश्चेति । तत्राविद्याबन्धकर्मबन्धयोर्नाशस्यैतन्मन्त्रे पृथगुच्यमानत्वात् तदुभय-व्यतिरिक्तबन्धसंग्रहाय सर्वेति संशयविशेषणम् । तस्मिन्दृष्ट इत्यनेन दृष्ट्या प्रसन्नः परमेश्वर एव सर्वान्बन्धान्विनाशयतीति सूच्यते । तच्चोक्तमनुव्याख्याने—

यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृत् ।
एवं दृष्टः स भगवान् कुर्याद्बन्धविभेदनम् ।।

ततश्चायं मन्त्रार्थः—परा उत्कृष्टा रमाद्याः अवरा अपकृष्टा यस्मात्स तथोक्तः । परावरे तस्मिन्नुक्तलक्षणे भगवति दृष्टे सति । अस्यापरोक्षज्ञानिनः हृदयग्रन्थिरविद्या। भिद्यते विनश्यति ।। **छिद्यन्ते सर्वसंशया इति** ।। सर्वे सकलाः संशयाः लिङ्गदेहादिबन्धाः छिद्यन्ते विनश्यन्ति । कर्माणि च सञ्चितागामिप्रारब्धानि क्षीयन्ते । अत्र क्षयो नाम सञ्चितानां नाशः । आगामिनामश्लेषः । प्रारब्धानां तु फलह्रास इति विवेक्तव्यम् । ब्रह्मसाक्षात्कारभोगाभ्यां सर्वकर्मक्षये सति ज्ञानिनोऽर्चिरादिमार्गेण सान्तानिकलोकं प्रति गच्छन्ति । तदा मध्ये सर्वैरपि

ज्ञानिभिः शिंशुमारं नमस्कृत्यैवोत्तरत्र गन्तव्यम् । तद्विश्वनाभिं त्वभिपद्येत्युपक्रम्य नमस्कृतं ब्रह्मविदामुपैतीति द्वितीयस्कन्धोक्तेः ।

अशेषजगदाधारः शिंशुमारो हरिः परः ।
सर्वे ब्रह्मविदो नत्वा तं यान्ति परमं पदम् ।। इति स्मृतेश्च ।।

नमस्कारो नाम न करशिरःसंयोगादिकम् । अतिप्रसङ्गात् । किन्तु मनोवृत्तेस्तत्प्रवणता । "मनोवृत्तेस्तत्प्रवणता हि वन्दनमि"ति सुधोक्तेः ।। ११ ।।

**आ.टी.**——तत्फलमाह— **भिद्यत इति** ।। पराः ब्रह्मादयो यस्मादवरास्तस्मिन्परावरे ब्रह्मणि साक्षात्कृते सति हृदयग्रन्थिरविद्या तज्जन्याः सर्वतत्त्वविषयाः संशया अस्य द्रष्टुः कर्माणि अप्रारब्धानि । भिदॢ विदारणे छिदिर् द्वैधीकरणे, क्षि क्षये ।। ११ ।।

**गू.टी.**——दर्शनफलमाह— **भिद्यत इति** ।। परा ब्रह्मादयः अवरा यस्मात्स परावरः तस्मिन्हरौ दृष्टे सति हृदयग्रन्थिः मनोमूलमविद्या भिद्यते । परापरतत्त्वविषयाः संशयाश्छिद्यन्ते । अस्य पूर्वकर्माणि क्षीयन्ते च ।। ११ ।।

## भाष्यम्

**परा अप्यवरा यस्मात्स हि विष्णुः परावरः ।**

**व्या.टी.**——ब्रह्माद्यात्मकत्वेन परेऽस्मदाद्यात्मकत्वेनावर इत्यन्यथाप्रतीतिं वारयंस्तत्पदं व्याचष्टे— **परा इति** ।।

**ध.टि.**——।। **परा इतीति** ।। अत्र सर्वजीवोत्तमाः ब्रह्माद्याः जीवा अपीत्यर्थः

**वामन.टी.**—अत्र परावर इति विशेषणं परा अपीत्यादिप्रवृत्तवाक्येनैव व्याख्याति ।।

**व.टी.**——परावर इत्यस्य ब्रह्माद्यात्मकत्वेन परे । जीवाद्यात्मकत्वेनावरे चेत्यन्यथार्थनिरासायार्थमाह— **परा इति** ।।

**श्री.टी.**——भिद्यत इति मन्त्रे तस्मिन्दृष्टे परावर इत्येतद्ब्रह्मादिदेवात्मकत्वेन परेऽस्मदाद्यात्मकतयाऽवरे तस्मिन् हरौ दृष्टे सति अस्य कर्माणि क्षीयन्ते इत्यन्यथाप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे— **परा अपीति** ।। सर्वजीवोत्तमा ब्रह्माद्या देवा अपीत्यर्थः ।।

**स.टी.**——परा अप्यवरा यस्मात्स हि विष्णुः परावरः तस्मिन् ।।

**उ.टी.**——अत्र मन्त्रे तस्मिन्दृष्टे परावर इत्यनेन भगवतः परावरात्मकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय परावरपदं व्याचष्टे— **परा अपीति** ।। रमाब्रह्मादय इत्यर्थः । हिशब्दः तस्मादित्यर्थे । नन्वत्र कोश इत्यभिव्यापकाधिकरणे सप्तमी । ततश्च ब्रह्माण्डव्यापिभगवद्रूपमुच्यत इति प्राप्तम् । नच सर्वोपास्यम् । सर्वेषां तदनधिकारात् ।।

## उपनिषत्

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।**
**तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।। १२ ।।**

**व्या.टि.**——एवं शरीरे उपास्तिस्थलमुक्त्वा ब्रह्माण्डमध्यस्थितसूर्याख्योपास्तिस्थलमाह— **हिरण्मय इति** ।। कोशे ब्रह्माण्डे ।। १२ ।।

**ध.टि.**——।। **हिरण्मय इतीति** ।। हिरण्मये कोशे ब्रह्माण्डे तन्मध्यस्थिते हिरण्मये तद्वत्पीतरूपोपेते सूर्यमण्डले स्थिते परे वरुणाद्युत्तमे सूर्ये स्थित्वा तपनक्रियां कुर्वाणमिति शेषः । यत्तद्ब्रह्म विरजं रजआदिगुणशून्यम् । निष्कलं षोडशकलात्मकदेहरहितम् । अत एव शुभ्रं शुद्धम् । ज्योतिषां ज्योतिः ज्योतिष्ट्वप्रदम् । पूर्वे आत्मविदः सूर्यान्तर्गतभगवदुपास्तिप्रकारविदो ज्ञानिनो विदुः । यद्यस्मात्तत्तस्माद्भवद्भिः तत्र तथोपास्तिः कर्तव्येति भावः । टीकायां सूर्यादिप्रकाशप्रकाश्यमित्यनन्तरं दृष्टमिति शेषः ।। १२ ।।

**वा.टी.**——कोशे ब्रह्माण्डे तदन्तरित्यर्थः । परे हिरण्मये स्वर्णमये सूर्यमण्डले विरजः रजःपदोपलक्षितगुणत्रयविधुरं निष्कलं प्राकृतमनआदिषोडशकलाविधुरम्।

**न.टी.**——एवं शरीरे हृदये उपास्तिस्थलमुक्त्वा ब्रह्माण्डे सूर्ये च भगवदुपास्तिस्थलमाह— **हिरण्मय इति** ।। सुवर्णात्मके परे उत्तमे कोशे ब्रह्माण्डे ज्योतिषां ज्योतिः । सूर्यप्रकाशानां पदार्थप्रकाशकत्वशक्तिप्रदत्वेन सूर्ये विद्यमानं विरजमप्राकृतं निष्कलं जडमनआदिकलारहितम् । शुभ्रं शुद्धम् । तत् वेदे प्रसिद्धम् । यत् परब्रह्म शास्त्रतः परमात्मविदः विदुरुपासते ।। १२ ।।

**रा.खं.**——एवं देहे भगवदुपासनास्थलमुक्त्वा ब्रह्माण्डमध्यस्थसूर्यरूपं चोपास्तिस्थलमाह— **हिरण्मय इति** ।। हिरण्मये सुवर्णात्मके परे उत्तमे कोशे ब्रह्माण्डे विरजं विरजस्कं रजोगुणोपलक्षितसत्त्वादिगुणहीनं निष्कलं षोडशकलारहितं अत एव शुभ्रं शुद्धं ज्योतिषां तेजोरूपाणां ज्योतिः प्रकाशकत्वप्रदं, सर्वज्योतिरपेक्षयाऽतिशयितमहाप्रकाशरूपमिति वाऽर्थः "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलमि"त्यादिवत्, आदित्यस्थं ब्रह्म आत्मविदो विदुः जानन्ति । अतस्तत्राऽऽत्मानं ध्यायीतेति भावः ।। १२ ।।

**स.टी.**——सूर्यमण्डलं चोपास्यस्थलमाह— **हिरण्मय इति** ।। कोशे ब्रह्माण्डे स्थिते हिरण्मये सूर्यमण्डले ।। १२ ।।

**व.टी.**——'स एषोऽन्तश्चरते बहुधा जायमान' इत्यनेन हृदन्तर्ब्रह्मोपास्तिमुक्त्वा सूर्यमण्डलेऽपि तदुपास्तिरुच्यते— **हिरण्मये परे कोश इति** ।।

**श्री.टी.**——एवं शरीरे उपासनास्थानमुक्त्वा ब्रह्माण्डमध्यस्थसूर्यमण्डलान्तर्गते सूर्याख्यस्थाने चोपास्तिप्रकारमाह— **हिरण्मय इति** ।। हिरण्मये कोशे ब्रह्माण्डे तन्मध्यस्थिते हिरण्मये तद्वत्पीतरूपोपेते सूर्यमण्डले स्थिते परे वरुणाद्युत्तमे सूर्ये स्थित्वा तपनक्रियां कुर्वाणमिति शेषः । यत्तद्ब्रह्म विरजं रजआदिगुणशून्यं वर्णव्यत्यासेन विजरं जराशून्यमिति वा । निष्कलं षोडशकलात्मकदेहरहितं

अत एव शुभ्रं शुद्धं ज्योतिषां सूर्यादिज्योतिषां ज्योतिष्ट्वप्रदं पूर्वे आत्मविदः सूर्यान्तर्गतभगवदुपास्तिप्रकारविदो ज्ञानिनो विदुर्यस्मात्तस्माद्भवद्भिरपि तत्र तथोपास्तिः कर्तव्येति भावः ।। १२ ।।

**उ.टी.**—अतः शिंशुमारे मनोवृत्तिप्रावण्यार्थं शिंशुमारनिर्धारणाय तत्स्वरूपं वदन्नेव तज्ज्ञानं विधत्ते— **हिरण्मय इति** ।। ततश्चायं मन्त्रार्थः—हिरण्मये सुवर्णविकारे । परे अत्युत्कृष्टे । कोशेऽण्डे । पेशी कोशो द्विहीनेऽण्डमित्यमरोक्तेः । ब्रह्माण्डमध्य इति यावत् । विरजं दोषरहितम् । आकारान्तोऽपि रजशब्दोऽस्ति विरजानदीमिति प्रयोगात् । रजं तु रजसा सहेति द्विरूपकोशाच्च । तेन विरजमिति युक्तम् । निष्कलं षोडशकलाविशिष्टशरीररहितं शिंशुमाराख्यं ब्रह्म वर्तत इति शेषः । तत् शिंशुमाराख्यं ब्रह्म । शुभ्रं शुक्लम् । ज्योतिषां सूर्यादीनां ज्योतिः प्रकाशकम् । एवं शिंशुमारस्वरूपं निरूप्य तज्ज्ञानमवश्यं सम्पादनीयमिति सोपपत्तिकमाह— **तद्यदिति** ।। यद्यस्मात् पूर्वे आत्मविदः ब्रह्मापरोक्षज्ञानिनः शिंशुमारं विदुर्ज्ञातवन्तः । तत्तस्मादाधुनिका अप्यात्मविदः शिंशुमारं विदुः विद्युरिति यावदिति । ततश्चायं मन्त्रार्थः— तत् परावरं ब्रह्म परे उत्कृष्टे हिरण्मये कोशे पात्रे सूर्यमण्डल इति यावत् । स्थितमिति शेषः । अनेन ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण इत्यादि गायत्रीमन्त्रजपाङ्गध्यानश्लोकोक्तसूर्यमण्डल-मध्यस्थत्वं संगृहीतम् । विरजं निष्कलमिति प्राग्वद्व्याख्येयम् ।। **शुभ्रमिति**।। शुभे समीचीने विरिञ्चे रमत इति शुभ्रम् । अनेन सरसिजासनसन्निविष्ट इत्युक्तस्य संग्रहः । शुभैः केयूरादिविभूषणैः रमत इति कृते तु उत्तरार्धोक्तस्य संग्रहः । एवं सूर्यान्तर्गतब्रह्मणो ध्येयगुणानुक्त्वा इदानीमुक्तगुणविशिष्टत्वेन ध्यानं कार्यमिति सोपपत्तिकमाह— **तद्यदिति** ।। यत् यस्मात् । आत्मविदः प्राचीनाः सूर्यान्त-र्गतनारायणज्ञानिनः तं विदुः सूर्यमण्डलमध्यस्थत्वादिना प्रकारेण ध्यातवन्तस्तत्त-स्मादिदानीन्तना अपि सूर्यमण्डलान्तर्गतनारायणं विदुः । लकारव्यत्ययः विद्युः । ध्यायेयुरिति यावत् ।। १२ ।।

**आ.टी.**——शरीरे उपास्तिमुक्त्वा ब्रह्माण्डस्थितसूर्ये उपास्तिमाह— **हिरण्मय इति** ।। स्वर्णमये ब्रह्माण्डकोशे तद्रूपे पुरे विरजं शुद्धं निष्कलं जडकलाहीनं शुभ्रं शुद्धं स यो ज्योतिषां ज्योतिः प्रकाशनशक्तिप्रदं अस्तीत्यात्मज्ञानिनो जानन्ति ।।

**गू.टी.**——एवं शरीर उपास्यस्थलमुक्त्वा ब्रह्माण्डमध्यस्थिते सूर्ये चोपास्तिस्थलमाह— **हिरण्मय इति** ।। स्वर्णमयकोशे कृमिकृतकोशसमे ब्रह्माण्डे पुरे देहनामके तत्रापि सूर्ये ब्रह्मास्ति । विरजं रजआदिदोषदूरम् । षोडशकलारूपशरीरो न भवतीतिनिष्कलम् । शुद्धं सूर्यादिज्योतिषां ज्योतिःप्रकाशशक्तिप्रदम् । एतद्ये विदुस्त एवात्मविदः ।। १२ ।।

**भाष्यम्**

**ब्रह्माण्डमध्यगो नित्यं तपत्येष रवौ स्थितः ।। इति च ।।**

**व्या.टी.**——हिरण्मय इत्यत्र ज्योतिषां ज्योतिरिति सूचितं ब्रह्मोपास्तेरधिष्ठानं किमित्यतस्तद्वाक्यं व्याचष्टे— **ब्रह्माण्डेति** ।।

**ध.टि.**——।। **ब्रह्माण्डेतीति** ।। अत्र ब्रह्माण्डमध्यगे सूर्यमण्डले स्थिते रवौ स्थितः सन् नित्यं तपतीत्यन्वयः ।। तथाच हिरण्मये कोशे ब्रह्माण्डे तन्मध्ये स्थिते हिरण्मये तद्वत्पीतरूपोपेतसूर्यमण्डले स्थिते परे वरुणाद्युत्तमे सूर्ये स्थित्वा तपनक्रियां कुर्वाणमिति शेषः । तादृशं ब्रह्म विदुरिति श्रुत्यर्थो द्रष्टव्य इत्युक्तं भवति ।।

**वामन.टी.**—हिरण्मये ब्रह्माण्डकोशे मध्यगो भगवान् ज्योतिषो ज्योतिः ब्रह्म रवौ स्थितस्तपति । भगवानित्यर्थः ।।

**व.टी.**——तस्यार्थो **ब्रह्माण्डमध्यग इति** ।।

**श्री.टी.**——हिरण्मये परे कोश इत्यनेन ब्रह्मोपास्तौ किमधिष्ठानमुक्तं स्यादित्यतस्तद्दर्शयति— **ब्रह्माण्डेति** ।। ब्रह्माण्डमध्यगे सूर्यमण्डले स्थिते रवौ स्थितः

सन्नित्यं तपतीत्यन्वयः । एतादृशं ब्रह्म विदुरिति श्रुत्यर्थो द्रष्टव्यः । न तत्र सूर्यो भातीत्यादिकं सूर्यादयो ब्रह्माद्याधारत्वेन पृथक् न भान्ति ।

**उ.टी.**——आत्मविद इति निरंकुशेन बहुवचनेन सर्वेषां ज्ञानिनां ब्रह्माण्डस्थ-भगवदुपासनप्रतीतेरतो मन्त्रतात्पर्यं प्रमाणेनैवाह— **ब्रह्माण्डेति** ।। अनेन कोश इति सप्तमी सर्वस्मिन्नात्मास्तीतिवन्नाभिव्यापकाधिकरणे । किन्तु कटे आस्त इतिवदौपश्लेषाधिकरणे । तेन ब्रह्माण्डमध्यग इति पर्यवस्यतीति सूचितम् । ज्योतिषां ज्योतिरित्येतद्व्याचष्टे— **तपतीति** ।। सूर्यादिकं प्रकाशयतीत्यर्थः । एवं शिंशुमारश्रवणादिविधिपरत्वेन मन्त्रोऽयं व्याख्यातः । इदानीं ब्रह्मविद्याभ्यासाङ्गगायत्रीमन्त्रजपाङ्गत्वात्सूर्यान्तर्गतनारायणश्रवणादिकमपि कार्यमित्यर्थप्रतिपादकोऽयं मन्त्र इति भावेन हिरण्मये परे कोश इत्येतद्व्याचष्टे— **रवौ स्थित इति** ।। रविमण्डले स्थित इत्यर्थः । अत्र रवावित्यनेन हिरण्मये कोशे इति व्याख्यातम् । तथाहि—कोशशब्दः पात्रवाची । कोशोऽस्त्री कुड्मले पेश्यां पात्रे शब्दादिसंग्रहे । जातिकोशेऽर्थसङ्घाते दिव्ये खड्गपिधानके इति तस्य नानार्थकत्वावगमात् । ततश्च हिरण्मये कोश इत्यस्य हिरण्मये पात्र इत्यर्थः । हिरण्मयपात्रं च सूर्यमण्डलम् । पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतमितीशावास्यभाष्योक्तेः । स्थित इत्यनेन मन्त्रे स्थितमित्यध्याहार्यमिति सूचयति । ज्योतिषां ज्योतिरित्येतत् तपतीति व्याख्यातम् ।।

## उपनिषत्

**न तत्र सूर्यो भाति न चन्द्रतारकं**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं**
**तस्य भासा सर्वमिदं विभाति ।। १३ ।।**

**व्या.टि.**——सर्वं सूर्यादिप्रकाशप्रकाश्यं ब्रह्मस्वरूपं तु कथमित्यतः स्वप्रकाशमित्याह— **न तत्रेति** ।। न केवलं सूर्यादितेजो न ब्रह्मप्रकाशकं किन्त्वन्यत्रापि

प्रकाशकत्वं तदधीनमित्याह— **तमिति** ।। सूर्यादीनां तदनुप्रकाशत्वं च न स्वातन्त्र्येणेत्याह— **तस्येति** ।। १३ ।।

**घ.टि.**——ब्रह्मस्वरूपं कीदृशमित्यत आह— **न तत्रेतीति** ।। चन्द्रतारकमिति द्वन्द्वैकवद्भावः । सूर्यादयस्तत्र तद्विषये न भान्ति । तं भगवन्तं न भासयन्तीति यावत् । 'न तद्भासयते सूर्य' इत्यादि वचनात् । भान्तं प्रकाशमानं तं भगवन्तमन्वेव सर्वं सूर्यचन्द्रादिकं भाति प्रकाशते । सर्वमिदं जगत्तस्य भगवतो भासा तदीयया सूर्यादिभासा चापि विभाति प्रकाश्यत इत्यर्थः ।। १३ ।।

**वा.टी.**——तद्दर्शनं च घटादिवत्सौराद्यालोकसाचिव्यसापेक्षं नेत्याह— **न तत्रेति** ।। तत्र तद्विषये प्रकाशकतया सूर्यो न भाति । एवमन्यत्रापि । हृदिस्थभगवद्दर्शने बाह्यसौरालोकादेरनुपकारित्वादिति भावः । तर्हि सूर्यादिप्रकाशोऽपि भगवतः प्रकाशानापेक्षं किम्? नेत्याह— **तमेवेति** ।। सर्वं तेजोरूपं सूर्यचन्द्र-ताराविद्युदादिमण्डलं, न तत्र सूर्य इति पूर्वार्धे सूर्यादीनामेव प्रस्तुतत्वात्, भान्तं तं परमात्मानमनुभाति, अनुसृत्य भाति । अधुना सूर्यादीनां यद्घटादिप्रकाशकत्वं तदपि भगवत्प्रकाशाधीनमित्याह— **तस्येति** ।। विभाति द्रष्टॄणां चक्षुषि भाति दृश्यत इत्यर्थः ।। १३ ।।

**न.टी.**——ब्रह्म अन्यवत्सूर्यप्रकाशं न भवति किन्तु स्वरूपप्रकाशमित्याह— **न तत्रेति** ।। ब्रह्मविषये न भवति । प्रकाशको न भवतीत्यर्थः । न केवलं सूर्यादितेजो न ब्रह्मप्रकाशकम् किन्तु तस्यान्यप्रकाशकत्वादिकं भगवदधीनमित्याह— **तमेवेति** ।। भान्तं प्रकाशमानं तं परमात्मानं अनुसृत्य सर्वं सूर्यादितेजः भाति प्रकाशते । तस्य भगवतो भासा इदं सर्वं जगत् भाति प्रकाश्यते। यद्वा तस्य भगवतः भासा अधीनसूर्यादिभासा इदं सर्वं जगत् भाति प्रकाश्यते।

**रा.खं.**——कथं सर्वज्योतिरपेक्षयाऽतिशयितमहाप्रकाशरूपत्वं हरेरित्यत आह-— **न तत्रेति** ।। तत्र ज्योतिषां ज्योतिरूपे हरौ, विषयसप्तमी । चन्द्रतारकमिति

द्वन्द्वैकवद्भावः । तत्र भगवद्विषये सूर्यचन्द्रादिकं न भाति । तदपेक्षयाऽल्पप्रकाश-रूपत्वात्सूर्यादेः महाप्रकाशं भगवन्तं दीपः सौरालोकमिव न भासयन्ति सूर्यादय-स्तमिति भावः । तथाच गीता 'न तद्भासयते सूर्य' इत्यादि । न केवलं सूर्यादे-स्तदप्रकाशकत्वम् । किन्तु यत्प्रकाशमानत्वं स्वस्यास्ति तदपि ज्योतीरूपभगवद-धीनमित्याह— **तमेवेति** ।। भान्तं प्रकाशमानं तं भगवन्तमनु, अनुर्लक्षणे, तदधीनं सत्पूर्वमन्त्रे प्रकृतं सूर्यचन्द्रादि भाति प्रकाशते । विश्वप्रकाशकत्वमपि सूर्यादेः तत्तेजोऽधिष्ठानत्वेनैवेत्याह— **तस्येति** ।। तस्य भासा भगवद्भासा सर्वं जगद्भाति प्रकाशते । सूर्यादिप्रकाशद्वारेति भावः । तथाच गीता—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। इति ।।

मामकं मदधीनं मदीयञ्चेत्यर्थः ।। १३ ।।

**व.टी.**—सूर्यमण्डलस्थस्य विष्णोर्माहात्म्यान्तरमुच्यते— **न तत्र सूर्यो भातीत्यादिना** ।। १३ ।।

**श्री.टी.**—ज्योतिषां ज्योतिरित्युक्तं सूर्यादिभासकत्वं विशदयन् सर्वं सूर्यादि-प्रकाशप्रकाश्यं दृष्टं भगवत्स्वरूपं तु कथमित्याशंकां सूर्याद्यप्रकाश्यप्रकाशवत्त्व-रूपस्वप्रकाशत्वाख्यमहिमोक्त्या परिहरति— **न तत्रेति** ।। चन्द्रतारकमिति द्वन्द्वैकवद्भावः । सूर्यादयस्तत्र तद्विषये न भान्ति भगवन्तं न भासयन्तीति यावत् । न तद्भासयते सूर्य इत्यादि वचनात् । भान्तं प्रकाशमानं तं भगवन्तं तमन्वेव सर्वसूर्यचन्द्रादि भाति प्रकाशयते सर्वमिदं जगत् । तस्य भगवतो भासा तदीयया सूर्यादिभासा च विभाति प्रकाश्यत इत्यर्थः ।। १३ ।।

**उ.टी.**—प्राक् तत्रतत्र स्रष्टृत्वादिरूपं भगवन्माहात्म्यमुक्तम् । इदानीं ज्योतिषां ज्योतिरित्युक्तं विशदयन्बाह्यप्रकाशहेतुत्वरूपं तन्महिमान्तरमाह— **न तत्रेति** ।। ततश्चायं मन्त्रार्थः—सूर्यस्तत्र तं प्रागुक्तं भगवन्तं । न भाति न भासयति । एवं चन्द्रतारकम् । द्वन्द्वैकवद्भावोऽयम् । तं न भासयति । इमा विद्युतः तं न

भान्ति न भासयन्ति । यदैवं लक्षयोजनाद्यन्तरे स्थित्वा प्रकाशका अपि सूर्यादयो न भगवन्तं प्रकाशयन्ति तदा हस्तवितस्त्यादिपरिमितदेशे प्रकाशकोऽयमग्निः कुतो भगवन्तं भासयेदित्यर्थः । तदुक्तम्—"न तद्भासयते सूर्यो न शशांको न पावक" इति । ननु यथा सूर्यादीनां न भगवत्प्रकाशकत्वं तथा भगवतोऽपि सूर्यादिप्रकाशकत्वाभावेन महिमातिशयो नोपपद्यत इत्यत आह— **तमेवेति** ।। सर्वं सूर्यादिकं भान्तं भासयन्तं भगवन्तं अन्वेवानुसृत्यैव तदधीनतयैवेति यावत् । भाति प्रकाशते । अनेन सूर्यादिसर्वतेजसां भगवत्प्रकाशाधीनप्रकाशकत्वमुक्तम् । न केवलमेतावत् । किन्त्विदं सर्वं जगदपि तस्य भगवतो भासा तदधीनभासा तदीयभासा च विभाति प्रकाशते । जगदपि भगवत्प्रकाशप्रकाश्यं तदधीनसूर्यादिप्रकाश्यं चेति यावत् । तदुक्तम्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।। इति ।।

मामकमित्यस्य मदीयं मदधीनं चेत्यर्थः ।। १३ ।।

**आ.टी.**——ब्रह्म स्वप्रकाशमेव नान्यप्रकाशाधीनमित्याह— **नेति** ।। तत्र ब्रह्मविषये । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । न केवलं सूर्यादितेजो ब्रह्मप्रकाशकं नेति किन्त्वन्यत्रापि सूर्यादेः प्रकाशकत्वं तमनु इत्याह— **तमिति** ।। सर्वंसूर्यादिकं भान्तं स्वप्रकाशं तं परमात्मानमनु अनुसृत्य भान्ति प्रकाशन्ते । इदं सर्वं सूर्यादिप्रकाशेनप्रकाश्यं जगत् तस्य परमात्मनः भासा प्रकाशेन भाति प्रकाशते।।

**गू.टी.**——तत्र ब्रह्मविषये सूर्यो न प्रकाशते । चन्द्रतारकमिति द्वन्द्वैकवद्भावः । अल्पप्रकाशकश्च कुतः । सूर्यादयो यथा घटादीन् प्रकाशयन्ति न तथा ब्रह्म प्रकाशयन्तीत्यर्थः । सर्वं सूर्यादिकं भान्तं तं सर्वप्रकाशकं तं अन्वेव भाति प्रकाशकं भवति । इदं सर्वं सूर्यादिकं तस्य भासा ब्रह्माधीनप्रकाशेन भान्ति प्रकाशन्ते । ब्रह्मसूर्याद्यप्रकाश्यं सर्वजगतः प्रकाशकं सूर्यादेश्च प्रकाशकं प्रकाशकत्वप्रदं चेत्यर्थः ।। १३ ।।

## भाष्यम्

**सूर्यादयस्तं न भासयन्ति ।।**

**व्या.टी.**——न तत्र सूर्यो भातीति सूर्यादयस्तदेकीभूतत्वात्पृथक् न भान्तीति प्रतीतिं निवारयति— **सूर्यादय इति** ।।

**ध.टि.**—— ।। **सूर्यादय इतीति** ।। अनेन तत्र तद्विषये ब्रह्मविषये सूर्यादयो न भान्ति सूर्यादयस्तं न भासयन्तीति यावदित्येवं सूर्यादयश्च प्रकाशत्वरूपं स्वप्रकाशत्वमेव तेनोच्यत इत्युक्तं भवति ।।

**वामन.टी.**——न तत्र सूर्यो भातीत्यादेरभिप्रायमाह— **सूर्यादयस्तत्र भासयन्तीति** ।।

**स.टी.**——सूर्यादिस्थो विष्णुरिति कुतः । कृष्णे भगवति प्रसिद्धसूर्याद्यप्रकाश्यत्वस्य न तत्र सूर्य इत्युत्तरवाक्यप्रतिपादनात्तदभाषत— **सूर्यादय इति** ।।

**व.टी.**——तस्यार्थः— **सूर्यादय इति** ।।

**श्री.टी.**——तदात्मकत्वादित्यन्यथाप्रतीतिनिरासाय स्वयं व्याचष्टे— **सूर्यादय इति** ।। तथाच तत्र विषये ब्रह्मविषये सूर्यादयो न भान्ति । सूर्यादयस्तं न भासयन्तीति यावदिति सूर्याद्यप्रकाश्यप्रकाशवत्त्वरूपं स्वप्रकाशत्वमेवानेनोच्यत इति भावः ।।

**उ.टी.**——ननु न तत्र सूर्यो भातीत्यादिना सूर्यादयो भगवति न प्रकाशन्त इत्युच्यते । नच तद्युक्तम् । सूर्यादीनां सर्वेषामपि भगवति स्थित्वैव प्रकाशकत्वादित्यतस्तद्व्याचष्टे— **सूर्यादय इति** ।। सूर्यचन्द्रादय इत्यर्थः । तमित्यनेन तत्रेति निपातः तमित्यर्थ इति सूचितम् । भासयन्तीत्यनेन भाति भान्तीति पदद्वये भाधातुरन्तर्णीतण्यर्थ इति सूचितम् ।।

## उपनिषत्

**ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म**
**पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मै-**
**वेदं विश्वमिदं वरिष्ठम् ।। १४ ।।**

**।। इति चतुर्थः खण्डः ।।**

**व्या.टी.**—हृदये सूर्ये च तिष्ठतीत्युक्त्या परिच्छिन्नत्वं प्रतीयते तन्निवारयति-– **ब्रह्मेति** ।। इदममृतं ब्रह्मैव पुरस्तादित्यादि पृथग्वाक्यतया योज्यम् । ब्रह्मशब्दबाहुल्यात् ।। १४ ।।

**ध.टि.**—।। **ब्रह्मेतीति** ।। इदं ब्रह्मातिसामीप्यादिति वचनादिदं हृदयाकाशस्थिततया सर्वसमीपस्थममृतं ब्रह्मैव पुरस्तात् प्राच्यां दिशि प्रसृतम् । सृप्लृ गतौ। प्रकर्षेण गतं व्याप्तम् । इदं ब्रह्मैव पश्चात् पश्चिमस्यां दिशि प्रसृतं ब्रह्म दक्षिणतश्चोत्तरेण दक्षिणदिश्युत्तरदिशि च प्रसृतम् । अधश्चोर्ध्वञ्च अधोदिगुत्तरदिशोः प्रसृतम् । इदं ब्रह्मैव विश्वं पूर्णम् । इदं ब्रह्म वरिष्ठं अतिशयेन वरं सर्वोत्तममिति जानथेति शेषः ।। १४ ।।

**वामन.टी.**—।। **ब्रह्मैवेदममृमित्यादिना** ।। परं ज्योतिर्ब्रह्म तत्र दिक्षु प्रसृतमित्युच्यते ।। १४ ।।

**वा.टी.**—ब्रह्मैवेदममृतमित्यत्र ब्रह्मशब्दबाहुल्यादिदममृतं ब्रह्म पुरस्तात्पूर्वस्यां दिशि, इदममृतं ब्रह्म पश्चात्प्रतीच्यां दिशि, इदममृतं ब्रह्म दक्षिणतः, इदममृतं ब्रह्मोत्तरतः, इदममृतं ब्रह्माधस्तादूर्ध्वं च प्रसृतम् । अन्यथाऽमृतं ब्रह्म पुरस्तात्पश्चाद्दक्षिणतश्चेत्यादिना योजनिकायामेकैकेन ब्रह्मशब्देनैव पूर्तेः ब्रह्मशब्दबाहुल्यं व्यर्थं स्यात् । इत्थं विभज्य वदन्त्युपनिषत् दीपालोकादिकं स्वसमीपे पुस्तकस्थवर्णरेखादीनामपि प्रकाशकं, न तथा दूरे । एवं ब्रह्म न, किन्तु सर्वत्रैकप्रकारतयैव प्रकाशकमिति ब्रह्मणि महिमातिशयमभिप्रैति । इदं ब्रह्मैव विश्वं, विश प्रवेशन

इति धातोः अणुरेणुतृणकाष्ठादिषु सर्वत्र प्रविष्टं व्याप्तमित्यर्थः । नतु विश्वात्मकम् । वरिष्ठपदविरोधात् ।। १४ ।।

**न.टी.**——हृदये सूर्ये तिष्ठतीत्युक्त्या प्रतीतं परिच्छिन्नत्वं निवारयति— **ब्रह्मेति** ।। इदममृतं ब्रह्मैव पुरस्तात् । इदं ब्रह्मैव पश्चात् । दक्षिणतः उत्तरेण च अधश्चोर्ध्वं च प्रसृतं गतम् । इदं ब्रह्मैव विश्वं पूर्णम् । इदं ब्रह्मैव वरिष्ठं सर्वोत्तमम् ।। १४ ।।

**रा.खं.**——हृदयं सन्निधाय प्रतिष्ठित इति, हृदये ज्योतिषां ज्योतिरिति सूर्ये च ध्यानार्थं स्थित्युक्त्या प्राप्तपरिच्छिन्नत्वशंकां निराह— **ब्रह्मैवेदमिति** ।। इदममृतं ब्रह्मैव । पुरस्तात्पुरोदेशे प्रसृतं व्याप्तं ब्रह्म, पश्चात्पश्चिमदेशे ब्रह्म, दक्षिणतश्चोत्तरेण दक्षिणदेशे उत्तरदेशे च प्रसृतमधश्चोर्ध्वं चाधोदेशोत्तरदेशयोः प्रसृतमिदं ब्रह्मैव । विश्वं पूर्णमिदं ब्रह्मैव । वरिष्ठं सर्वोत्तमम् । एवं सर्वदेशेषु व्याप्तस्यापि हरेः हृदयाद्यल्पदेशेष्वस्थानं 'निचाय्यत्वादेवं व्योमवच्च' इति सूत्रोक्तदिशा युक्तमिति ध्येयम् ।। १४ ।।

**स.टी.**——हृदयादिस्थत्वोक्त्या परिच्छिन्नत्वप्राप्तेराह— **ब्रह्मैवेदमिति** ।। इदं ब्रह्मैव सर्वदिग्व्याप्तम् । इदं ब्रह्मैव विश्वं पूर्णं इदमेव वरिष्ठं सर्वोत्तमम् ।।

**व.टी.**——नच सूर्यमण्डले स्थित इति विशेषोक्त्या तस्य परिच्छिन्नत्वं शंकनीयमिति भावेनोच्यते— **ब्रह्मैवेदममृतं पुरस्तादित्यादि** ।। १४ ।।

**श्री.टी.**——हृदयाकाशसूर्यरूपाधिष्ठानगतत्वोक्त्या परिच्छिनत्वं भगवतः प्रतीयते। तन्निवारयति — **ब्रह्मैवेदमिति** ।। इदं ब्रह्मातिसामीप्यादिति वचनादिदं हृदयाकाशादिस्थिततया सर्वसमीपस्थममृतं ब्रह्मैव पुरस्तात्प्राच्यां पश्चात्पश्चिमस्यां दक्षिणतो दक्षिणस्यां उत्तरेणोत्तरस्यां अधोऽधरायां ऊर्ध्वमूर्ध्वायां च दिशि प्रसृतम्। सृप्लृ गतौ । प्रकर्षेण गतं व्याप्तमित्यर्थः । इदं ब्रह्मैव विश्वं पूर्णमिदं ब्रह्मैव वरिष्ठमतिशयेन वरं सर्वोत्तममित्यर्थः । इति जानथेति शेषः ।। १४ ।।

**उ.टी.**——ततश्चायं मन्त्रार्थः—अमृतं नित्यमुक्तम् । इदं ब्रह्मैव । पुरस्तात्प्राच्यां दिशि । पुरस्तात्पूर्वदिश्यपीति कोशात् । पश्चात्प्रतीच्यां दिशि । दक्षिणतः दक्षिणस्यां दिशि । उत्तरेणोत्तरस्यां दिशि । अधश्चाधो दिशि । ऊर्ध्वं चोर्ध्वदिशि । प्रसृतं स्थितम् । देशतो व्याप्तमिति यावत् । न केवलमेतावत् । किन्त्विदं ब्रह्मैव विश्वं पूर्णं कालतो गुणतश्च व्याप्तमिति यावत् । यस्मादेवं तस्मादिदं ब्रह्मैव वरिष्ठमतिशयेन वरं सर्वोत्तममिति । तदुक्तम्—

देशतः कालतश्चैव गुणतश्च त्रिधा ततिः ।
सा समस्ता हरेरेव................ ।। इत्यादि ।। १४ ।।

**आ.टी.**——हृदये सूर्ये च तिष्ठतीत्युक्त्या परिच्छिन्नत्वं प्रतीयते । तन्निवारयति- — **ब्रह्मेति** ।। इदममृतं ब्रह्मैव पुरस्तात् प्राच्यां पश्चात् पश्चिमस्यां दक्षिणतः दक्षिणायां उत्तरेणोत्तरस्यां दिशि अधोदिशि ऊर्ध्वदिशि मध्ये च ब्रह्मैव प्रसृतं स्थितम् । इदं ब्रह्मैव विश्वं पूर्णम् । इदं ब्रह्मैव वरिष्ठं श्रेष्ठम् ।। १४ ।।

**गू.टी.**——हृदये सूर्ये च तिष्ठतीत्युक्त्या परिच्छिन्नत्वं प्रतीयते तन्निवारयति— **ब्रह्मेति** ।। इदममृतं ब्रह्मैव पुरस्तादित्यादि पृथग्वाक्यतया योज्यम् । इदं ब्रह्म शब्दबाहुल्यात् प्रसृतं व्याप्तं विश्वं पूर्णं वरिष्ठं सर्वोत्तमं विश्वं ब्रह्मैव ब्रह्माधीनमिति वा ।। १४ ।।

**।। इति चतुर्थखण्डमन्त्रार्थः ।।**

## भाष्यम्

**इदं ब्रह्मैव विश्वं पूर्णम् । इदमेव वरिष्ठं सर्वोत्तमम् । इदंशब्दानां बहुत्वाद्ब्रह्मविषय एवेदंशब्दः ।।**

**व्या.टी.**——ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्येतद्ब्रह्मणो विश्वाकारत्वप्रतीतिं निवारयन्व्याचष्टे— **इदमिति** ।। इदं विश्वं ब्रह्मैवेति इदंशब्दो जगत्पर एव कस्मान्न स्यादित्यत आह— **इदंशब्दानामिति** ।। जगत्परत्वे एकेनैव पूर्णत्वादितरवैयर्थ्यमिति भावः ।।

**ध.टि.— इदमितीति** ।। अत्र विश्वं समस्तं पूर्णं चेत्यभिधानादिति भावः ।। **इदं शब्दानामितीति** ।। अनेन बहुत्वात् त्रयाणां सत्वादित्यर्थः । तथाचेदममृतं ब्रह्मैव पुरस्तादित्यादि । इदं ब्रह्मैव विश्वं इदं ब्रह्मैव वरिष्ठमिति वाक्यभेदेन योजना कार्येत्युक्तं भवति ।।

**वामन.टी.**—ब्रह्मैवेदं विश्वमिदं वरिष्ठमिति वाक्यद्वयं व्याख्याति भाष्येण इदं ब्रह्मैव पूर्णं सर्वोत्तमम् । त्वं च अन्यदपूर्णमपरं चेत्यर्थः । इदं विश्वशब्दितं जगत् ब्रह्मैवेति योजना किन्न स्यादित्यत आह— **इदं शब्दानामिति** ।। ब्रह्मप्रकरणे ब्रह्मणः परिपूर्णत्वादिबहुधर्मविधानार्थं धर्मिग्राहकत्वेन वर्तमानानामिदंशब्दानां बहुत्वात् ब्रह्मविषय एवायमिदंशब्दः । न जगद्विषयः । तस्य भासा सर्वमिदं विभातीति जगद्धर्मस्य पुरैवोक्तत्वात् । तदधीनस्य तदैक्यासम्भवाच्च ।।

**स.टी.**—विश्वानुवादेन ब्रह्मत्वविधाने इदं शब्दद्वयस्य वैय्यर्थ्यम् । ब्रह्मानुवादेन व्याप्तत्वादिविधाने तु अनुवादप्रदर्शनायेदं शब्दमपेक्षितम् । अत एवाभाषिष्ट-- **इदं ब्रह्मैवेति** ।।

**व.टी.**—तत्र "ब्रह्मैवेदं विश्वमिदं वरिष्ठमि"त्यनेन ब्रह्मणस्सर्वात्मकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे— **इदमित्यादिना** ।। ननु किमर्थमेवं व्याख्यानम् । सर्वप्रपञ्चात्मकत्वमुच्यत इत्येवार्थः किन्न स्यादित्यत आह— **इदंशब्दानामिति** ।।

**श्री.टी.**—ब्रह्मैवेदममृतमिति वाक्ये ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्येतत् इदं वरिष्ठं विश्वं जगद्ब्रह्मैवेति परव्याख्याननिरासाय व्याचष्टे— **इदं ब्रह्मैवेति** ।। विश्वं समस्तं पूर्णं चेत्यभिधानादिति भावः । वरिष्ठं अतिशयेनोत्तमम् । तस्यैव विवरणं सर्वोत्तममिति । परोक्त एवार्थः किं न स्यादित्यतस्तत्र बाधकमाह— **इदं शब्दानामिति** ।। बहुत्वात् त्रयाणां सत्वादित्यर्थः । जगत्परत्वे एकेनैवेदंशब्देन

पूर्णत्वादितरयोर्वैय्यर्थ्यं स्यादिति भावः । तथा चेदममृतं ब्रह्मैव पुरस्तादित्यादि । इदं ब्रह्मैव विश्वमिदं ब्रह्मैव वरिष्ठमिति वाक्यभेदेन योजना कार्येत्युक्तं भवति ।।

**उ.टी.**——हृदयं सन्निधाय प्रतिष्ठित इति हृदयस्थत्वोक्त्या हिरण्मय इति मन्त्रे ब्रह्माण्डमध्यस्थत्वसूर्यमण्डलस्थत्वोक्त्या प्राप्तां परिच्छिन्नत्वशंकां निवारयन्नेव देशतः कालतो गुणतश्च व्याप्तत्वाद्ब्रह्मैव सर्वोत्तममित्येवंरूपं महामाहात्म्यमाह-— **ब्रह्मैवेति** ।। अत्रेदं विश्वं ब्रह्मैवेत्यपव्याख्याननिरासाय ब्रह्मैवेदं विश्वमित्येतद्व्याचष्टे— **इदमिति** ।। विश्वं पूर्णमित्यनेनायं विश्वशब्दो जगद्वाची। ब्रह्मणो जगदैक्यस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च । किन्तु विशति सर्वमिति व्युत्पत्त्या पूर्णत्वार्थ इति सूचितम् । अत्रोद्देश्यविधेयभावेन प्रत्येकमेवान्वयः । तेन भिन्नान्येवैतानि वाक्यानीति सूचयितुमिदं वरिष्ठमित्येतद्योजयति— **इदमेवेति** ।। वरिष्ठत्वं च न राजादिवदिति भावेनाह— **वरिष्ठं सर्वोत्तममिति** ।। वरमित्यनेनैवोत्तमत्वसिद्ध्या इष्ठन्प्रत्ययेन अतिशयेन वरत्वमुक्तम् । तच्च सर्वोत्तमत्वमेवेति भावः । नन्विदं विश्वं ब्रह्मैवेति व्याख्याने को दोष इत्यत आह-— **इदं शब्दानामिति** ।। ब्रह्मविषय एवेत्येवशब्देन नतु विश्वविषय इत्युक्तम् । तेन विश्वविषयकत्वे बाधकं सूचितम् । यदि ब्रह्मैवेदं विश्वमितीदंशब्दो विश्वविषयः स्यात्तदेतरावपीदंशब्दौ विश्वविषयौ स्यातां सन्नियोगशिष्टानामिति न्यायात् । तथाचेदममृतं मुक्तं विश्वं ब्रह्मैव । इदं विश्वमेव पुरस्तादित्यादि इदं विश्वमेव वरिष्ठमिति योजनीयं स्यात् । नचैतद्युक्तम् । विश्वस्य सर्वदिग्व्यापकत्वाभावात्सर्वोत्तमत्वाभावाच्च । अतो ब्रह्मविषय एवेदंशब्दः । तत्र च वाक्यभेदेन योजनायां न दोष इति भावः ।।

इति चतुर्थखण्डभाष्यार्थः

# अथ पञ्चमः खण्डः

## उपनिषत्

**द्वा सुपर्णा सयुजा सखाया**
**समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्य-**
**नश्नन्नन्यो अभिचाकशीति ।। १ ।।**

**व्या.टि.**—स एषोऽन्तश्चरते बहुधा जायमान इत्युक्तं बहुधा जायमानत्वं किं जीवात्मकत्वेन नेति भावेन तयोर्भेदमाह— **द्वेति** ।। उपकार्योपकारकभाववत्तया परस्परमपरिहारेण वर्तमानौ सयुजौ ।। १ ।।

**ध.टि.**— ।। **द्वा सुपर्णेति** ।। सुष्ठु परमानन्दरूपत्वात्सुपर्णा सुपर्णौ पक्षिरूपाविति वा । सयुजा संयुक्तौ । अत एव सखाया सखायौ द्वा द्वौ जीवेशौ । समानमेकं वृक्षं देहाख्यं परिषस्वजाते आलिलिङ्गतुः । तयोर्मध्ये अन्यो जीवः पिप्पलं अश्वत्थफलरूपं देहजनितकर्मफलम् । स्वाद्वत्ति अस्वाद्वेव स्वादुत्वेनात्ति । अन्यः ईश्वरस्तदनश्नन्नेवाभितः चाकशीति प्रकाशते । नतु स्वस्थित्यै तदपेक्षते इत्यर्थः ।। १ ।।

**वामन.टी.**—ननु ब्रह्मैवेदं विश्वमित्यादाविदमः शुक्तित्ववदस्य ब्रह्मत्वं हि विधीयते । तद्व्यतिरिक्तस्य तदध्यस्तत्वेन रजतवन्मिथ्यात्वात् । तस्मादिदं जीवब्रह्मैक्यमतमेव भेदमताद्वरिष्ठमिति मन्दाशंकोच्छेदार्थं "द्वा सुपर्णे"त्यादिकमुपदिशति । अत्र सुष्ठु परमानन्दत्वात् तं धरमयतीति सुपर्णावीशजीवौ । पिप्पलं तत्कर्मफलं तयोरीशजीवयोः स्वातन्त्र्यपारतन्त्र्याभ्यां स्थित्यदनेन भेदोक्तेरिदं भेदमेवान्यस्माद्वरिष्ठमित्युक्तम् ।। १ ।।

**वा.टी.**—एवं श्रुतिः सर्वस्रष्टृत्वेन सर्वनियामकत्वेन ज्ञानानन्दरूपत्वेनानाद्यनन्तकालेष्वपि मरणरहितत्वेन सर्वव्याप्तत्वादिना स्पष्टं परावरं वरिष्ठमित्यादिशब्दैः

विष्णोः सर्वोत्तमत्वमनीदृशसकलजीवजडात्मकात्प्रपञ्चादत्यन्तभेदं चाभिधायाधुना परपक्षप्रतिक्षेपस्यावश्यकत्वात् कुसमयप्राप्तं जीवेश्वरैक्यं सयुक्तिकं दूषयितुमाह — **द्वा सुपर्णेति** ।। द्वा द्वौ सुपर्णा सुपर्णौ पक्षिणौ सयुजावेकस्मिन् देहे सह उपजीव्योपजीवकतया संयुक्तौ सखायौ ब्रह्माद्युत्तमजीवापेक्षया परस्परमनोनुकूलौ समानं वृक्षमाधारत्वेनोभयोः समानं देहाख्याश्वत्थवृक्षं परिषस्वजाते परित आलिङ्ग्य तिष्ठतः । तयोः पक्षिणोर्मध्येऽन्यः परमात्मनोऽत्यन्तभिन्नः । सोऽयं न अयं स नेत्याकारेणान्योन्याभावाख्यभेदो ह्यन्यशब्दार्थः । तथाच कथं नात्यन्तभेदासिद्धिः। पिप्पलं देहाख्याश्वत्थवृक्षफलस्थानीयं प्रचुरदुःखमिश्रमीषत्सुखाख्यफलमत एवास्वाद्वपि स्वादु विषसम्पृक्तान्नमिव रागोद्रेकात् स्वाद्वित्यभिमन्यमानः इति । तथाहि—अन्नरसास्वादनात् यदीषत्सुखं तत् काष्ठानयनतण्डुलयाचनतण्डुला-वहनकूपस्थजलोद्धरणभाण्डयाचनपाचनादिनादौ बहुदुःखभरितं, मध्ये च घर्मजिह्वादनौदनचर्वणादिना, अन्ते आलस्याजीर्तिपाददाहमरणादिना दुःखभरिततया सर्वेषामप्यनुभवसिद्धम् । किं बहुना अतिबलवतां देवानामपि सुधारसास्वादनाय मन्दरगिरेरुद्धरणायाधःपातनबाहूदरमुखनासिकाच्छेदादिनादौ, मध्ये फणोत्पन्नेन विषवायुना कालकूटोष्मणा बहुभारभरितगिर्यावर्तनेन, अन्तेऽसुरैः सह युद्धादिना बहुक्लेशभरितमिति भागवतादिपुराणेष्वेव प्रपञ्चितम् । किं चेयं श्रुतिः स्वयमेव 'अनीशया शोचति मुह्यमानः' इति वक्ष्यति । तस्मान्न्यायकोविदैरेवमेव श्रुतेरर्थो वक्तव्यः । भगवांस्तु तत्रापि लीलया वामेन करेण गिरिमुद्दधार । रुग्णान् देवान् स्वदृष्ट्या जीवयामास । मग्नं च पर्वतं लीलयैवोन्निन्ये । असुरांश्च लीलयैव जिगाय । सुरानेव सुधारसमपाययत् । स्वयं तु न पपौ । अतो जीव एवास्वादु च स्वादुत्वेनात्ति । अन्ये जीवादन्यो भगवांस्तु ईदृशं सुखमनश्नन्नभितश्चाकशीति अतिशयेन प्रकाशते । दुःखासम्भिन्नं स्वादुसुखमुक्तविधयाऽसम्भवान्नाश्नाति । 'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' इति औत्तरश्रुतिवाक्ये स्वादु केवलसुखमिदित्थमग्रे तस्य परमात्मन एवाहुः । तत्सुखं यः पितरं परमात्मानं न वेद जीवः स नोन्नशत् नाशदिति स्पष्टं प्रतीयमानार्थपर्यालोचनायां

च अस्वाद्वेव स्वादुत्वेनात्तीति सिद्धम् । भगवांस्तु जीववद्दुःखोदर्कसुखानशन-वानेवानश्नन्नित्युच्यते । उत्तरवाक्यार्थपर्यालोचनया च केवलं स्वादु सुखं स्वतन्त्रा-ल्लीलया प्रथममश्नातीति सिद्धम् । एवं चान्यपदद्वयेन भेदस्यैव भासादत्तृत्वानत्तृत्व-द्वित्वसंयोगसङ्ख्याख्योपपत्तेश्च जीवेश्वरयोरत्यन्तभेदे श्रुतेर्महातात्पर्यं चावगम्यते । नह्येकस्य द्वित्वं, नाप्येकस्य संयोगो, नवाप्येकस्यैव सङ्ख्या क्वापि दृष्टेति भावः । अतो बलवतीयं श्रौतयुक्तिः स्वर्णमणीनां मालेति ज्ञेयम् ।। १ ।।

**न.टी.**——स एषोऽन्तश्चरते बहुधा जायमान इत्युक्तम् । बहुधा जायमानत्वं न जीवात्मकत्वेनेति भावेन तयोर्भेदमाह— **द्वेति** ।। द्वौ सुपर्णा सुपरानन्दरूप-त्वात्सुपर्णौ सयुजौ परस्परमपरिहारेण विद्यमानौ सखायौ परस्परोपकार्योप-कारकभाववन्तौ जीवेश्वरौ समानमेकं वृक्षं देहाख्यं परिषस्वजाते आलिलिङ्गतुः । तयोरन्यो जीवः पिप्पलं अस्वादुकर्मफलं स्वादु यथा भवति तथा स्वादुत्वेनेत्यर्थः । अत्ति भुङ्क्ते । अन्यः जीवभिन्न ईश्वरः । जीवाद्यमस्वादु अशुभं अनश्नन् । अभिचाकशीति स्वतन्त्रः सन् सम्यक् प्रकाशते ।। १ ।।

**रा.खं.**——स एषोऽन्तश्चरते बहुधा जायमान इत्युक्तं हरेर्बहुधा जायमानत्वं जीवाभेदेनेति भ्रमनिरासाय तयोर्भेदमाह— **द्वा सुपर्णेति** ।। सयुजौ संयुक्तौ, सदा वियोगरहितौ, उपकार्योपकर्तृभावेन सखायौ द्वौ सुपर्णरूपौ जीवेशौ समानं वृक्षं देहाख्यमेकमश्वत्थवृक्षं परिषस्वजाते आलिलिङ्गतुः । तयोस्सुपर्णयोर्मध्येऽन्यो जीवः पिप्पलमश्वत्थफलरूपं देहजनितं कर्मफलमस्वाद्वेव स्वादुवदत्ति । अन्य ईश्वरोऽनश्नन् जीवाद्यं कर्मफलमनश्नन्नभि चाकशीति, काशृ दीप्तौ, यङ्लुगन्तं, प्रकाशते । स्वस्थित्यै न तदपेक्षत इति भावः । तदुक्तमेकादशस्कन्धे 'एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान्' इति ।। १ ।।

**स.टी.**——ननु किं बहुधा जायमान इति जीवलिङ्गस्य विष्णुपरत्वप्रतिपादनायासेन । जीवस्यैव द्युभ्वाद्यायतनत्वं स्यात् । नचोक्तहेतुविरोधः । जीवेशभेदाभिप्रायेण जीवेऽप्यात्मशब्दाद्युक्तिसम्भवात् । न स्यादित्याह— **सुपर्णेति** ।। सयुजौ

सखायौ द्वा सुपर्णरूपौ जीवेशौ देहाख्यपिप्पलमालिलिङ्गतुः । तयोः सुपर्णयोर्मध्ये यो जीवः अश्वत्थफलरूपदेहजनितं कर्मफलं अस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरोऽनश्नन्नभिहितश्चाकशीति सम्यक् प्रकाशते । नतु स्वस्थित्यै तदपेक्षत इति जीवेशयोः कर्मफलोपजीवनतद्रहितस्थानाभ्यां भेदस्यैवावगतेर्न जीवेशाभेदमादायात्मशब्दोक्तिसम्भव इति भावः ।। १ ।।

**व.टी.**—स एषोऽन्तश्चरते बहुधा जायमान इत्युक्तम् । तत्र शरीरान्तश्चरणं नाम किं जीवाभेदेन, किं वा ततो भेदेन इत्याशंकायां भेदेनैवेति भावेनोच्यते-– **द्वा सुपर्णेत्यादि** ।। १ ।।

**श्री.टी.**— स एषोऽन्तश्चरते बहुधा जायमान इत्युक्तं विष्णोर्बहुधा जननं किं जीवात्मकत्वेनेति शंकां निराकर्तुं विरुद्धधर्मकथनपूर्वकं तयोर्भेदमाह— **द्वा सुपर्णेत्यादिना** ।। सुष्ठु परमानन्दरूपत्वात्सुपर्णा सुपर्णौ संयुक्तौ अत एव सखाया सखायौ द्वा द्वौ जीवेशौ समानमेकं वृक्षं देहाख्यं परिषस्वजाते आलिलिङ्गतुः । तयोः सुपर्णयोर्मध्येऽन्यो जीवः पिप्पलं देहाख्याश्वत्थफलरूपं देहजनितकर्मफलं स्वाद्वत्ति । अस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरस्तदनश्नन्नेवाभिचाकशीति अभितः प्रकाशते नतु स्वस्थित्यै तदपेक्षत इत्यर्थः ।। १ ।।

**उ.टी.**—नन्विदं वरिष्ठमिति ब्रह्मणः सर्वजीवोत्तमत्वं यदुक्तं तदयुक्तम् । जीव-ब्रह्मणोरभेदेन तयोर्नीचोच्चभावायोगादित्याशंकानिरासाय सोपपत्तिकं तयोर्भेदमाह-– **द्वा सुपर्णेति** ।। द्वा सुपर्णेत्यत्र सुपां सुलुगित्यादिना द्विवचनस्य डादेशः । सयुजा सखायेत्यत्रत्वाकारादेशः । अन्यथाडित्वाट्टिलोपापत्तेरिति ध्येयम् । सयुजा सयुजौ संयुक्तौ सदा वियोगरहितौ । सखाया उपकार्योपकारकभावेन सखायौ । सुपर्णा सुपर्णौ सुपर्णसदृशौ । द्वा द्वौ जीवेशौ । समानं एकं वृक्षं देहाख्याश्वत्थवृक्षम् । परिषस्वजाते आलिलिङ्गतुः । तयोः सुपर्णयोर्मध्ये । अन्यः एकः । भिन्नार्थकत्वे अन्यारादिति पञ्चमीप्रसङ्गात् । जीव इति यावत् । पिप्पलं अश्वत्थफलरूपं देहजनितकर्मफलम् । स्वादु स्वादुवत् सर्वदा अत्ति । अस्वाद्वेव स्वादुत्वेनात्तीति

यावत् । यथोक्तं भागवततात्पर्ये—

स्वादोरदनवद्धयत्ति जीवो स्वाद्वपि यत्सदा ।
अनारतं पारवश्यात्स्वाद्वत्तीति ततः श्रुतिः ।।

अन्य ईश्वरः अनश्नन् पुण्यफलमध्ये असारभागम् । पापफलं चेति शेषः । अभिचाकशीति पुनःपुनरतिशयेन वा प्रकाशते । नतु स्वस्थित्यै तदपेक्षते । अभिपूर्वस्य कश गतिशासनयोरिति धातोर्यङ्लुकि सति रूपमेतत् । अनेकार्थत्वाद्धातूनां प्रकाशार्थकत्वमपीति बोध्यम् ।। १ ।।

**आ.टी.**——य एषोऽन्तरत इत्यत्र ईश्वरो जीवरूपेणास्तीति प्रतीतिं निवारयंस्तयोर्भेदमाह— **द्वेति** ।। सुपर्णा सुपर्णौ पक्षिणाविव । सुष्ठु उत्तमसुखरूपौ वा । सयुजौ अवियोगिनौ अत एव सखायौ परस्परमुपकारिणौ प्रियौ समानमेकं पिप्पलमश्वत्थवृक्षं देहरूपं परिषस्वजाते । भृशमालिलिङ्गतुः । ष्वज सङ्गे । तयोर्जीवेश्वरपक्षिणोर्मध्येऽन्यः जीवः पिप्पलं पिप्पलफलं फले लुक् । देहरूपाश्वत्थजन्यकर्मफलं स्वादु अस्वादु च बलाद्यर्थमुपजीव्यतया स्वादुवत्सदात्ति । नतु स्वाद्वेव । अन्य ईश्वरः अनश्नन् अस्वादुस्वादूभयरूपं कर्मफलं जीववद्बलाद्यर्थं न भुञ्जान एवाभितः सर्वतः चाकशीति देदीप्यते ।

प्रविविक्तभुग्यतो ह्यस्माच्छरीरात्पुरुषोत्तमः ।
अतोऽभोक्ता च भोक्ता च स्थूलाभोगात्सदैव तु ।।
स्वातन्त्र्यणैव भोक्तृत्वा दुःखाभोगाच्य भोगाच्च सर्वदा ।
अभोक्ता चैव भोक्ता च भगवान्विष्णुरव्ययः ।।

"तस्येदाहुः पिप्पलं स्वाद्वग्रे" "शुभं पिबत्यसौ नित्यं " शुभं सज्जीवापेक्षया सुखकारि स्वादु प्रियं च जीवेन्द्रियावेद्यं यत् तदेव भुंक्ते लीलया च । बलाद्यर्थमस्वादु सर्वथा न भुंक्ते इति तु सम्प्रदायः ।। १ ।।

**गू.टी.**——य एषोऽन्तरिति शरीरान्तरस्थत्वोक्त्या जातां जीवाभेदप्रतीतिं निवारयितुं जीवेश्वरयोर्भेदमाह— **द्वेति** ।। सखायौ उपकारकभावोपेतौ सह वर्तमानौ सयुजौ

द्वौ सुपर्णौ जीवेश्वराख्यौ पक्षिणौ समानं वृक्षं देहरूपमेकमश्वत्थं वृक्षं परिषस्वजाते आलिलिङ्गतुः आश्रिताविति यावत् । तयोर्जीवेश्वरयोर्मध्येऽन्यो जीवःपिप्पलं देहरूपाश्वत्थवृक्षजन्यफलपूर्वकर्मजन्यं विषयजातं सुखदुःखसाधनमपि स्वादु सुखसाधनमेवेदं विषयजातमिति मत्वा अत्त्यनुभवति । अन्यस्त्वीश्वरः अनश्नन् जीवभोग्यं स्थूलं सुखं वा अभुञ्जान एवाभिचाकशीति सर्वतोऽतिशयेन प्रकाशते । जीवो बलज्ञानादिवृद्ध्यर्थं विषयं भुंक्ते नेश्वरस्तथा । किन्तु लीलया भक्तप्रीत्यर्थं भुंक्त इति भावः ।। १ ।।

## भाष्यम्

**स्वादुवत्सर्वदात्ति । नतु स्वाद्वेव । 'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' इत्यज्ञानां स्वादुनिषेधात् । जीवाद्यमेव नाश्नाति भगवान्। नतु नाश्नात्येव । 'तस्येदाहुः पिप्पलं स्वादु' इत्युक्तत्वात् ।**

**स्वातन्त्र्येणैव भोक्तृत्वाद्दुःखाभोगाच्च सर्वदा ।**
**अभोक्ता चैव भोक्ता च भगवान् विष्णुरव्ययः ।।**

**—इति च तत्त्वसारे ।।**

**व्या.टी.**——तयोरन्यो जीवः स्वाद्वेव पिप्पलं देहाख्याश्वत्थवृक्षस्य पुण्यकर्मफललक्षणं फलमत्ति नत्वस्वादु पापफलं दुःखमिति प्रतीतिं निवारयन्व्याचष्टे—- **स्वादुवदिति** ।। अस्वाद्वेव स्वादुवदत्ति । नतु स्वाद्वेवात्तीत्यर्थः । कुतो न जीवः स्वाद्वेवात्तीत्यत आह— **तस्येति** ।। तस्यार्थः योऽग्रे श्रेष्ठः । तस्यैव स्वादु पिप्पलमाहुः । यः उत् उत्कृष्टम् । पितरं न वेद । अत एव नशत् नाशवान् तस्य तत्स्वादु पिप्पलं नेति । अनश्नन्निति सर्वथाऽभोक्तेति प्रतीयते । तां निवारयति— **जीवाद्यं दुःखमिति** ।। नतु नाश्नात्येवेति कुत इत्यत आह— **तस्येति** ।। तर्हि श्रुत्योर्विरोधः प्राप्त इत्यतो विरोधं परिहरति— **स्वातन्त्र्येणेति** ।।

**ध.टि.**——।। **स्वादुवदितीति** ।। अत्र भाष्ये अस्वाद्वेवेति शेषमभिप्रेत्योक्तटीकायामस्वाद्वेवेति । स्वादुवत् स्वादोरदनवत् । यथोक्तं भागवततात्पर्ये ।

स्वादोरदनवद्धयत्ति जीवोऽस्वाद्वपि यत्सदा ।
. अनारतं पारवश्यात् स्वाद्वत्तीति ततः श्रुतिः ।। इति ।।
अस्वादु स्वादुवद्धयत्ति जीवो नैवं जनार्दनः ।। इति ।।

।। **तस्येतीति** ।। अत्र यस्मिन् वृक्षे मध्वदः सुपर्णाः निविशन्ते सुवते चाधिविश्वे इति पूर्वार्धः । तदर्थस्तु देहाख्यवृक्षे स्थित्वा मध्वदः अमध्वेव मधुत्वेनात्तारो विश्वे सुपर्णाः जीवाः यस्मिन्ननश्नाति सुपर्णे मुक्तौ निविशन्तेऽधिसुवते चेयमुद्दिश्यैव सौमखण्डनादिकं कुर्वन्तीति । उत्तरार्धं व्याचष्टे— **तस्यार्थ इति** ।। पितरमिति जगत्स्रष्टारं परमात्मानमित्यर्थः । अत्र कर्मफलभोगो नाम कर्मानुसारेण प्राप्तविषय-भोग एव विवक्षितः । "श्रोत्रं चक्षुः स्पर्शनं चे"त्याद्युक्त्वान्ते विषयानुपसेवत इत्युक्तत्वात् ।। उक्तं च गीताभाष्ये "सुखरूपस्य भोक्तृत्वादि"ति । व्याख्यातं च टीकाकारैः "सुखकारणस्येत्यर्थः" इति । भाष्ये अज्ञानां जीवानां स्वादुनिषेधात्स्वाद्वन्ननिषेधादित्यर्थः ।। **जीवाश्च दुःखमितीति** ।। अत्र जीवेनाद्यं अदनीयं यद्दुःखं तदेव नाश्नाति भगवानित्यर्थः । जीवाद्यमिति पाठे जीवस्य यदद्यं पापं तज्जन्यदुःखमिति यावत् । तदेव नाश्नातीति व्याख्येयम् । इत्यनश्नन् श्रुतेरर्थ इति शेषः । इदमुपलक्षणं पारतन्त्र्येणाभोक्तृत्वमप्यनश्नन् श्रुतेरर्थ इत्यपि द्रष्टव्यम् ।। **तस्येतीति** ।। अत्र तथाच वाक्यशेषे भगवतः स्वाद्वशनोक्त्या अनश्नन्नित्यस्य सर्वथा नाश्नातीति व्याख्याने तद्विरोधः स्यादित्यर्थः ।। **स्वात-न्त्र्येणेतीति** ।। अत्र पारतन्त्र्येण भोक्तृत्वाभावादित्यर्थः । अभोक्ता चेत्यत्रत्यश्चशब्दो भोक्तृत्वादित्यनेन सम्बद्ध्यते । उभावपि निमित्तयोः परस्परसमुच्चयार्थौ । तृतीयो अप्यर्थे । नास्तीत्यत्रापि संश्रुत इत्येकादशतात्पर्यसमाख्यानात् । तथाच भोक्तापि भगवान् स्वातन्त्र्येणैव भोक्तृत्वात् पारतन्त्र्येण भोक्तृत्वाभावादिति यावत् । सर्वदा दुःखाभोगाच्च भोक्तेत्युच्यत इति योजना । एवशब्देन सर्वथा अनशनस्य निरासः । अत्र यथायोगं सम्बन्धमङ्गीकृत्य स्वातन्त्र्येणेति भोक्तृत्वे निमित्तकथनपरं दुःखाभोक्तृत्वं चाभोक्तृत्व इति व्याख्याने तु स्ववशेनादनाद्विष्णुर्नात्तीत्यत्तापि संश्रुत इत्येकादशतात्पर्यविसंवादापत्तेः । तत्र स्ववशेनानदनस्यानत्तृत्वे निमित्त-

तयोक्तत्वात् । तत्रापि स्ववशेनादनादित्यस्य पारतन्त्र्येणादनाभावादित्येवार्थो वक्तव्य इति योजना ।।

**वामन.टी.**—स्वाद्वत्तीति स्वातन्त्र्यविलक्षणं जीवस्येत्यत आह— **स्वादुवदिति** ।। अस्वाद्वपि स्वादुवदेव सर्वदा जीवोऽत्तीति । नतु स्वाद्वेवात्ति विपर्ययेणानुभवात् । तस्येदाहुरित्यादौ वाक्यशेषेऽप्यज्ञानां स्वादुफलादननिषेधात् । एवं हि यस्मिन् वृक्ष इत्यादि ऋगर्थो गम्यते । यस्मिन् शरीराख्यवृक्षे मध्वदो भगवद्रूपामृतरसास्वादेन जीवाख्यसुपर्णा निविशन्ते । ते पुनरधिगम्यन्ते । शुभाख्यापत्यं सूयते । तस्य हस्ताख्यशाखाग्रात् सञ्जातमेव कर्माख्यपिप्पलं स्वाद्वाहुः । एवं च ज्ञानिकृतकर्मण एव स्वादुत्वात्त एव तदश्नन्तीत्यर्थः । अथ यो जगत्पितरं विष्णुं न वेद स तत्स्वादुफलं नाश्नातीति ह्यज्ञानां स्वात्मनिषेधः । नन्वेवं सति ज्ञान्यज्ञानिनोः स्वाद्वस्वादुभोगविधानात् तदनश्नन्नित्युक्तेश्च न तस्य ऋतं पिबन्तावित्युक्तभोग इत्यत आह— **जीवेति** ।। जीवाद्यमेव सर्वेश्वरो भगवानश्नाति । नतु स्वयोग्यपूर्णसुखमिति नाश्नात्येव । स्वातन्त्र्यातिरेकात् तस्येदाहुरित्यत्रैव साक्षात्स्वादुभोगस्यैवोक्तत्वात् । तथाचात्र योजना । संसारहेतुत्वात् स्वत एवावृतसुखचेष्टत्वाच्च साक्षाद् वृक्षशब्दितो नारायणः । यस्मिन्मुखत एव वृक्षाख्ये हरौ मध्वदः साक्षान्मोक्षसुखभोक्तारः सम्यक्पराणनात् सुपर्णशब्दिता विशिष्टचेतना नित्यं निविशन्ते । यस्मिन् स्थितास्ते पुनरधिशयमपि मानसयज्ञं कुर्वाणा अस्मा एव समानसंसोममधिकं संस्तुवन्ति । चशब्दात् कदाचित्स्वेच्छया द्रव्ययज्ञमपि कुर्वाणा अधिकाय विष्णवे सोममप्यस्य विष्णोरेव हि पिप्पले मग्रे प्रथमं स्वाद्वाहुः । पश्चात्तेन दत्तमेव ह्यन्येषां स्वल्पमपि स्वादु भवेत् । अत एव तदज्ञस्य तद्भोगासिद्धिः स्यात् । योऽयं भगवतो भोगाभोगविभाग उक्तः तं तत्त्वसारवचनेन स्पष्टयति— **स्वातन्त्र्येणेति** ।।

**स.टी.**—अथास्वाद्वेव स्वादुवदिति व्याख्यानं कुतः? तस्येदाहुः पिप्पलं स्वाद्वित्यज्ञानां स्वादुनिषेधात् । तदर्थस्त्वग्रे स्पष्टः । तस्यैव स्वादुपिप्पलमाहुः

एष विद्वान् अपरोक्षज्ञानी आत्मक्रीडः भगवद्विषयकक्रीडावान् । आत्मरतिः भगवद्दर्शनजनितसंस्कारसन्तोषवान् क्रियावानात्मविषयकसमस्तक्रियावान्यतो अतो ब्रह्म परोक्षतो जानतां सकाशादयं वरिष्ठ इत्यर्थः ।। **ध्यानं साधनमुक्तमिति** ।। ओमित्येवं ध्यायतेत्यनेनेत्यर्थः ।। ४ ।।

**वामंन.टी.**—ईशदर्शनं जीवादन्यत्वेनेति यदुक्तं तच्चान्यत्वं चैत्रमैत्रयोरिव न साक्षाद्भिन्नत्वमात्रं किन्तु भोगवैलक्षण्यात्मकमेवेत्याह— **प्राणो ह्येष इति** ।। एष भगवान् सर्वप्रणेतृत्वात्तैः सह विभातीत्येतावदेव जानन् ब्रह्मविदपि तस्यात्यन्तवैलक्षण्याधिक्यवाची न जायते । अत्यन्तान्यनिरपेक्ष्यतया आत्मन्येवात्मना क्रीडते रमते चेत्यत्यन्तविलक्षणानन्तधर्मवानिति विजानन् । नन्वेवातिवादित्वेन ब्रह्मविदां वरिष्ठो जायते ।। ४ ।।

**न.टी.**—पश्यते इत्युक्तजीवन्मुक्त्यवस्थामाह— **प्राण इति** ।। हि यस्मात् एष परमात्मा सर्वभूतैश्चक्षुरादिभिः प्राणः दर्शनादिसर्वचेष्टाकर्ता सन् विभाति । तस्मादेवं जानन् विशेषेण जानन् विद्वान् अपरोक्षज्ञानी अतिवादी अहमेव द्रष्टा श्रोता इत्याद्यतिवादी न भवति । तर्हि कथं भवतीत्यत आह— **आत्मक्रीड इति** ।। आत्मविषयकविचारलक्षणक्रीडा यस्य सः । आत्मरतिः परमात्मदर्शनादिनिमित्तसुखः । क्रियावान् मोक्षे अतिशयाधायकसत्कर्मवान् । ब्रह्मविदां वरिष्ठ एव भवति ।। ४ ।।

**रा.खं.**—विद्वानिति प्रकृतजीवन्मुक्तस्य स्थितिप्रकारमाह— **प्राणो ह्येष इति** ।। विद्वानतिवादी न भवते न भवति । कुतः? सर्वभूतैः सर्वेन्द्रियादिभिरेषः प्राण एव प्रकृष्टचेष्टको हरिरेव विभाति स्वतन्त्रो वर्तते, अहं त्वस्वतन्त्र इति विजानन् हि यतो वर्तते अत इति योजना । अतिवादी न चेत्कथं तर्ह्यास्त इत्यत आह-— **आत्मक्रीड इति** ।। आत्मना भगवता क्रीडत इत्यात्मक्रीडः । आत्मदर्शनजं सुखं प्राप्त इत्यात्मरतिः । भगवदाराधनैकक्रियावान् । ब्रह्मविदामेष वरिष्ठः श्रेष्ठः ।। ४ ।।

**स.टी.**—तत्प्रकारमाह— **प्राणो हीति** ।। यो विजानन् विद्वानतिवादी न भवति । किं कारणम् । सर्वभूतैरिन्द्रियादिभिरेष प्राण एष विभाति अहमस्वतन्त्र इति विजानन्यतः अतः । अतिवादी न चेत्कथं तिष्ठति । अत्रोत्तरं पठति— **आत्मक्रीड इति** ।। ४ ।।

**श्री.टी.**—जीवन्मुक्तापरपर्यायस्यापरोक्षज्ञानिनः स्थितिमाह— **प्राणो हीत्यादिना** ।। विद्वानपरोक्षज्ञानी अतिवादी अहमेव ज्ञास्येऽहमेव करोमीत्येवं स्वात्मानमतिशयितत्वेन वदन्न भवते न भवति । कुतः यतोऽस्य ज्ञानिनः सर्वभूतैः सर्वभूतोपचितैस्तैजसाहंकारकार्यैः सर्वेन्द्रियैस्तज्जन्यज्ञानादिकारणतयेति यावत् । प्राण एव प्रकृष्टचेष्टको भगवानेव विभाति । यतश्चायं विजानन्नहमस्वतन्त्र इति ज्ञानवान् तस्मादित्यर्थः । सर्वेन्द्रियजन्यज्ञानकर्मादौ भगवत एव स्वातन्त्र्येण कारणत्वमात्मनश्चास्वातन्त्र्यं च जानन्कथमतिवादी भवेदिति भावः । एष विद्वान् अपरोक्षज्ञानी आत्मक्रीडः भगवद्विषयकक्रीडावान् । आत्मरतिर्भगवद्दर्शनजनितसन्तोषवान् । क्रियावानात्मविषयकसमस्तक्रियावान्यतोऽतो ब्रह्मविदां ब्रह्मापरोक्षेण जानतां सकाशादयं वरिष्ठ इत्यर्थः ।। ४ ।।

**उ.टी.**—पूर्वमन्त्रे ब्रह्मापरोक्षज्ञानेन सञ्चितागामिकर्मणां नाशाश्लेषावुक्तौ । प्रारब्धकर्मणां तु भोगेनैव क्षयः । यथोक्तम् "भोगेन त्वितरे क्षपयित्वे"ति । प्रारब्धभोगकाले च ज्ञानी स्वविहितकर्मादिकं करोतीत्याह— **प्राणो ह्येष इति** ।। अत्र क्रियावानित्यावर्तनीयम् । तथाच क्रियावान्कर्मवान् । प्रारब्धकर्मवानिति यावत् । विद्वानपरोक्षज्ञानी । एषः प्रकृतो हरिरेव । सर्वभूतैः इन्द्राद्यभिमानिसर्वदेवैः । प्राणः प्रकृष्टचेष्टकः सन् विभाति । सर्वजीवदेहेषु प्रकाशते । अतो नाहं स्वतन्त्रकर्ता किन्तु हरिरेवेति विजानन् सन् । अतिवादी अहमेव कर्तेत्याद्यतिवादयुक्तो न भवते । व्यत्ययेनात्मनेपदम् । न भवति । किन्त्वात्मक्रीडः आत्मनो भगवतः क्रीडासृष्ट्यादिक्रीडाध्येयत्वेन यस्य स आत्मक्रीडः । सृष्ट्यादिकर्तृत्वेन भगवद्ध्यानवान्भवतीति यावत् । एवं ज्ञानी सम्प्रज्ञातसमाधियुक्तो भवतीत्युक्त्वा

कदाचिदसम्प्रज्ञातसमाधियुक्तोऽपि भवतीत्याह— **आत्मरतिरिति** ।। आत्मदर्शननिमित्ता रतिः स्वरूपसुखं यस्य सः आत्मरतिः असम्प्रज्ञातसमाधियुक्तो भवतीत्यर्थः । बाह्यार्थानुसन्धानं यत्र नास्ति स एवासम्प्रज्ञातसमाधिः । इतरस्तु सम्प्रज्ञातसमाधिरिति विवेकः । यदा त्वसम्प्रज्ञातसमाधिर्नास्ति तदा सत्कर्माणि करोतीत्याह— **क्रियावानिति** ।। भगवत्पूजात्मककर्मकर्तेत्यर्थः । न केवलमेतावत् । किन्तु भागवतशास्त्रव्याख्यानादिकर्मापि करोतीत्याह— **एष ब्रह्मविदां वरिष्ठ इति** ।। एषः ब्रह्मापरोक्षज्ञानी ब्रह्मविदां स्वावरब्रह्मज्ञानिनाम् । वरिष्ठः उपदेशकतया अतिशयेन वरः सच्छास्त्रोपदेष्टा भवतीत्यर्थः ।। ४ ।।

**आ.टी.**——निरञ्जन इति जीवन्मुक्तस्यावस्था सूचिता । तत्प्रकारमाह— **प्राण इति** ।। हि यस्मादेषः प्राणः परमात्मैव सर्वभूतैस्तदिन्द्रियादिभिः प्रवर्तमानो विभातीति विजानन्वर्तते विद्वान् अतो नातिवादी नाहंकारादिमान् भवति । अतिवादी न चेत्कथं तिष्ठतीत्यत आह— **आत्मेति** ।। एष ब्रह्मविदां वरिष्ठः ब्रह्मज्ञान्युत्तमो जीवन्मुक्तः आत्मना क्रीडा यस्य स तथा परमात्मन्येव रतिर्यस्य स आत्मरतिः ब्रह्मैकनिष्ठस्सन् शरीरयात्रार्थं यदृच्छालब्ध भक्षणक्रियावांस्तिष्ठति ।।

**गू.टी.**——पुण्यपापे विधूय निरञ्जन इति पादाभ्यां भ जीवन्मुक्त्यवस्था सूचिता तत्प्रकारमाह— **प्राण इति** ।। विद्वानतिवादी भवते । कस्मात् सर्वभूतैरिन्द्रियादिभिरेषः प्राण ईश्वर एव विभाति प्रवर्तते। अहमस्वतन्त्र इति विजानन् हि यतो वर्तते अतः । अतिवादी न चेत्कथं तिष्ठति इत्यत आह— **आत्मक्रीड इति** ।। लौकिकक्रियावानप्येष ब्रह्मज्ञानी परमात्मनैव क्रीडते । परमात्मन्येव रतियुक्तो भवति ।। ४ ।।

## उपनिषत्

**सत्येन लभ्यस्तपसा ह्येष**
**आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येष नित्यम् ।**

**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो**
**यं पश्यन्ति यतयः क्षीणदोषाः ।। ५ ।।**

**व्या.टी.**——प्रकृतेश्वरप्राप्तेः ज्ञानं साधनं ज्ञानस्य ध्यानं साधनमुक्तं तत्सहकारीण्याह-– **सत्येनेति** ।। ब्रह्मचर्येण गुह्येन्द्रियनियमेन । क्षीणदोषत्वं च कारणान्तरमिति सूचयति— **क्षीणेति** ।। ५ ।।

**ध.टि.**——।। **सत्येनेतीति** ।। सत्येन सत्यवचनेन । तपसा सन्तापात्मककृच्छ्रादिरूपेण । मननरूपालोचनात्मकेन वा । सम्यज्ज्ञानेन श्रवणजनितेन ब्रह्मचर्येण सर्वेन्द्रियाणां ब्रह्मणि चरणेन गुह्येन्द्रियनियमनेन वा । एतैः साधनैः नित्यं नियमेन लभ्यः प्राप्यः । ध्यानविषयो भवतीति यावदित्यर्थः ।। **क्षीणेतीति** ।। क्षीणदोषाः जितकामाद्यरिषड्वर्गाः यतयः श्रवणमननध्यानरूपप्रयत्नवन्तोऽधिकारिणो भगवन्तं पश्यन्ति । यं पश्यन्ति तमन्तःशरीरे स्वरूपतः बाह्यशरीरान्तश्च । उपलक्षणमेतत् । सर्वत्र च पश्यन्ति । स च ज्योतिर्मयो ज्ञानरूपः शुभ्रः शुद्धः जीववन्न शरीरप्रयुक्तदुःखादिभागित्यर्थः । सर्वथा भाव्यम् । सत्यनिष्ठत्वेनेति शेषः ।। ५ ।।

**वामन.टी.**——आत्मक्रीडादिमान् भगवान् केनोपायेन सुलभ इत्याकांक्षायामाह— **सत्येनेत्यादि** ।। सत्याख्यभगवत्प्रसादेन सत्यादिधर्मानुष्ठानेन हि स एष आत्मा जीवे स्वशरीरे प्रत्यक्षतो लभ्यते ।। ५ ।।

**न.टी.**——"तद्विज्ञानेन परिपश्यन्ति धीरा" इत्यपरोक्षज्ञानसाधनमुक्तम् । तत्सहकारीण्याह— **सत्येनेति** ।। क्षीणरागादिदोषाः यतयः यं पश्यन्ति स एषः ज्योतिर्मयः शुभ्रः आत्मा हि साधुगुणत्वात्सत्यं ब्रह्म । तेन तन्निष्ठमनस्कत्वेन । तपसा शास्त्रावमर्शनेन सम्यक् ज्ञानेन दृढज्ञानेन । नित्यं ब्रह्मचर्येण इन्द्रियनिग्रहेण अन्तःशरीरे लभ्य अपरोक्षविषयो भवति ।। ५ ।।

**रा.खं.**——भगवदपरोक्षज्ञानाय ध्यानरूपं साधनमुक्तं ध्यायत आत्मानमित्यत्र

तत्सहकारीण्याह— **सत्येनेति** ।। सत्येन यथार्थवचनेन, तपसा वर्णाश्रमोचित-धर्मानुष्ठानपूर्वं नित्यं भगवदनुचिन्तनेन, सम्यग्ज्ञानेन गुरूपदेशजन्यतत्त्वविषयक-सम्यग्ज्ञानेन, नित्यं सर्वेन्द्रियनियमनरूपब्रह्मचर्येणान्तःशरीरे शरीरान्तः ज्योतिर्मयः प्रचुरप्रकाशः, शुभ्रः शुद्धः जडामिश्रः एष आत्मा लभ्योऽपरोक्षविषयोऽपरोक्षद्वारा प्राप्य इति वाऽर्थः । क्षीणदोषा यतयः प्रयत्नशीलाः यं पश्यन्ति एष आत्मेत्यन्वयः ।। ५ ।।

**स.टी.**——प्रकृतेश्वरज्ञानस्य ध्यानं साधनमुक्तं तत्सहकारीणि कानि । अत उत्तरं पठति— **सत्येनेति** ।। ब्रह्मचर्येण गुह्येन्द्रियनियमनेन । क्षीणदोषत्वं कारणान्तरम्। ध्यानं कारणं सत्यमुक्तम् । तद्विपरीतानृततन्नियामकनिन्दनेन सत्यनियामकभगवन्नियतेन ।। ५ ।।

**श्री.टी.**——प्रकृतेश्वरापरोक्षज्ञानस्य ध्यानं साधनतयोक्तमिदानीं तत्सहकारीण्याह-— **सत्येनेति** ।। सत्येन सत्यवचनेन । तपसा सन्तापात्मककृच्छ्रादिरूपेण । मननरूपालोचनात्मकेन वा । सम्यज्ज्ञानेन श्रवणजनितेन । ब्रह्मचर्येण सर्वेन्द्रियाणां ब्रह्मणि चरणेन गुह्येन्द्रियनियमनेन वा । एतैः साधनैः एष आत्मा परमात्मा नित्यं नियमेन लभ्यो ध्यानप्राप्यः । ध्यानविषयो भवतीति यावत् । क्षीणदोषत्व-मप्येकं ध्याने साधनमिति सूचयन्प्रकृतध्यानफलमपरोक्षज्ञानं तदधिकरणं च वदंस्तद्विषयस्य भगवतः स्वरूपं चाह— **अन्तःशरीर इति** ।। क्षीणदोषाः जितकामाद्यरिषड्वर्गाः यतयः श्रवणमननध्यानरूपप्रयत्नवन्तोऽधिकारिणो भगवन्तं पश्यन्ति । यं पश्यन्ति तमन्तः शरीरे स्वरूपशरीरान्तर्बाह्यशरीरान्तश्च । उपलक्षण-मेतत् । सर्वत्र पश्यन्ति स च ज्योतिर्मयो ज्ञानरूपः स्वप्रकाश इति यावत् । शुभ्रः शुद्धः । जीववन्न शरीरस्थितिप्रयुक्तदुःखादिभागित्यर्थः ।। ५ ।।

**उ.टी.**——एवं ज्ञानिभिरपि कर्मादिकमनुष्ठीयत इत्युक्तम् । तथानुष्ठानं लोक-संग्रहार्थमेव नतु फलार्थमिति मतनिरासाय इदानीं तत्फलमाह— **सत्येनेति** ।। अत्र नित्यमित्यस्य सत्येनेत्यादिनान्वयः । सत्येन । "यत्सतां हितमत्यन्तं

तत्सत्यमिति कीर्तितमि"त्युक्तसत्यवचनेन, तपसा "देवद्विजगुरुप्राज्ञपूजनमि" त्याद्युक्तत्रिविधतपसा, सम्यज्ज्ञानेन परिपक्वापरोक्षज्ञानेन च, ब्रह्मचर्येण श्रवणादि-रूपवेदाभ्यासेन च, आत्मा स्वरूपभूतः एषः "ते ये शतं मानुषा आनन्दा" इत्यादिप्रमाणमितः पूर्णानन्दः लभ्यः प्राप्यः । ज्ञानोत्तरं कृतनिष्कामकर्मणा श्रवणादिना अपरोक्षज्ञानेन च यावत्स्वरूपानन्दाविर्भावो भवतीत्यर्थः । एतच्च प्रमाणसिद्धमिति सूचयितुं हीत्युक्तम् । तदुक्तम्—

सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चानन्दचित्रता ।। इति ।।

ध्यानेनापरोक्षज्ञानं भवतीत्युक्तम् । तस्य ध्यानस्य सहकारिजातं वदन्नेवापरोक्षज्ञानं यदधिष्ठाने भवति तदपि सूचयति— **सत्येनेति** ।। क्षीणदोषाः यतयः श्रवणाद्य-नुकूलप्रयत्नवन्तः अन्तःशरीरे शरीरमध्ये यं पश्यन्ति । स एषः ज्योतिर्मयः प्रचुरप्रकाशः शुभ्रः शुद्धः जडामिश्रः आत्मा भगवान् । सत्येन सत्यवचनेन । तपसा कायिकवाचिकमानसिकभेदात् त्रिविधेन तपसा । सम्यज्ज्ञानेन माहात्म्य-ज्ञानेन । तत्सहितस्नेहरूपभक्त्येति यावत् । नित्यं ब्रह्मचर्येण गुह्येन्द्रियनियमनेन । यद्यपि तपोग्रहणेनैव लब्धमेतत् । "ब्रह्मचर्यमहिंसा च शारीरं तप उच्यत" इत्युक्तेः । तथापि कुरुपाण्डवन्यायेन विशेषद्योतनार्थं पृथगुक्तिः । एवं सत्येनेत्या-दावपि द्रष्टव्यम् । लभ्यः साक्षात्कर्तव्य इत्यर्थः । अत्र अन्तश्शरीर इत्यनेन देहमध्ये ब्रह्मदर्शनं भवतीति सूचितम् । क्षीणदोषा इत्यादिना तु रागद्वेषाद्यभावः । श्रवणादिकं नित्यनैमित्तिकं कर्मानुष्ठानं भक्त्यादिकं च साक्षात्कारे जननीये ध्यानस्य सहकारीति सूचितमिति ज्ञातव्यम् ।। ५ ।।

**आ.टी.——**प्रकृतेश्वरप्राप्तेर्ज्ञानं साधनमुक्तं तत्सहकारीण्याह— **सत्येनेति** ।। शरीरेऽन्तर्ज्योतिर्मयः शुद्ध आत्मा व्याप्त एष विष्णुः सत्येन सत्यस्य प्रसादेन तपसा आलोचनेन कायक्लेशेन ब्रह्मचर्येण एतैर्युक्तेन सम्यग्ज्ञानेन नित्यं नियमेन लभ्यः प्राप्यः । यतयः प्रयत्नवन्तः क्षीणक्लेशाः प्रतिबन्धकपापहीना एव पश्यन्ति । स एषः प्राप्य इति पूर्वेणान्वयः ।। ५ ।।

**गू.टी.**——ईश्वरापरोक्षे ध्यानं मुख्यकारणमपरं चाह— **सत्येनेति** ।। नरैर्नित्यं सत्यं तपः सम्यक् परोक्षनिश्चयब्रह्मचर्येणैष ईश्वरो लक्ष्यो ध्येयो भवति । रागादिराहित्यं च कारणान्तरमिति सूचयति— **क्षीणेति** ।। ये रागादिदोषशून्या जितेन्द्रियाः ते यं पश्यन्ति सः शरीरान्तःप्रकाशरूपः शुद्धस्तिष्ठति ।। ५ ।।

## उपनिषत्

**सत्यमेव जयति नानृतं**
**सत्येन पन्था विततो देवयानः ।**
**येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत्सत्यस्य परमं निधानम् ।। ६ ।।**

**व्या.टी.**——तत्सर्वथा भाव्यं मुमुक्षोरित्याशयेन सत्यं स्तुवंस्तद्भावेऽपीश्वर-बहिर्मुखस्य न मोक्ष इत्याह— **सत्यमिति** ।। सत्यनिष्ठ इत्यर्थः । यत्र लोके सत्यस्य परमात्मनः परमं सन्निधानं तं लोकं प्रति येन पथा आप्तकामा ऋषयः आक्रमन्ति गच्छन्ति । अयं पन्थाः सत्येन विततः ।। ६ ।।

**ध.टि.**——**तद्भावेऽपीति** ।। इतरसाधनसद्भावेऽपीत्यर्थः । सत्यं सत्यः सद्गुण-त्वात्सत्यो भगवान्विष्णुः । अर्शाद्यजन्तत्वेन तद्वान्सत्य इत्यभिप्रेत्य व्याख्याति-— **सत्यनिष्ठ इत्यर्थ इति** ।। सत्यनिष्ठ एव पुमान् तत्प्रसादेन जयति वैकुण्ठादि-दिव्यलोकानाप्नोति । अनृतं अनृतः । ऋत सत्यशब्दयोरेकार्थत्वात्सत्यनामक-भगवद्विरुद्धः अनृतः । असुर इति यावत् । न लोकं जयतीत्यर्थः । कुत एवं सत्ये निष्ठस्य वैकुण्ठादिलोकप्राप्तिर्नान्यस्येत्यतस्तत्प्राप्तिमर्गस्य तदधीनत्वादित्याह-— **सत्येनेति** ।। तद्वाक्यं योजयति— **यत्रेति** ।। विततो विस्तृतस्तदधीन इति यावत् ।। ६ ।।

**वामन.टी.**——सत्यानुग्रहमपि तद्विरोध्यनृतं विघटयतीत्यत आह— **सत्य-मेवेति** ।। अत्रायमभिसन्धिः । सत्यादिधर्मप्रवर्तकः सत्याख्यो भगवानेवानृता-

तत्सत्यमिति कीर्तितमि"त्युक्तसत्यवचनेन, तपसा "देवद्विजगुरुप्राज्ञपूजनमि" त्याद्युक्तत्रिविधतपसा, सम्यज्ज्ञानेन परिपक्वापरोक्षज्ञानेन च, ब्रह्मचर्येण श्रवणादिरूपवेदाभ्यासेन च, आत्मा स्वरूपभूतः एषः "ते ये शतं मानुषा आनन्दा" इत्यादिप्रमाणमितः पूर्णानन्दः लभ्यः प्राप्यः । ज्ञानोत्तरं कृतनिष्कामकर्मणा श्रवणादिना अपरोक्षज्ञानेन च यावत्स्वरूपानन्दाविर्भावो भवतीत्यर्थः । एतच्च प्रमाणसिद्धमिति सूचयितुं हीत्युक्तम् । तदुक्तम्—

सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चानन्दचित्रता ।। इति ।।

ध्यानेनापरोक्षज्ञानं भवतीत्युक्तम् । तस्य ध्यानस्य सहकारिजातं वदन्नेवापरोक्षज्ञानं यदधिष्ठाने भवति तदपि सूचयति— **सत्येनेति** ।। क्षीणदोषाः यतयः श्रवणाद्यनुकूलप्रयत्नवन्तः अन्तःशरीरे शरीरमध्ये यं पश्यन्ति । स एषः ज्योतिर्मयः प्रचुरप्रकाशः शुभ्रः शुद्धः जडामिश्रः आत्मा भगवान् । सत्येन सत्यवचनेन । तपसा कायिकवाचिकमानसिकभेदात् त्रिविधेन तपसा । सम्यज्ज्ञानेन माहात्म्यज्ञानेन । तत्सहितस्नेहरूपभक्त्येति यावत् । नित्यं ब्रह्मचर्येण गुह्येन्द्रियनियमनेन । यद्यपि तपोग्रहणेनैव लब्धमेतत् । "ब्रह्मचर्यमहिंसा च शारीरं तप उच्यत" इत्युक्तेः । तथापि कुरुपाण्डवन्यायेन विशेषद्योतनार्थं पृथगुक्तिः । एवं सत्येनेत्यादावपि द्रष्टव्यम् । लभ्यः साक्षात्कर्तव्य इत्यर्थः । अत्र अन्तश्शरीर इत्यनेन देहमध्ये ब्रह्मदर्शनं भवतीति सूचितम् । क्षीणदोषा इत्यादिना तु रागद्वेषाद्यभावः । श्रवणादिकं नित्यनैमित्तिकं कर्मानुष्ठानं भक्त्यादिकं च साक्षात्कारे जननीये ध्यानस्य सहकारीति सूचितमिति ज्ञातव्यम् ।। ५ ।।

**आ.टी.**——प्रकृतेश्वरप्राप्तेर्ज्ञानं साधनमुक्तं तत्सहकारीण्याह— **सत्येनेति** ।। शरीरेऽन्तर्ज्योतिर्मयः शुद्ध आत्मा व्याप्त एष विष्णुः सत्येन सत्यस्य प्रसादेन तपसा आलोचनेन कायक्लेशेन ब्रह्मचर्येण एतैर्युक्तेन सम्यग्ज्ञानेन नित्यं नियमेन लभ्यः प्राप्यः । यतयः प्रयत्नवन्तः क्षीणक्लेशाः प्रतिबन्धकपापहीना एव पश्यन्ति । स एषः प्राप्य इति पूर्वेणान्वयः ।। ५ ।।

**गू.टी.**——ईश्वरापरोक्षे ध्यानं मुख्यकारणमपरं चाह— **सत्येनेति** ।। नरैर्नित्यं सत्यं तपः सम्यक् परोक्षनिश्चयब्रह्मचर्येणैष ईश्वरो लक्ष्यो ध्येयो भवति । रागादिराहित्यं च कारणान्तरमिति सूचयति— **क्षीणेति** ।। ये रागादिदोषशून्या जितेन्द्रियाः ते यं पश्यन्ति सः शरीरान्तःप्रकाशरूपः शुद्धस्तिष्ठति ।। ५ ।।

## उपनिषत्

**सत्यमेव जयति नानृतं**
**सत्येन पन्था विततो देवयानः ।**
**येनाऽऽक्रमन्त्यृषयो ह्याप्तकामा**
**यत्र तत्सत्यस्य परमं निधानम् ।। ६ ।।**

**व्या.टी.**——तत्सर्वथा भाव्यं मुमुक्षोरित्याशयेन सत्यं स्तुवंस्तद्भावेऽपीश्वरबहिर्मुखस्य न मोक्ष इत्याह— **सत्यमिति** ।। सत्यनिष्ठ इत्यर्थः । यत्र लोके सत्यस्य परमात्मनः परमं सन्निधानं तं लोकं प्रति येन पथा आप्तकामा ऋषयः आक्रमन्ति गच्छन्ति । अयं पन्थाः सत्येन विततः ।। ६ ।।

**ध.टि.**——**तद्भावेऽपीति** ।। इतरसाधनसद्भावेऽपीत्यर्थः । सत्यं सत्यः सद्गुणत्वात्सत्यो भगवान्विष्णुः । अर्शाद्यजन्तत्वेन तद्वान्सत्य इत्यभिप्रेत्य व्याख्याति— **सत्यनिष्ठ इत्यर्थ इति** ।। सत्यनिष्ठ एव पुमान् तत्प्रसादेन जयति वैकुण्ठादिदिव्यलोकानाप्नोति । अनृतं अनृतः । ऋत सत्यशब्दयोरेकार्थत्वात्सत्यनामकभगवद्विरुद्धः अनृतः । असुर इति यावत् । न लोकं जयतीत्यर्थः । कुत एवं सत्ये निष्ठस्य वैकुण्ठादिलोकप्राप्तिर्नान्यस्येत्यतस्तत्प्राप्तिमर्गस्य तदधीनत्वादित्याह— **सत्येनेति** ।। तद्वाक्यं योजयति— **यत्रेति** ।। विततो विस्तृतस्तदधीन इति यावत् ।। ६ ।।

**वामन.टी.**—सत्यानुग्रहमपि तद्विरोध्यनृतं विघटयतीत्यत आह— **सत्यमेवेति** ।। अत्रायमभिसन्धिः । सत्यादिधर्मप्रवर्तकः सत्याख्यो भगवानेवानृता-

ख्यानसुरान् जयति न विपर्ययेण । नच ते वैकुण्ठगमनमार्गं रोद्धुमलम् । तस्यापि पथस्तेनैव विततत्वात् । तथाहि यस्मिन्प्रदेशे सत्यस्य विष्णोस्तत्परमं निधानं वैकुण्ठलोकः तं प्रदेशं येन पथा ब्रह्मदृश ऋषय आक्रमन्ति । स हि देवयानः पन्थाः सत्येन विततः अतः सोऽपि सुगम एव ।। ६ ।।

**वा.टी.**——विद्वान् साम्यमुपैतीत्युक्ते स्वशक्त्या ज्ञानशक्त्या वा उपैतीति भ्रमो जायते । तत्परिहारायाह— **सत्यमिति** ।। सत्यं सद्गुणविशिष्टत्वात्सत्यपदवाच्यं नारायणाख्यं परं ब्रह्मैव जयति संसारं जयति । सत्यपदापरपर्यायऋतपद-वाच्यहरिविरोधिभूतं कल्यादिराक्षसकुलं संसारं न जयतीति श्रुतेरभिमतोऽर्थः । उपलक्षणया सत्यवचनं संसारं जयति । अनृतपदोपलक्षितानृतवचनं च मुक्ति-विरोधीत्यपि ग्राह्यम् ।। ६ ।।

**न.टी.**——मुमुक्षोः सत्यनिष्ठत्वमावश्यकम् । इतरसाधनसद्भावेऽपि तदभावे मोक्षो न भवतीत्याह— **सत्यमिति** ।। सत्यमेव सत्यनामकभगवन्निष्ठ एव जयति मोक्षं प्राप्नोति । अनृतं भगवद्विरुद्धनिष्ठाः न जयन्ति । यत्र वैकुण्ठे सत्यस्य भगवतः परमं निधानं अभिव्यक्तत्वेनावस्थानम् । तत् वैकुण्ठस्थानं येन पथा आप्तकामा ऋषयः आक्रमन्ति प्राप्नुवन्ति । स देवयानः सत्येन भगवन्निष्ठत्वेनैव विततः प्राप्यतया सन्ततः ।। ६ ।।

**रा.खं.**——हरिभक्तस्यैव भगवत्प्राप्तिर्न तद्विमुखस्येत्याह— **सत्यमेवेति** ।। सद्गुणत्वहेतुना सत्यमिति हरिरुच्यते । तन्निष्ठभक्त्यतिशयेन तस्मिन्नेव मग्नत्वहेतुना सत्यभक्तोऽपि सत्यपदेनात्र गृह्यते । तथाच सत्यं सत्याख्यभगवन्निष्ठायुक्तमधिकारि-जीवजातमेव जयति प्राप्नोति । आत्मानमिति विपरिणामेनान्वयः । नानृतं ऋताख्यहरिविरुद्धत्वहेतुना अनृतपदाभिधेयमसुरजातं न जयत्यात्मानमित्यर्थः । कुत एवं सत्यनिष्ठ एव तमाप्नोति, नान्य इत्यतस्तत्प्राप्तिमार्गस्य तदधीनत्वादाह-— **सत्येनेति** ।। योजना तु— यत्र लोके सत्यस्य सद्गुणस्य हरेः परमं तन्निधानं प्रत्यक्षतया सन्निधानं तं वैकुण्ठलोकं येन पथा मार्गेण आप्तकामा ऋषयो

ज्ञानिनः आक्रमन्ति गच्छन्ति अयं देवयानाख्यः पन्थाः सत्येन हरिणा विततो विस्तृतस्तदधीन इति यावत् ।। ६ ।।

**स.टी.**——सत्यं स्तौति— **सत्यमेवेति** ।। अथवा सत्यं ब्रह्ममीमांसा ।। ६ ।।

**व.टी.**——यदा पश्यत्यन्यमीशमित्यत्र भगवज्ज्ञानान्मोक्षोऽस्तीत्युक्तम् । तत्र यथा भगवद्ज्ञानान्मोक्षस्तथा तदन्यभजनादपि स भवति किमित्यपेक्षाया-मुच्यते— **सत्यमेव जयतीति** ।। ६ ।।

**श्री.टी.**——अवश्यमधिकारिणा भगवन्निष्ठेन भाव्यम् । नान्यथेत्याशयेन भगवन्निष्ठं स्तुवन् तदनिष्ठं निन्दयति— **सत्यमेवेति** ।। सत्यं सत्यः सद्गुणत्वात्सत्यो भगवान्विष्णुः । अर्श आद्यजन्तत्वेन तद्वान्सत्यः । तन्निष्ठ एवेति यावत् । पुमान् जयति । तत्प्रसादेन वैकुण्ठादिदिव्यलोकान्प्राप्नोति । अनृतं अनृतः । ऋतसत्यशब्दयोरेकार्थत्वात्सत्यनामकभगवद्विरुद्धः पूर्वावगतवत्सदा स्थितेर्वा ऋतं विष्णुस्तद्विरुद्धोऽनृतः । असुर इति यावत् । न लोकं जयति । ननु कथ-मस्य सत्यनिष्ठस्य वैकुण्ठादिलोकप्राप्तिस्तत्प्राप्तिसाधनीभूतमार्गाज्ञानादित्यत आह-— **सत्येनेत्यादिना** ।। यत्र लोके वैकुण्ठादौ सत्यस्य सद्गुणस्य विष्णोस्तत्प्रसिद्धं परमं निधानं सन्निधानमस्ति यत्र स्थिता ऋषयो ज्ञानिन आप्तकामा भवन्ति तं लोकं ऋषयो येन पथा आक्रमन्ति गच्छन्ति अयं देवयानस्तत्सञ्ज्ञकः पन्थाः सत्येन विष्णुनैव विततः प्रकाशितः । भगवानेव स्वाधिष्ठितलोकप्राप्ति-साधनभूतं मार्गं प्रकाशयतीति भावः ।। ६ ।।

**उ.टी.**—फलाध्यायोक्तो मोक्षश्चतुर्विधः । कर्मक्षयः चरमदेहक्षयः मार्गो भोगश्चेति । तत्र "क्षीयन्ते चास्य कर्माणी"त्यादिना अपरोक्षज्ञानस्य कर्मक्षयफलकत्वमुक्तम् । चरमदेहक्षयस्तु देवानां स्वोत्तमप्रवेशेन भवतीति वेदान्तविज्ञानेति मन्त्रे सूचयिष्यते । द्वितीयेन मार्गेण परब्रह्मप्राप्तिं वक्तुमुत्तरो मन्त्रः । तत्र ज्ञानिनस्त्रिविधाः ।

सन्तस्तु त्रिविधा ज्ञेया उत्तमाधममध्यमाः ।

उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः ।।

अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः ।। इत्युक्तेः ।।

तत्राप्रतीकालम्बना उत्तमाः । व्याप्तदर्शित्वात् । तेषां मध्ये देवव्यतिरिक्तानामुत्तमाना-मर्चिरादिमार्गेण गम्यं दर्शयति— **सत्यमेव जयतीति** ।।

ततश्चायं मन्त्रार्थः—यत्र लोके सत्यस्य विष्णोः परमं निधानं प्राकट्येन सन्निधानं तत् वैकुण्ठलोकम् । तत्स्थं परं ब्रह्मेति यावत् । आप्तकामाः आप्तमहाज्ञानाः ऋषयः प्रत्येकं शतसङ्ख्याकाः ऋषिराजगन्धर्वाः । येन देवयानेन पथा आक्रमन्ति गच्छन्ति स देवयानः देवयानसंज्ञिकः पन्था अर्चिरादिमार्गो येन सत्येन विततः स्वप्राप्त्यर्थं निर्मितः तं सत्यं विष्णुम् । वैकुण्ठलोकस्थमिति शेषः । तेन न चतुर्थपादोक्तवैय्यर्थ्यम् । देवयानेनेति शेषः । प्रकृतत्वात् । एवं भगवदपरोक्षज्ञानेन जयति प्राप्नोति । आधुनिकोऽप्यप्रतीकालम्बन इति शेषः । नत्वनृतमसुरं प्राप्नोतीति । ज्ञानस्य नानिष्टफलकत्वमिति दर्शयितुमिदमुक्तम् । विष्णुनामका-पभ्रष्टदेवव्यावृत्त्यर्थमिदमुक्तमित्यप्याहुः । अत्र देवयाननामकार्चिरादिमार्गेण भगवन्तं प्राप्नोतीत्यर्थे मानमुच्यते ।

उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः ।।
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ।।
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ।। इति ।। ६ ।।

**आ.टी.**——सत्येन लभ्य इत्युक्तस्य सत्यस्य माहात्म्यमाह— **सत्यमिति** ।। सत्यं ब्रह्मैव जयति तद्भक्तो जयतीति यावत् । अनृतं ब्रह्मविरोधि असुरव्रातेन जय इति । यत्र वैकुण्ठादिलोके सत्यस्य ब्रह्मणः परमनिधानं सन्निधानमस्ति तं लोकं येन पथा ब्रह्मयानेन प्रक्रामन् ऋषयो ज्ञानिनः प्राप्नुवन्ति स यथा ब्रह्मयानः सत्येन ब्रह्मणा विततो व्याप्तः कृतः । स्वभक्तार्थमित्यर्थः ।। ६ ।।

**गू.टी.**——सर्वथा सत्यं भाव्यं मुमुक्षोरित्याशयेन सत्यं स्तुवन् तद्भावेऽपीश्वरबहिर्मुखस्य न मोक्ष इत्याह— **सत्यमिति** ।। सद्गुणवत्त्वात्सत्यनामा सत्यनिष्ठो हरिर्जयत्युत्कृष्टो वर्तते । तज्ज्ञानी च जयति मुक्तो भवति । ऋतं ब्रह्म तद्विरुद्धमसुरजातमनृतं तन्न जयति नोर्ध्वं गच्छति । किन्त्वध एव देवयानः पन्थाः सत्येन हरिणा विततः कृतः पालितश्च यत्र वैकुण्ठादिलोकः सत्यस्य परमात्मनः परमं सन्निधानं तं लोकं प्रति येन यथा आप्तकामा ऋषयः आक्रमन्ति गच्छन्ति स पन्था इति पूर्वेणान्वयः ।। ६ ।।

## भाष्यम्

**सत्यो हि भगवान् विष्णुः सद्गुणत्वात्प्रकीर्तितः ।**
**असुरास्तद्विरुद्धत्वादनृताः परिकीर्तिताः ।।**
**तस्य विष्णोर्निधानं तु वैकुण्ठो लोक उत्तमः ।। इति च ।।**

**व्या.टी.**——सत्यमेव जयति नानृतमित्येतत्प्रसिद्धसत्यानृतपरत्वप्रतीतिं निवारयन् व्याचष्टे— **सत्य इति** ।।

**ध.टि.**—— ।। **सत्य इतीति** ।। तद्विरुद्धत्वादिति सत्यनामकभगवद्विरुद्धत्वादित्यर्थः ।। ऋतसत्यशब्दयोरेकार्थत्वात् । नञश्च विरुद्धार्थत्वादिति भावः । यत्र तत्सत्यस्य परमं निधानमित्यस्यार्थं प्रमाणेन दर्शयति— **तस्येति** ।। सत्यस्येत्यस्यार्थः ।। **तस्य विष्णोरिति** ।। निधीयते अत्रेति निधानं स्थानमित्यर्थः ।।

**वामन.टी.**——अत्रापि सत्यो हि भगवानित्यादि ब्रह्मसारवचनमाह— **सत्य इति** ।।

**स.टी.**——तदाभाषिष्ट— **सत्यो हीति** ।। द्वितीयार्थो तलवकारभाष्येऽवगन्तव्यः ।

**व.टी.**——तस्यार्थः— **सत्यो हीति** ।।

**श्री.टी.**——सत्यमेव जयति नानृतमित्यत्र सत्यानृतशब्दौ प्रसिद्धसत्यानृतवचनपराविति प्रतीतिनिरासाय तदर्थं प्रमाणेन दर्शयति— **सत्यो हीति** ।। तद्विरुद्ध-

त्वादिति । सत्यनामकभगवद्विरुद्धत्वादित्यर्थः । ऋतसत्यशब्दयोरेकार्थत्वान्नञश्च विरुद्धार्थत्वादिति भावः । यत्र तत्सत्यस्य परमं निधानमित्यस्यार्थं प्रमाणशेषेण दर्शयति— **तस्येति** ।। सत्यस्येत्यस्यार्थस्तस्य विष्णोरिति । निधीयतेऽत्रेति निधानं स्थानमित्यर्थः ।।

**उ.टी.**—तत्रान्यथाप्रतीतिनिरासाय सत्यानृतशब्दार्थप्रदर्शकं यत्र सत्यस्य परमं निधानमित्येतद्व्याख्यानरूपं च प्रमाणं पठति— **सत्यो हीति** ।। विष्णुनामकोऽप्य-पभ्रष्टदेवोऽस्ति । तस्यापि ब्रह्मादिवद्यज्ञभागभोक्तृत्वात् । यज्ञभागभोक्तॄणां चापभ्रष्ट-तदितरभेदेन द्वैविध्यस्यान्यत्रोक्तत्वात्तद्व्यावृत्त्यर्थं भगवानित्युक्तम् । विशेष्याव-धारणार्थं विष्णुरित्युक्तमित्याहुः ।। **निधानमिति** ।। निधीयते अत्र इत्यधिकरणे ल्युट् सन्निधानाधिकरणमित्यर्थः । अत्र मन्त्रे सत्यमित्येतत् वैकुण्ठलोकस्थमिति विशेषणीयम् । यत्र तत्सत्यस्येति वाक्यशेषानुरोधात् । एवमित्यस्य भगवज्ज्ञानेने-त्यर्थः । ऋषय इत्येवोक्ते मध्यमज्ञानिनामृषीणां प्रतीतिः स्यात्तन्निवृत्त्यर्थं आप्तकामा इत्युक्तम् । काम्यत इति कामः । महाज्ञानम् । तल्लक्षणं नित्यशो भगवद्रूपस्या-परोक्ष्येण दर्शनम् । "मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकमि"त्यन्यत्रोक्तम् । तथाचाप्तकामाः आप्तः कामो महाज्ञानं यैस्ते आप्तकामाः । मध्यमज्ञानिनस्तु ऋषयो न महाज्ञानवन्तः । किन्तूक्तलक्षणकज्ञानवन्त एव । ब्रह्मलोकगन्तृत्वात् । तस्य चोक्तलक्षणज्ञानसाध्यत्वात् । यथोक्तम् "ज्ञानेन ब्रह्मलोकः स्यादि"ति । तावत्येवोक्ते देवानां प्रतीतिः स्यात् तदर्थं ऋषय इत्युक्तम् ।

अप्रतीका देवता हि ऋषीणां शतमेव च ।
राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा ।।
एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये नतु क्वचित् ।।

इति प्रमाणोक्ताः प्रत्येकं शतसंङ्ख्याकऋषिराजगन्धर्वाः ऋषिपदेनोपलक्षणया ग्राह्याः । तेषां चास्त्येवात्रोच्यमानं वैकुण्ठस्थं विष्णुगन्तृत्वम् । महाज्ञाना-द्धरेर्गतिरिति।

अप्रतीकाश्रया ये हि ते यान्ति हरिमेव तु ।। इति च ।।

## उपनिषत्

**बृहच्च तद् दिव्यमचिन्त्यरूपं**
**सूक्ष्माच्च तत् सूक्ष्मतरं विभाति ।**
**दूरात्सुदूरे तदिहान्तिके च**
**पश्यत्स्विहैव निहितं गुहायाम् ।। ७ ।।**

**व्या.टी.**—सत्येन पन्था विततं इति सत्यं मोक्षदात्रित्युक्तं तस्य कोऽतिशयो येन मोक्षदातृत्वमित्यत आह— **बृहदिति** ।। ७ ।।

**ध.टि.**—**बृहदितीति** ।। तत् सत्यशब्दोक्तभगवत्स्वरूपं बृहत् देशतः कालतो गुणतश्च पूर्णम् । दिव्यमलौकिकम् । अचिन्त्यरूपं साकल्येनाचिन्त्यस्वरूपम् । सूक्ष्मादप्यतिशयेन सूक्ष्मम् । सूर्यादौ स्थित्वा विशेषेण भाति प्रकाशते । सः सत्यशब्दोक्तविष्णुः दूराद्दूरे तिष्ठति । यद्दूराद्दूरे तदेव ह तस्यैव विवरणं अन्तिके चास्ति । सर्वगतत्वादिति भावः ।। ७ ।।

**वामन.टी.**—अथापि ब्रह्मणो विलक्षणधर्मानाह— **बृहच्चेति** ।। ७ ।।

**न.टी.**—सत्यस्य कोऽतिशयः येन मोक्षदातृत्वमित्यत आह— **बृहदिति** ।। तत् सत्यं सूक्ष्माच्च सूक्ष्मतरं स्वप्रकाशत्वं न भवति । सत्यशब्दोक्तः परमात्मा दूराद्दूरे अतिदूरे इहान्तिके अतिसमीपे च सर्वगत्वात् । अन्तिक इत्युक्तं विशदयति-— **पश्यत्स्विति** ।। पश्यतां इह शरीरे तत्रापि हृदयगुहायां निहितम् ।। ७ ।।

**रा.खं.**—सत्यस्य महिमानमाह— **बृहच्च तदित्यादिना** ।। तत्सत्याख्यं वस्तु देशकालगुणैः बृहत् बृंहितम् । विशेषणसमुच्चये चशब्दः । दिव्यमद्भुतमत एवाचिन्त्यरूपम् । सूक्ष्मात् प्रकृत्यादेः तत्सत्यं सूक्ष्मतरं चात्यन्तमप्रतिघम् अणोरणुतरं चेति वार्थः । विभाति विशेषेण प्रकाशमानमास्ते । भा दीप्ताविति धातोः । तत्सत्याख्यं ब्रह्म दूरात्सुदूरे इहान्तिके च । सर्वगत्वादिति भावः । पश्यत्सु पश्यतां ज्ञानिनामिहैव शरीरे हृदयगुहायां निहितं संस्थितम् ।। ७ ।।

**स.टी.**—सत्यवचनादिप्रवर्तकस्य तन्नियामकस्य तथा सत्यशब्दाभिधमीमांसाप्रवर्तकस्य तत्प्रतिपाद्यस्य महिमान्तरमाह— **बृहदिति** ।। ७ ।।

**श्री.टी.**— सत्यशब्दोक्तविष्णुस्वरूपमेव पुनर्निरूपयति— **बृहदित्यादिना** ।। तत् सत्यशब्दोक्तभगवत्स्वरूपं बृहत् देशतः कालतो गुणतश्च पूर्णम् । दिव्यमलौकिकम् । ततत्वाद्व्याप्तत्वात्तदिति वा । साकल्येनाचिन्त्यस्वरूपम् । सूक्ष्माज्जीवस्वरूपादेरतिशयेन सूक्ष्मम् । सूर्यादौ स्थित्वा विशेषेण भाति प्रकाशते। यदादित्यगतं तेज इत्यादेः । स सत्यशब्दोक्तौ विष्णुर्दूराद्दूरे तिष्ठति । यद्दूराद्दूरे तदेव ह तस्यैव विवरणं अन्तिके चास्ति सर्वगतत्वादिति भावः । अन्तिके चेत्युक्तमेव विशदयति— **पश्यत्स्विति** ।। पश्यत्सु ज्ञानवत्सु इह जीवेषु गुहायां हृदयगुहायामेव दहराकाशे निहितं सन्निहितमित्यर्थः ।। ७ ।।

**उ.टी.**—ननु सत्यमेवमित्यत्र ब्रह्मापरोक्षज्ञानेन परब्रह्मप्राप्तिरुक्ता । सम्प्राप्यैनमिति वक्ष्यमाणमन्त्रे च कार्यब्रह्मप्राप्तिरुच्यते । ग्रन्थान्तरे च महरादिलोकप्राप्तिः । तत्कथम् । अपरोक्षज्ञानस्यावैचित्र्येण तत्कार्यवैचित्र्यायोगात् इत्याशंक्य अपरोक्षज्ञानमपि विषयभेदाद्विचित्रमेव अतो नोक्तदोष इति भावेन विषयभेदं वदन्नेव मोक्षहेत्वपरोक्षज्ञानविषयमप्याह— **बृहच्चेति** ।। ननु परममहत्त्वमध्यममहत्त्वपरमाणुत्वानि कथमेकस्यैव ब्रह्मण उच्यन्ते विरोधादित्याशंक्याचिन्त्यशक्तिबलेनोक्तपरिमाणत्रययोपयोगित्वान्न विरोध इति भावेनोक्तम् ।। **अचिन्त्यरूपमिति** ।। अचिन्त्यं रूपं शक्तिर्यस्य तत् अचिन्त्यरूपमित्यर्थः ।।

तदयं मन्त्रार्थः—अचिन्त्यरूपं दिव्यमलौकिकम् । बृहत् मध्यमपरिमाणोपेतम् । परममहत्त्वस्योत्तरत्र वक्ष्यमाणत्वात्तदग्रहः । चशब्दात् आनन्दरूपत्वादिपूर्वोक्तविशेषणविशिष्टम् । तदेवंरूपं परं ब्रह्म । विभाति प्रकाशते । मनुष्योत्तमानामिति शेषः । तेषामेव मानुषा एव बहिःप्रकाशा इत्यत्र दृष्ट्यैव ह्यवताराणामिति स्मृत्यनुसारेणावतारदर्शित्वरूपबहिःप्रकाशत्वाभिधानादिति । सूक्ष्मात्सूक्ष्मतरम् । चशब्दात्पूर्वोक्तविशेषणविशिष्टं च । तत् बिम्बरूपं ब्रह्मेति यावत् । विभाति

प्रकाशते । ऋष्याद्यधिकारिणामिति शेषः । ऋषयोऽन्तःप्रकाशा इति तेषामेव बिम्बदर्शित्वाव्यतिरिक्तान्तर्दर्शितोक्त्या ऋष्यादिमध्यमाधिकारिणामन्तर्दर्शित्वमवगम्यते । तेन ऋषिपदं मध्यमाधिकारिणामुपलक्षणम् । अतः ऋषय इति श्रुत्या सिद्धिरिति । दूरात्सुदूरे अत्यन्तदूरे । इह मध्ये अन्तिके च स्थितम् । सर्वगतमिति यावत् । चशब्दात्पूर्वोक्तविशेषणविशिष्टं च । तत् व्याप्तं ब्रह्म विभाति । अप्रतीकालम्बनानामिति शेषः । अप्रतीकालम्बनस्वरूपं तेषां व्याप्तब्रह्मरूपदर्शनं च अप्रतीका देवता हीत्यादिस्मृतिसिद्धम् । सा च स्मृतिः पूर्वमन्त्रव्याख्यानावसरे उदाहृतेति । एवमुत्तममध्यमाधमाधिकारिणामपरोक्षज्ञानविषया दर्शिताः । इदानीं तेषां सर्वेषामपि कालान्तरे जायमानं यद्ब्रह्मापरोक्षज्ञानं तद्विषयमाह— **पश्यस्त्विति** ।। सर्वेषु ज्ञानिषु स्वस्वयोग्यं रूपं पश्यत्सु सत्स्वेव इह स्वदेहे । गुहायां हृदयगुहायां निहितं स्वबिम्बरूपमिति शेषः ।। **विभातीति** ।। सर्वेषां ज्ञानिनां स्वबिम्बरूपदर्शनं च न सामान्यादप्युपलब्धेरिति सूत्रखण्डसिद्धम् । तत्त्वप्रकाशिकायां न भगवद्रूपाणां साम्येन सामान्यता दर्शनेन सर्वेषां मुक्तिः । किंनाम स्वदर्शनादेवेति तस्य व्याख्याततत्वादिति । अत्र ज्ञानिनां वैचित्र्यमेवोक्तं नत्वस्य ज्ञानिनोऽनेन ज्ञानेनैतल्लोकप्राप्तिरिति । तन्मानान्तरेण ज्ञातव्यम् । तथाहि-—महरादिवैकुण्ठान्ताः लोकास्तावज्ज्ञानप्राप्याः । "ईयुस्त्रीन्कर्मणा लोकान्ज्ञानेनैव तदुत्तरानि"ति स्मृतेः । तत्राप्रतीकालम्बनानां व्याप्तभगवद्रूपदर्शनेन वैकुण्ठस्थब्रह्मप्राप्तिः । "अप्रतीकाश्रया ये हि ते यान्ति हरिमेव तु" इति स्मृतेः । ऋष्यादिमध्यमाधिकारिणस्तु बिम्बरूपब्रह्मदर्शनेन हिरण्यगर्भलोके यान्ति । "स्वदेहे ब्रह्म दृष्ट्वैव गच्छेद् ब्रह्म सलोकतामि"त्युक्तेः । अधमाधिकारिणो मनुष्योत्तमास्त्रिविधाः । "अधमा मानुषश्रेष्ठास्ते चापि त्रिविधा मता" इत्युक्तेः । त्रिविधानां तेषामवतारदर्शनमपि त्रिविधम् । पादयोगो योगस्तपश्चेति । तेन त्रिविधेन अवतारदर्शनेन तेषां महरादिलोकप्राप्तिः ।

पादयोगान्महर्लोको जनलोकस्तु योगतः ।
तपसस्तु तपोलोकः प्राप्यते नान्यथा क्वचित् ।। इति स्मृतेः ।।

त्रिविधानामपि तेषामधिकारिणां स्वबिम्बदर्शनेन मोक्षो भवति । "समोऽपि भगवान्स्वबिम्बदर्शन एवैनं मोचयंती"ति श्रुतेः । स्वबिम्बदर्शन एवेत्यवधारणेन सर्वेषामपि बिम्बदर्शनादेव मोक्ष इत्यवगम्यते । एतेनाशेषानिष्टनिवृत्तिसहिता स्वरूपेण व्यवस्थितिरेव मोक्षः । "मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति-रि"त्युक्तेः । तेन विचित्रो मोक्षः । निवृत्तौ वा स्वरूपेण व्यवस्थितौ वा वैचित्र्याभावात् अपरोक्षज्ञानानि तु विचित्राणीत्युपपादितम् । अतस्तैर्ज्ञानैरविचित्रो मोक्षः कथं स्यात् । सामग्रीवैचित्र्ये कार्यवैचित्र्यनियमादिति निरस्तम् । उक्तै-र्विचित्रैर्ज्ञानैर्वैकुण्ठादिप्राप्तिरूपविचित्रफलं भवति । अत्र विचित्रेण स्वबिम्बदर्शनेन विचित्रो मोक्षो भवतीत्युक्तत्वात् । अत एव सूत्रभाष्ये "सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादि"त्युक्तम् । तदिदं बिम्बदर्शनं हिरण्यगर्भोपदेशजन्यम् । स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत इति श्रुतेः । तत्त्वप्रकाशिकायां जीवघनादित्यस्य जीवोत्तमहिरण्यगर्भोपदेशादिति व्याख्यातत्वेन प्रकृतसिद्धिः । किञ्च स्वबिम्बदर्शनस्य ब्रह्मोपदेशजन्यत्वं मोक्षजनकत्वं तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मन इति काठश्रुतिसिद्धम् । तस्यायमर्थः—अकारो ब्रह्मवाची । अः इति ब्रह्मेति श्रुतेः । क्रतुशब्दो ज्ञानवाची । क्रतुर्मतिर्मनीषेत्युक्तेः । अविषयः क्रतुर्यस्येति बहुव्रीहिः । धातुः प्रसादादित्यत्र प्रसादपूर्वकोपदेशादित्यर्थः । "उपदेशो ब्रह्मणस्तु सर्वषामेव मुक्तय" इति ब्रह्मोपदेशस्योक्तत्वात् । तथाच अक्रतुः ब्रह्मापरोक्षज्ञानी । धातुर्हिरण्यगर्भस्य प्रसादात्तत्पूर्वकोपदेशात् । "तं आत्मास्य जन्तोर्निहितो गुहायामि"ति पूर्वोक्तस्वबिम्बरूपं भगवन्तं पश्यति । तेन दर्शनेन वीतशोकः अशेषानिष्टनिवृत्तिमान् भवतीति । चतुर्मुखप्रसादजन्य-बिम्बदर्शनं च ऋषीणां बिम्बदर्शनवत् सूक्ष्मात्सूक्ष्मतरत्वप्रकारकं न भवति । किन्तु जीवापेक्षया महत्तरगुणपरिमाणयुक्तत्वप्रकारकमिति दर्शयितुं आत्मनो महिमानमित्युक्तम् । अस्य तमित्यनेनान्वयः । आत्मशब्दो जीवार्थः । महिमञ्छब्द-श्चाश्वकर्णादिशब्दवद्रूढ्या महत्तरगुणपरिमाणयुक्तार्थवाची । काठकभाष्ये—

जीवाद्गुणपरीमाणं यस्माद्विष्णोर्महत्तरम् ।

तस्माज्जीवात्स महिमा विष्णुरित्युच्यते बुधैः ।।

इति महिमञ्छब्दार्थस्योक्तत्वात् । तथाचात्मनो जीवात् महिमानं महत्तरगुणपरिमाण-युक्तं तु बिम्बरूपं विष्णुं पश्यतीति योजना । एतेन ऋष्यादिमध्यमाधिकारिणां सूक्ष्मतरत्वप्रकारकबिम्बदर्शनसद्भावेऽप्युक्तबिम्बदर्शनाभावात् । चतुर्मुखप्रसाद-जन्यमुक्तस्वबिम्बदर्शनं मोक्षार्थमावश्यकमेव । तेन सर्वाधिकारिणां स्वबिम्ब-दर्शनादेव मोक्ष इति यदुक्तं तद्युक्तमेवेति ।। ७ ।।

**आ.टी.**—तदेव सत्यं बृहत्पूर्णं क्रीडादियुतम् । सूक्ष्माच्च वस्तूनां सूक्ष्मतरमतीव सूक्ष्ममत एवाचिन्त्यशरीरम् । सर्वगतत्वादेव दूराच्च सुदूरेऽस्ति तत् अन्तिके चास्ति ।। ७ ।।

**गू.टी.**—सत्यनाम्नो हरेर्माहात्म्यान्तरमाह— **बृहदिति** ।। देशकालगुणैः पूर्णं दिव्यं लोकविलक्षणं सूक्ष्मादप्यतिशयेन सूक्ष्मं अत एवाचिन्त्यरूपं सर्वगत्वा-द्दूरतोऽप्यस्ति, इहान्तिके चास्ति । पश्यत्सु जीवेषु सत्सु इति वा इहैव हृद्गुहायां सन्निहितं सत्प्रकाशते ।। ७ ।।

## भाष्यम्

**सर्वगत्वात्तद्दूरेऽन्तिके च ।**

**व्या.टी.**—एकस्यैकदैव समीपस्थत्वदूरस्थत्वे कथं विरोधादित्यतस्तं विरोधं परिहरति— **सर्वगत्वादिति** ।।

**ध.टि.—सर्वगतत्वादितीति** ।। अत्र अन्तिके च तिष्ठतीति शेषः ।।

**स.टी.**—अत्र दूरेऽन्तिके चेति कथं विरोधात् । सर्वगतत्वात् । तदभाषत-— **सर्वगत्वात्तद्दूरेऽन्तिके चेति** ।।

**श्री.टी.**—दूरात्स दूरे तदिहान्तिके चेति विरुद्धं प्रतीयतेऽतस्तमुपपादकोक्त्या परिहरति— **सर्वगत्वादिति** ।। अन्तिके च तिष्ठतीति शेषः । न चक्षुषा गृह्यते

नापि वाचेत्यत्र चक्षुर्वाक्शब्दयोः प्रसिद्धचक्षुरादिपरत्वप्रतीतिं निराकरोति— **नान्यैर्देवैरिति** ।।

**उ.टी.**—अत्र सुदूरे तदिहान्तिके चेत्येतद्विरुद्धमित्यतस्तद्व्याचष्टे— **सर्वगत्वादिति** ।। ततश्च दूरे अन्तिके चेत्यनेन सर्वगतमित्युच्यते । अतो न विरोध इति भावः । बृहच्चेति मन्त्रे परिपश्यन्ति धीराः आनन्दरूपं पश्यति रुग्मवर्णं कर्तारमित्याद्युक्तविशेषणसमुच्चयार्थश्चशब्दः । एवमग्रेऽपि ।।

## उपनिषत्

**न चक्षुषा गृह्यते नापि वाचा**
**नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्व-**
**स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।। ८ ।।**

**व्या.टि.**—चक्षुरादिदेवोपास्तिप्रभावाद्भगवज्ज्ञानं भवति किमित्यतो नेत्याह- – **न चक्षुषेति** ।। ८ ।।

**ध.टि.**—अन्तिके चेत्युक्तमेव विशदयति— **पश्यत्स्विति** ।। पश्यत्सु ज्ञानवत्सु इह जीवेषु गुहायां हृदयगुहायामेव दहराकाशे निहितं सन्निहितमित्यर्थः ।। **न चक्षुषेतीति** ।। भगवाञ्चक्षुषा तदभिमानिना सूर्येण । वाचा तदभिमानिनाग्निना । अन्यैस्तदतिरिक्तैर्देवैः । तत्प्रसादेनेति यावत् । तपसा कर्मणा तत्सामर्थ्येनेति यावत् । न गृह्यते । नापरोक्षीक्रियते । तथा चक्षुरादीन्द्रियेण न गृह्यत इत्यर्थो द्रष्टव्यः । तर्हि देवतानुग्रहस्य सर्वथा वैय्यर्थ्यमिति न मन्तव्यम् । ततः परस्परतारतम्यज्ञानेन प्रसन्नतत्त्वाभिमानिदेवतानुग्रहात् । विशुद्धसत्त्वो विशुद्धान्तःकरणो अधिकारी । निष्कलं षोडशकलात्मकशरीररहितम् । तं विष्णुं ध्यायमानो भवति । तदनन्तरं ध्यानेन परिपश्यते पश्यति । ज्ञानप्रसादेन परमज्ञानरूपस्य विष्णोः तथा ज्ञानाभिमानिनश्चतुर्मुखस्य वायोश्च प्रसादेनैव नान्यथेत्यर्थः ।।

**वामन.टी.**—सुसूक्ष्मत्वादतीन्द्रियश्चायमित्याह— **न चक्षुषेति** ।। ८ ।।

**न.टी.**—चक्षुरादिदेवोपास्तिप्रभावाद्भगवज्ज्ञानं भवति किमित्यतो नेत्याह— **न चक्षुषेति** ।। पश्यते ज्ञायते । अन्यैर्देवैर्घ्राणादीन्द्रियदेवैः । तर्हि केन तं पश्यतीत्यत आह— **ज्ञानप्रसादेनेति** ।। विशुद्धसत्वः शुद्धान्तःकरणः । निष्कलं षोडशकलात्मकशरीररहितम् । ज्ञानानन्दात्मकशरीरवन्तम् । ध्यायमानः ततः ध्यानानन्तरं ज्ञानप्रसादेन ज्ञानरूपवायुप्रसादेन तु तं परमात्मानं पश्यते ।।

**रा.खं.**—एवंविधस्य भगवतो ज्ञानं चक्षुरादिदेवतोपासनाबलाद्भवति किमित्यतो नेत्याह— **न चक्षुषेति** ।। चक्षुरधिष्ठातृदेवताप्रसादेन न गृह्यते । गुहाशयां निहितं वस्त्वित्यनुषङ्गः । वाचा वाग्देवताप्रसादेनेत्यर्थः । अन्यैरिन्द्रियान्तरदेवैः, तपसाऽनशनादिव्रतेन, कर्मणा वर्णाश्रमोचितधर्मेण वा न गृह्यते । केन तर्हीत्यत आह— **ज्ञानेति** ।। ज्ञानरूपस्य वायोश्चतुर्मुखस्य वा प्रसादेन, 'विज्ञान-शक्ति-रहमासमनन्तशक्तेः' इत्युक्तेः । 'सत्यं ज्ञानमनन्तम्' इत्यादेर्ज्ञानस्वरूपस्य हरेः प्रसादेनेति वार्थः । 'अतोऽनन्तेन तथा हि लिङ्गम्' इति सूत्रात् । वाय्वादिस्त्वनु-ज्ञाप्रद इति ध्येयम् । विशुद्धसत्त्वः रजस्तमोभ्याममिश्रितोद्रिक्तसत्त्वगुणो भवति । ततस्तु विशुद्धसत्वादेव निष्कलं षोडशकलात्मकदेहहीनं ध्यायमानो निरन्तरचिन्तां कुर्वन् भगवन्तं पश्यते पश्यति ।। ८ ।।

**स.टी.**—न चक्षुरादिदेवतोपास्तिप्रभावाद्भगवज्ज्ञानं भवतीत्याह— **न चक्षुषेति** ।। अत्र चक्षुर्वाक्शब्दौ सूर्योमापरौ । तथाच सूर्योमाप्रसादेनान्यदेवताप्रसादेन वा न तं पश्यति । किन्तु ज्ञानरूपेण वायुना ब्रह्मणा प्रसादेन प्रसन्नेन परमज्ञानेन हरिणा तत्प्रसादेन प्रसन्नेनैव तेषां षोडशकलाशरीरो न भवतीति निष्कलं यदा पश्यः पश्यते रुग्मवर्णम् । आनन्दरूपममृतं यद्विभातीत्युक्त्वा तं पश्यति ।।

**व.टी.**—सत्येन लभ्यस्तपसा ह्येष आत्मेत्यत्र सत्यादीनां ज्ञानत्वमुक्तम् । तत्र प्राधान्येन । प्राधान्येन ज्ञानसाधनत्वं तु भगवत्प्रसादस्यैवेत्युच्यते **न चक्षुषेति** ।।

**श्री.टी.**——एतादृशस्य हरेरपरोक्षज्ञानं न तपआदिसाधनसामर्थ्येन भवति नापि चतुर्मुखवाय्वन्यदेवताप्रसादेन किन्तु विष्णुचतुर्मुखवायुप्रसादादेवेत्याह— **न चक्षुषेत्यादिना** ।। भगवान् चक्षुषा तदभिमानिना सूर्येण । वाचा तदभिमानिनाग्निनान्यैस्तदरिक्तैर्देवैस्तत्प्रसादेनेति यावत् । तपसा कर्मणा वा तत्साध्यसामर्थ्येनेति यावत् । न गृह्यते नापरोक्षीक्रियते तथा चक्षुरादीन्द्रियेण च न गृह्यत इत्यप्यर्थो द्रष्टव्यः । तर्हि देवतानुग्रहस्य सर्वथा वैय्यर्थ्यमिति न मन्तव्यम् । ततः परस्परं तारतम्यज्ञानेन प्रसन्नतत्त्वाभिमानिदेवतानुग्रहाद्विशुद्धसत्त्वो विशुद्धान्तःकरणोऽधिकारी निष्कलं षोडशकलात्मकशरीररहितं विष्णुं ध्यायमानो भवति । तदनन्तरं ध्यानेन तं पश्येत् पश्यति । पश्यतीति यत् तत् ज्ञानप्रसादेन परमज्ञानरूपस्य विष्णोस्तथा ज्ञानरूपस्य चतुर्मुखस्य वायोश्च प्रसादेनैव नान्यथेत्यर्थः । ब्रह्मवाय्वोर्ज्ञानरूपत्वं तदभिमानित्वादिति द्रष्टव्यम् ।। ८ ।।

**उ.टी.**—यदपरोक्षज्ञानं कर्मक्षयादिसाधनमुक्तं तदपरोक्षज्ञानं प्रति भगवत्प्रसाद एव मुख्यहेतुः । प्राक् तद्विज्ञानेन परिपश्यन्तीत्यत्र तत्कारणत्वेनोक्तध्यानं तन्निमित्तमात्रमिति भावेनाह— **न चक्षुषेति** ।। मन एव ब्रह्मापरोक्षज्ञाने करणमिति वक्तुं करणान्तरं प्रतिक्षिपति— **न चक्षुषेति** ।। ८ ।।

ततश्चायं मन्त्रार्थः—चक्षुषा करणेन ब्रह्म न गृह्यते न दृश्यते तर्हि शब्दादेवापरोक्षधीरिति मतदर्शनात् । आगमेन दृश्यते किम् । नेत्याह— **नापि वाचेति** ।। गृह्यत इत्यनेनान्वयः । आगमस्यापरोक्षज्ञानजननस्वाभाव्याभावादिति भावः ।। **नान्यैर्देवैरिति** ।। तत इति श्रवणाद्यत इति ग्राह्यम् । यतः तपसा कायिकादित्रिविधतपसा । कर्मणा यज्ञादिकर्मणा । वाशब्दश्चशब्दार्थः । विशुद्धसत्त्वः शुद्धान्तःकरणः । ध्यायमानः ध्यानं कुर्वन् । अधिकारी निष्कलं षोडशकलायुक्तशरीररहितम् । अन्यैर्देवैरन्यदेवताप्रसादेन न पश्यति । ततः ज्ञानप्रसादेन ज्ञानरूपस्य वायोश्चतुर्मुखस्य च परमज्ञानरूपस्य हरेश्च । तुशब्दोऽवधारणे । प्रसादेन तु प्रसादेनैव पश्यते । योग्यकारणरूपे कर्मव्यतिहारे आत्मनेपदमेतत् । स्वयोग्यदर्शनं करोतीत्यर्थः ।। ८ ।।

**आ.टी.**—कथं इह भुवि पश्यत्सु भूतेषु हृदयगुहायां निहितम् । तद्ब्रह्म चक्षुषा न गृह्यते वाचापि न गृह्यते नान्यैरिन्द्रादिदेवैस्तदधिष्ठितैः श्रोत्रादिभिश्च तपसा वा कर्मणा वा न गृह्यते । विशुद्धसत्त्वः विशुद्धचित्तो ज्ञानी निष्कलं जडकलाहीनं ब्रह्म ध्यायमानस्सन् ज्ञानप्रसादेन ज्ञानरूपपरब्रह्मप्रसादेन ज्ञानरूपवायुप्रसादेन च पश्यते ।। ८ ।।

**गू.टी.**—नान्यदेवप्रसादैर्हरिज्ञानं भवतीत्याह— **न चक्षुषेति** ।। गृह्यते प्राप्यते । वाय्वादिप्रसादेन भवतीत्याह— **ज्ञानेति** ।। विशुद्धसत्त्वः शुद्धमनाः ध्यायमानः पुमान् निष्कलं तं हरिं ज्ञानप्रसादेन ज्ञानरूपस्य हरेर्वायोर्विरिञ्चस्य च प्रसादेन तत एव च ध्यानात्पश्यति । चक्षुराद्यभिमानिनोऽनुज्ञाप्रदायिन इति भावः ।।

## भाष्यम्

**नान्यैर्देवैर्हरिं पश्येज्ज्ञानरूपेण वायुना ।**
**ब्रह्मणा परमज्ञानरूपेण हरिणा तथा ।।**
**प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिनः ।। इति च ।।**

**षोडशकलाशरीरो न भवतीति निष्कलः । 'यदा पश्यः पश्यते रुग्मवर्णम्' 'आनन्दरूपममृतं यद्विभाति' इत्युक्तत्वात् ।।**

**व्या.टी.**—न चक्षुषा गृह्यते नापि वाचेत्येतच्चक्षुरादिप्रतीतिं निवारयन्व्याचष्टे— **नान्यैरिति** ।। ज्ञानप्रसादेन मनसा च पश्यतीत्येतत्प्रसिद्धज्ञानमनःप्रतीतिं निवारयन्व्याचष्टे— **ज्ञानरूपेणेति** ।। निष्कलमित्येतत्करचरणाद्यभावप्रतीतिं निवारयन्व्याचष्टे— **षोडशेति** ।। करचरणादिराहित्यमेवार्थः किन्न स्यादित्यतो बाधकमाह— **यदेति** ।।

**ध.टि.**—**नान्यैरितीति** ।। अत्र न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैरित्यस्य सर्वस्यापि तात्पर्यकथनम् । हरिचतुर्मुखवायुव्यतिरिक्तचक्षुरादिदेवानुग्रहेण हरिं न पश्येदित्यर्थः ।। **मनसा च पश्यतीत्येतदिति** ।। चेतसा वेदितव्य इत्येतदित्यर्थः ।

अवश्यं चैतदेवं विज्ञेयम् । एतदुपनिषदि व्याख्येयस्य मनसा पश्यतीति वाक्यस्याभावात् । "यं यं लोकं मनसा संविभाती"त्यत्रत्यमनःशब्दस्य प्रसिद्धमनःपरत्वाभ्युपगमात् । मनश्चेतःशब्दयोः पर्यायत्वाच्चेतसेति वक्तव्ये मनसेत्युक्तम् ।। **ज्ञानरूपेणेतीति** ।। अत्र ब्रह्मणा चतुर्मुखेन । ब्रह्मवाय्वोः हरेश्च ज्ञानरूपत्वं नैकप्रकारकमित्याशयेन परमज्ञानरूपेणेत्युक्तम् । ज्ञानस्य परमत्वं च स्वपरगताखिलविशेषविषयकत्वरूपं द्रष्टव्यम् । परमज्ञानरूपेणेत्येतच्चेतसा वेदितव्यं इत्यत्रत्यचेतःपदव्याख्यानं चिती संज्ञान इति धातुनिष्पन्नचेतःशब्दस्य परमज्ञानार्थत्वात् । तथाच एष अणुरव्यक्तस्वभावोऽपि आत्मा परमात्मा अतोऽनन्तनेत्युक्तदिशा चेतसा भक्त्यादिसाधनजातैः प्रसन्नेन परमज्ञानरूपेणाधिकारिचेतोनियामकेन परमात्मनैव प्रयोजकेन वैराग्यादिसाधनसाधितश्रवणमनननिदिध्यासनसंस्कृतेन चेतसा करणेन अधिकारिणा प्रयोज्येन कर्त्रा वेदितव्यः । साक्षात्कर्तव्य इति श्रुत्यर्थ उक्तो भवति । नन्वेवमन्यदेवतानुग्रहस्य व्यर्थत्वे "देवांश्च तारतम्येन ज्ञात्वा मुक्तिर्नचान्यथे"त्यादि प्रमाणविरोध इत्यत आह— **अन्य इति** ।। तरतमभावज्ञानेन प्रसन्नाः सन्तो देवाः भगवदाराधनविषये सद्बुद्धिप्रदानद्वारा अनुज्ञाप्रदायिन इत्यर्थः । यथोक्तम्—

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ।। इति ।।

अनेन विशुद्धसत्त्व इत्यस्य तात्पर्यमुक्तं वेदितव्यम् ।। **यदेतीति** ।। शरीराभावे रुग्मवर्णत्वस्यायोगात् । रुग्मवर्णोक्त्या शरीरश्रुतिः । आनन्दरूपं रूपशब्दः शरीरपरः । आनन्दात्मकशरीरमित्यर्थः । अशरीरत्वश्रुतिस्तु प्राकृतशरीराभावविषयेति द्रष्टव्यमिति भाष्यार्थः ।

**वामन.टी.**—अस्यार्थं नान्यैर्देवैरित्यादिब्रह्मसारवचनेन व्याख्याति । ज्ञानरूपेभ्योऽन्यैर्देवैः कोऽपि हरिं न पश्येत् । तप आदिना सोत्साहेनापि न पश्येत् । ततः केवलज्ञानप्रसादेनैव तं पश्यति । ज्ञानरूपयोर्ब्रह्मवाय्वोः परमज्ञानरूपस्य हरेश्च प्रसादेनैव तं प्रपश्यन्तीत्यर्थः । अन्ये रुद्रादयो द्रष्टुमनुज्ञा-

प्रदायिनः । निष्कलस्य ध्यानमेव कथमित्यत आह— **यदेति** ।। रुग्मवर्णं आनन्दरूपमित्यादौ विलक्षणरूपविधानेन दत्तोत्तरत्वात् ।

**स.टी.**——अनुज्ञाप्रदायिनो देवाः । तदभाषत— **नान्यैर्देवैरिति** ।।

**व.टी.**——तत्र निष्कलमित्यनेन हरेः करचरणाद्यङ्गराहित्यमुच्यत इति प्रतीति-निरासायाह— **षोडशेति** ।। ननु किमयमेवमङ्गीकर्तव्यं निराकारत्वादेव निष्कलत्वं किं न स्यादित्यत आह— **यदा पश्य इत्यादि** ।।

**श्री.टी.**——न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैरित्यस्य सर्वस्यापीदं तात्पर्य-कथनम् । हरिचतुर्मुखवायुव्यतिरिक्तचक्षुरादिदेवानुग्रहमात्रे हरिं न पश्येदित्यर्थः । ज्ञानप्रसादेनेत्यत्र प्रसिद्धज्ञानानुग्रहेणैव पश्येदित्यन्यथाप्रतीतिनिरासाय ज्ञानशब्दा-र्थमाह— **ज्ञानरूपेणेति**।। ब्रह्मणा चतुर्मुखेन ब्रह्मवाय्वोर्हरेश्च ज्ञानरूपत्वं नैकप्रकारमित्याशयेन परमज्ञानरूपेणेत्युक्तम् । ज्ञानस्य परमत्वं च स्वपरगता-शेषविशेषविषयकत्वरूपं द्रष्टव्यम्। नन्वेवमन्यदेवतानुग्रहस्य व्यर्थत्वे "देवांश्च तारतम्येन ज्ञात्वा मुक्तिर्नचान्यथे"ति प्रमाणविरोध इत्यत आह— **अन्य इति** ।। तरतमभावज्ञानेन प्रसन्नाः सन्तो देवाः भगवदाराधनविषये सद्बुद्धिप्रदानद्वाराऽनुज्ञा-प्रदायिन इत्यर्थः । यथोक्तं—

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितमुच्छन्ति बुद्ध्या संयोजयन्ति तम् ।। इति ।।

अनेन विशुद्धसत्त्व इत्यस्य तात्पर्यमुक्तं वेदितव्यम् । निष्कलमित्येतत्परेण व्याख्यातं करचरणाद्यात्मकशरीरमत्र कलोच्यते तद्रहितम् अशरीरत्वश्रुतेरिति । तदेतदपव्याख्यानमिति भावेन स्वयं व्याचष्टे— **षोडशेति** ।। एकादशेन्द्रिय-पञ्चमहाभूतरूपषोडशकलात्मकशरीरो न भवतीत्यर्थः। परोक्त एवार्थः किं न स्यादित्यतस्तत्र बाधकमाह— **यदेति** ।। शरीराभावे रुग्मवर्णत्वस्यायोगात् । रुग्मवर्णोक्त्या शरीरसिद्धिः । आनन्दरूपम् । रूपशब्दः शरीरपरः । आनन्दात्मक-शरीरमित्यर्थः । तथाच श्रुतिभिरानन्दात्मकविग्रहस्योक्तत्वात्परव्याख्याने तद्विरोधः

स्यादिति भावः । श्रुतिस्तु प्राकृतशरीराभावविषयेति द्रष्टव्यम् । अर्थान्तरेप्रतीतिनिरासाय निष्कलशब्दं व्याचष्टे— **षोडशेति** ।। सजीवस्य शरीरस्य भागाः कलाः । ताश्च षोडश । मुख्यप्राणाभिमन्यमानो जीवः । आस्तिक्यनिष्ठारूपा श्रद्धा । खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नं वीर्यं तपो मन्त्राः ऋगादिवेदरूपाः। पुण्यपापरूपं कर्म । गोलकाः देवदत्तादिरूपं नाम इति । तत्र जीवस्य सजीवशरीरभागत्वं प्रसिद्धमेव । श्रद्धायाः शरीरभागत्वं शरीरान्तर्गतवृत्तिरूपत्वात् । आकाशादिपञ्चभूतानां शरीरोपादानत्वात्तद्भागत्वम् । चक्षुरादीन्द्रियस्य शरीरप्रवृत्त्युपकरणत्वात्तद्भागत्वम् । मनसः प्रधानोपकरणत्वात्तत्त्वम् । अन्नस्य शरीरस्थितिकारणत्वात्तत्त्वम् । वीर्यस्य शरीरहेतुत्वात्तत्त्वम् । तपसो जीवं प्रति ज्ञानादिहेतुतया मुख्यकारणत्वात्तत्त्वम् । मन्त्राणां सम्यग्ज्ञानादिहेतुतया तत्त्वम् । कर्मणः सुखादिनिमित्तत्वात्तत्त्वम् । गोलकानामिन्द्रियाश्रयत्वात्तत्त्वम् । नाम्नस्तु शरीरे संकेतितत्वात्तत्त्वम् । तदेवं याः षोडशकलाः तद्युक्तशरीरो न भवतीति भगवान्निष्कल इत्युच्यत इत्यर्थः । ननु सौन्दर्याद्यभाव एव निष्कलशब्दार्थोऽस्तु । यद्वा करचरणात्मकं शरीरं कलोच्यते । तद्रहितं निष्कलमिति परेण व्याख्यातत्वाच्छरीरमात्राभाव एव तदर्थोऽस्तु । पिण्डजशरीरराहित्यार्थकत्वाङ्गीकारेणेत्यत आह- – **यदेति** ।। रुग्मवर्णमिति सौन्दर्यस्योक्तत्वात्तदभावो न निष्कलशब्दार्थः । नापि शरीरमात्राभावस्तदर्थः । आनन्दरूपमिति आनन्दात्मककरचरणादिमत्त्वस्योक्तत्वादित्यर्थः । नचानन्दरूपपदेन कथमानन्दात्मककरचरणादिमत्त्वं लभ्यत इति वाच्यम् । रूपं स्वभावे सौन्दर्ये आकारे श्लोकशब्दयोरिति नानार्थकोशानुसारेण रूपशब्दस्या-कारवाचकत्वेन तदुपपत्तेः । अत एव स्वगुणात्मकं रूपमित्यस्य शिरःपाणिपादा-त्मकमिष्यत इत्यनुव्याख्याने आनन्दाद्यात्मकशिरःपाण्यादिलक्षणं रूपं भगवतोऽभिहितमिति ।।

**उ.टी.**——नान्यैर्देवैरित्यत्र गृह्यत इत्यस्य अनुकर्षे अन्यदेवकर्तृकविष्णुकर्मकज्ञानाभावः प्रतीयते । तत्प्रकृतानुपयुक्तमित्यतस्तद्वाक्यमन्यथा व्याचष्टे— **नान्यैर्देवैरिति** ।। वक्ष्यमाणब्रह्मविष्णुभिन्नदेवप्रसादेनेत्यर्थः । ज्ञानरूपेणेत्यादिनोक्तप्रसन्न-

रूपत्वं नैकप्रकारमिति दर्शयितुं परमेति विशेषणम् । तत्र मुख्यप्राणाधिष्ठाने विष्णोरभिव्यज्यमानत्वात्तत्प्रसादोऽपेक्षितः । ब्रह्मोपदेशेन मोक्षहेतुस्वबिम्बापरोक्षज्ञानं भवति । "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति श्रुतेः । अतस्तत्प्रसादोऽपि हेतुरित्युक्तमिति ज्ञेयम् । प्रसन्नेनैवेत्येवशब्देन मन्त्रे तु शब्दोऽव-धारणार्थ इति सूचितम् । तेन वाय्वादिप्रसादस्यैव मुख्यहेतुत्वं ध्यानस्य तु निमित्तत्वमात्रमिति सूचितम् । तत्किमपरोक्षज्ञानं प्रति अन्यदेवानां सर्वथानुपयोग एव । तथात्वे अथ देवान्नमेतज्जुहुयादिति देवनमस्कारादिविधिरयुक्तः स्यात् । वैय्यर्थ्यादित्यत आह— **अन्येऽनुज्ञाप्रदायिन इति** ।। अनुपूर्वात् ज्ञाधातोरातश्चोपसर्ग इति सूत्रेण भावेऽङ् प्रत्ययः । अनुकूलं ज्ञानमनुज्ञा । तथा चान्ये देवाः इन्द्रियादिप्रेरकत्वेन भगवदपरोक्षज्ञानानुकूलज्ञानोत्पादका इत्यर्थः । तेन देवान्नमेदित्यादिविध्यनुपपत्तिर्नास्ति । भगवदपरोक्षज्ञानफलकश्रवणादिज्ञानहेतुत्वेन देवनमनादेः सार्थक्यादिति भावः ।

**।। इति पञ्चमखण्डभाष्यार्थः ।।**

## उपनिषत्

**एषोऽणुरात्मा चेतसा वेदितव्यो**
**यस्मिन्प्राणः पञ्चधा संविवेश ।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां**
**यस्मिन्विशुद्धे विभवत्येष आत्मा ।। ९ ।।**

**व्या.टि.**——तं पश्यत इत्युक्तं चक्षुरादिभिर्न पश्यति चेत्कथं तर्हि ज्ञानप्रसादेनेत्युक्तं मनसा चेत्याह— **एष इति** ।। योजना तु प्रजानां सर्वं चित्तं प्राणैस्सह यस्मिन् विशुद्धे प्राणे ओतं स एष आत्मा स्वामी प्राणो यस्मिन् पञ्चधा संविवेश आश्रितस्तिष्ठति विभवति च । स एषोऽणुः परमात्मा चेतसा वेदितव्य इति ।। ९ ।।

**ध.टि.**——।। **योजना त्विति** ।। प्रजानां सर्वं मनोबुद्धिरहंकारश्चित्तं चेतनेति पञ्चविधं चित्तमन्तःकरणम् । प्राणैस्तदितरेन्द्रियैस्सह यस्मिन् विशुद्धे प्राणे मुख्यप्राणे ओतं इन्द्रियदेवताजातं यस्मिन्नाश्रितमिति यावत् । स एष आत्मा सर्वदेवता स्वामी प्राणः पञ्चधा प्राणापानादिपञ्चरूपेण यस्मिन्संविवेश आश्रितः तिष्ठति यस्मादेव विभवति उत्पद्यते च । विभवयुक्तो भवतीति वा । एषोऽणुरात्मा मुख्यप्राणस्यापि स्वामी भगवान् चेतसा ध्यानसंस्कृतेन मनसा करणेनैव वेदितव्यः साक्षात्कर्तव्य इत्यर्थः ।। ९ ।।

**वामन.टी.**—विशुद्धसत्त्वो भगवन्तं पश्यतीति यदिहोक्तं तदेव पुनर्विशिनष्टि- – **एषोऽणुरिति** ।। एष परमात्मा सूक्ष्मत्वात् जीवस्य स्वरूपचैतन्येनैव वेदितव्यः न प्राकृतबुद्ध्या । यस्मिंश्चेतसि प्राणः पञ्चधा संविवेश । तच्छोध-नार्थं यस्मिन् चेतसि विशुद्धे तेन एष परमात्मा विस्पष्टं दृष्टो भवति । अथेतर-प्रजानामपि चित्तं प्राणैः प्रोतं भवति ।। ९ ।।

**न.टी.**——दर्शने हरिप्रसादस्य परमसाधनत्वमाह— **एष इति** ।। प्रजानां सर्वं मनोबुद्धिरहंकारचित्तं चेतनेति पञ्चविधं चित्तं मनोभिमानिरुद्रादिदैवं प्राणैरिन्द्रिया-भिमानिभिः सह विशुद्धे यस्मिन् प्राणे ओतं प्रविष्टम् । एष आत्मा परमात्मा च यस्मिन् विशुद्धे प्राणे विभाति विशेषतः सन्निहितो वर्तते । स प्राणो यस्मिन् पञ्चधा संविवेश आश्रितो वर्तते । स एषः अणुः परमः सूक्ष्मः आत्मा परमात्मा चेतसा चित्तस्थापरमज्ञानरूपपरमात्मप्रसादेन वेदितव्यः ।। ९ ।।

**रा.खं.**——केनेन्द्रियेणेत्यत आह— **एषोऽणुरिति** ।। एषोऽणुरूपेण सर्वप्राणिषु स्थित आत्मा चेतसा वेदितव्यो ज्ञातव्यः । एष इत्युक्तः क इत्यत आह— **यस्मिन्निति** ।। प्रजानां सर्वं चित्तं प्राणैरिन्द्रियैस्सह यस्मिन् प्राणे मुख्यवायावोत-माश्रितं स प्राणो यस्मिन्विशुद्धे निष्कले हरौ पञ्चधा प्राणापानादिपञ्चरूपात्मना विवेश आश्रितस्तिष्ठति, विभवति च विभवयुक्तश्च भवति एष आत्मेति योजना ।। ९ ।।

**स.टी.**——ज्ञानप्रसादेनेत्युक्तं मनसा चेत्याह— **एष इति** ।। योजना तु प्रजानां सर्वं चित्तं प्राणैः सह यस्मिन्विशुद्धमुख्यप्राणे ओतं स प्राणो यस्मिन्पञ्चधा संविवेश विभवति च । एष आत्मा चेतसा वेदितव्य इति ।। ९ ।।

**श्री.टी.**——भगवदपरोक्षज्ञानं चक्षुरादिना करणेन न भवतीत्युक्तं तर्हि केन करणेन भवतीत्याशंकायामाह— **एष इति** ।। प्रजानां सर्वं सप्रभेदं चित्तमन्तःकरणं प्राणैस्तदितरेन्द्रियैः सह यस्मिन्विशुद्धप्राणे ओतं इन्द्रियदेवताजातं यस्मिन्नाश्रितमिति यावत् । स एष आत्मा सर्वदेवतास्वामी प्राणः । पञ्चधा प्राणापानादिपञ्चरूपेण यस्मिन्संविवेश आश्रितस्तिष्ठति यस्मादेव विभवति उत्पद्यते च एषोऽणुरात्मा मुख्यप्राणस्यापि स्वामी भगवान् चेतसा ध्यानादिसंस्कृतेन मनसा करणेनैव वेदितव्यः साक्षात्कर्तव्य इत्यर्थः ।। ९ ।।

**उ.टी.**—ननु न चक्षुषा गृह्यते नापि वाचेति करणनिषेधः कृतः । तर्हि केनेन्द्रियेण परमात्मा साक्षात्कर्तव्य इत्यत आह— **एषोऽणुरिति** ।। उपलक्षणमेतत् । मध्यमपरिमाणो व्याप्तश्चेत्यपि ग्राह्यम् । तथाचाणुः मध्यमपरिमाणः व्याप्तश्च । एषः निष्कलः आत्मा परमात्मा । चेतसा वेदितव्यः साक्षात्कर्तव्य इत्यर्थः । ननु "यन्मनसा न मनुत" इति हरेर्मनोऽग्राह्यत्वनिषेधात्कथं चेतसा वेदितव्य इत्युक्तमित्यत आह— **यस्मिन्विशुद्ध इति** ।। यस्मिंश्चेतसि विशुद्धे रागादिदोषरहिते सति । एषः आत्मा जीवः विभवति ब्रह्मश्रवणादिविविधव्यापारवान् भवति । तेन चेतसेत्यन्वयः । तथाच यन्मनसेति श्रुतेर्दुष्टमनोविषयत्वान्न तद्विरोधः । अत एवोक्तमन्यत्र । मनसा तु विशुद्धेनेतीति भावः । किञ्च मुख्यप्राणाननुगृहीत-मनोविषया श्रुतिः । तदनुगृहीतमनसा तु भगवान्साक्षात्कर्तुं शक्यत एवेति भावेनाह— **प्राणैरिति** ।। सर्वं मनोबुद्धिरहंकारश्चित्तं चेतनमेव चेति पञ्चधा भिन्नं प्रजानां चित्तं प्राणैः प्राणापानादिभिरोतं प्रविष्टम् । एतदेव विवृणोति । प्राणो मुख्यवायुः । पञ्चधा प्राणापानादिपञ्चरूपेण । यस्मिन्पञ्चविधे मनसि संविवेश सम्यक् विवेश । परब्रह्मापरोक्षज्ञानानुकूलसंकल्पनिश्चयादिशक्त्या-

धायकत्वेन प्रविष्टः तेन चेतसेत्यन्वयः । तथाच प्राणापानादिरूपो मुख्यप्राणः मुखनासिकादि-स्थानस्थितोऽपि चेतसि प्रविश्य ब्रह्मापरोक्षज्ञानानुकूलशक्त्याधायको भवति । तद्वश्चेतो ब्रह्मापरोक्षज्ञानं जनयति । सहजशक्त्या तु मनो ब्रह्मापरोक्ष-ज्ञानजनकं न भवतीत्येवंपरा श्रुतिरिति भावः ।। ९ ।।

**आ.टी.**——ध्याने साधनं सध्येयमाह— **एषोऽणुरिति** ।। प्रजानां सर्वं चित्तं प्राणैस्सह यस्मिन्विशुद्धे प्राणे स्थितं स एष प्राणश्च प्राणापानादिना पञ्चधा भूत्वा यस्मिन् संविवेश श्रितः विशिष्टो भवति च । एष अणुभूतः परमात्मा चेतसा वेदितव्यो ध्यातव्य इति ।। ९ ।।

**गू.टी.**——चक्षुरादिभिर्न पश्यति चेत्कथं तर्हि ज्ञानप्रसादेन पश्यते इत्युक्त-मित्यतो मनसेत्याह— **एष इति** ।। प्रजानां सर्वं पञ्चविधे चित्ते प्राणैरिन्द्रियैः सह यस्मिन्विशुद्धे मुख्यप्राणे ओतं स एष प्राणः यस्मिन् संविवेश आश्रितस्तिष्ठति विभवति च एषोऽणुः परमात्मा वेदितव्यः ।। ९ ।।

## उपनिषत्

**यं यं लोकं मनसा संविभाति**
**विशुद्धसत्त्वः कामयते यांश्च कामान् ।**
**तं तं लोकं जयते तांश्च कामां-**
**स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ।। १० ।।**

।। इति पञ्चमः खण्डः ।।

**व्या.टि.**——प्रकृतजीवन्मुक्त्यवस्थाप्रकारमेवाह— **यं यमिति** ।। संविभाति भावयतीच्छतीति यावत् ।। १० ।।

**ध.टि.**——।। **यं यमितीति** ।। विशुद्धसत्त्वो विशुद्धे भगवति सत्त्वमन्तः करणं यस्यासौ विशुद्धसत्त्वोऽपरोक्षज्ञानी । यं यं लोकं मनसा संविभाति भावयति इच्छतीति यावत् । यांश्च कामान् काम्यान् कामयते । तं तं लोकं

तांश्च कामान् जयते प्राप्नोति । ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग इति प्रमाणप्रसिद्धिमत्र हिशब्देन दर्शयति । तस्मादपरोक्षज्ञानिनः सत्यकामत्वादिरूपप्रभाववत्त्वादन्योऽपि भूतिकामः पुमानात्मज्ञं भगवदपरोक्षज्ञानिनमर्चयेदित्यर्थः । इदमपि प्रमाण-प्रसिद्धमिति हिशब्दः ।। १० ।।

**वामन.टी.**—स्वस्वयोग्यज्ञानादिसिद्ध्यर्थं एवं विशुद्धसत्त्वस्य ब्रह्मदृशः किमप्यशक्यं नास्तीत्याह— **यं यं लोकमिति** ।। साक्षाद्भूतिकामो मुक्तिकाम एव ।। १० ।।

**न.टी.**——प्रकृतजीवन्मुक्त्यवस्थाप्रकारमेवाह— **यं यमिति** ।। विशुद्धसत्त्वः अपरोक्षज्ञानी यं यं लोकं मनसा संविभाति इच्छति तं तं लोकं जयते प्राप्नोति । यांश्च कामान् कामयते तान् कामांश्च जयते । तस्मादात्मज्ञस्यातिसमर्थत्वात् । भूतिकामो हि आत्मज्ञमर्चयेत् ।। १० ।।

**रा.खं.**——आत्मवेदिनो महिमानमाह— **यं यमिति** ।। विशुद्धसत्त्व आत्मवेदी यं यं लोकं मनसा संविभाति भावयति, गच्छतीति यावत् । यांश्च कामान् काम्यमानान् विषयान् कामयते इच्छति । तं तं लोकं तांश्च कामान् जयते प्राप्नोति । तस्मादात्मज्ञानिनो महत्त्वाद्भूतिकामो भाग्यकामः आत्मज्ञं भगवज्ज्ञानिन-मर्चयेत्पूजयेत् । अर्च पूजायाम् । हिशब्दः तदर्चनेन भूतिमान्भवतीति निश्चयार्थः ।। १० ।।

**स.टी.**——प्रकृतजीवन्मुक्त्यवस्थाप्रकारमाह— **यं यमिति** ।। संविभाति इच्छति जयते प्राप्नोति ।। १० ।।

**श्री.टी.**——प्राणो ह्येष इति प्रकृतस्यापरोक्षज्ञानिनो जीवन्मुक्त्यवस्थस्य महिमानमाह— **यं यमिति** ।। विशुद्धसत्त्वो विशुद्धे भगवति सत्त्वमन्तःकरणं यस्यासौ विशुद्धसत्त्वोऽपरोक्षज्ञानी यं यं लोकं मनसा संविभाति भावयति इच्छति यांश्च कामान्काम्यान्कामयते तं तं लोकं तांश्च कामाञ्जयते प्राप्नोति ।

ज्ञानादेव स्वर्गो ज्ञानादेवापवर्ग इत्यादिप्रमाणप्रसिद्धमत्र हिशब्देन दर्शयति । तस्मादपरोक्षज्ञानिनः सत्यकामत्वादिप्रभाववत्त्वादन्योऽपि भूतिकामः पुमानात्मज्ञं भगवदपरोक्षज्ञानिनमर्चयेदित्यर्थः । इदमपि प्रकरणप्रसिद्धमिति हिशब्दः ।।

**उ.टी.**—भगवदपरोक्षज्ञानेन कर्मक्षयादिकं भवतीत्युक्तम् । न केवलमेतावत् । किन्तु स्वर्गादिसकलपुरुषार्थावाप्तिः अभीष्टसकलभोगश्च भवतीत्याह— **यं यमिति** ।। विशुद्धसत्त्वो भगवदपरोक्षज्ञानी यं यं लोकं स्वर्गादिकं मनसा संविभाति विषयी-करोति इच्छतीति यावत् । यांश्च कामान् काम्यन्त इति कामाः विषयाः तान् कामयते । तं तं तांस्तान्कामांश्च जयते प्राप्नोति । तस्मादमोघसंकल्पत्वात् । भूतिकामः पुरुषः आत्मज्ञं भगवदपरोक्षज्ञानिनम् । अर्चयेत् । प्रसन्नस्य भगवद-परोक्षज्ञानिनः भूतिप्रदानसामर्थ्यात् । तत्प्रसादार्थं भूतिकामेन तत्पूजा कार्येत्यर्थः ।। १० ।।

**आ.टी.**—ज्ञानिनो माहात्म्यमाह— **यमिति** ।। विशुद्धसत्त्वो निर्मलचित्तो ज्ञानी यं लोकं मनसा संविभाति भावयति इच्छति कामान् विषयान् इच्छति जयते प्राप्नोति । तस्मादेवं माहात्म्यवत्त्वादात्मज्ञस्यान्योऽपि भूतिकामो ज्ञानादिकामः आत्मज्ञमर्चयेत् ।। १० ।।

**गू.टी.**—प्रकृतज्ञानिनो माहात्म्यमाह— **यं यमिति** ।। शुद्धसत्त्वो ज्ञानी लोकं भावयति मनसा इच्छति तं तं लोकं जयते प्राप्नोति । यांश्च कामान्कामयते इच्छति तांश्च कामान्प्राप्नोति तस्मादेवं ज्ञानिनो महत्त्वात् तमात्मज्ञमन्योऽपि भूतिकामो हि यस्मात्तस्मादर्चयेदित्यन्वयः ।। १० ।।

**।। इति पञ्चमखण्डमन्त्रार्थः ।।**

## अथ षष्ठः खण्डः

### उपनिषत्

**स वेदैतत्परमं ब्रह्मधाम**
**यत्र विश्वं निहितं भाति शुभ्रम् ।**
**उपासते पुरुषं ये ह्यकामा-**
**स्ते शुक्रमेतदतिवर्तन्ति धीराः ।। १ ।।**

**व्या.टि.**—आत्मज्ञार्चकः भूतिमान् भवतीत्युक्तां भूतिमेवाह— **स वेदैतदिति** ।। अकामाः शुक्रं गन्तुं अन्यत् अतिवर्तन्ते ।। १ ।।

**ध.टि.**— ।। **स वेदैतदितीति** ।। स आत्मज्ञार्चकस्तदर्चनप्रभावात् । एतत्परमं ब्रह्मणो धामभूतं प्राणं वेद । मुख्यप्राणज्ञानावाप्तिरेव तस्य भूतिरिति भावः । प्राणस्य ब्रह्माधारत्वं कुत इत्यत उक्तम्— **यत्रेति** ।। यत्र प्राणे शुभ्रं शुद्धं विश्वं पूर्णं ब्रह्म निहितं सद्भाति । अतस्तस्य ब्रह्मधामत्वमित्यर्थः । ये अकामास्सन्तः पुरुषमात्मज्ञमुपासते सेवन्ते । एतन्मुख्यप्राणस्थितं शुक्रं शोकरहितम् । परं ब्रह्म प्रति गन्तुमन्यदिति शेषः । संसारजातमतिवर्तन्ति अतिवर्तन्ते परित्यजन्ति । तदुपदेशेनेत्यर्थः ।। १ ।।

**वामन.टी.**—आत्मज्ञानार्चनं क्रमेण मुक्तिज्ञानं भवतीति यत्सूचितं तत्प्रपञ्चयति— **स वेदेत्यादिना** ।। १ ।।

**न.टी.**—तां भूतिमेवाह— **स इति** ।। स आत्मज्ञार्चकः । एतत् परमं ब्रह्मधाम । मुख्यप्रतिमात्वेन प्रधानं परब्रह्मणो धाम वायुं वेद । विश्वं पूर्णम् । शुभ्रं निर्दोषं ब्रह्म । यत्र वायौ निहितं भवति । तदेतदित्यन्वयः । अनेन सर्वस्य ब्रह्मधामत्वेऽपि वायोः प्रधानधामत्वं उपपादितं भवति । आत्मज्ञार्चकस्य विभूतिफलमुक्त्वा साक्षादात्मोपासकस्य मोक्षं फलमाह— **उपासत इति** ।। अकामाः

विच्छिन्नविषयरागाः ये धीराः । परमपुरुषमुपासते त एतत् शुक्रं शुद्धं ब्रह्म गन्तुं अन्यत् संसारदुःखं अतिवर्तन्ति अतिक्रमन्ते ।। १ ।।

**रा.खं.**——आत्मज्ञार्चकस्य भूतिः कीदृशीत्यतो वायुज्ञानद्वारा परमपुमर्थहेतुब्रह्मज्ञानाप्तिरूपेत्याह— **स वेदैतदिति** ।। योजना तु, यत्र यस्मिन्मुख्यवायौ विश्वं पूर्णं शुभ्रं शुद्धं ब्रह्म निहितं स्थितं सत् भाति, वाय्वाविष्टजीवस्य वायुद्वारा ज्ञानदीपनं करोति एतत्परमं मुख्यं ब्रह्मधाम परब्रह्माधिष्ठानगृहं मुख्यवायुं स आत्मज्ञार्चकः वेद जानातीति । यस्त्वात्मज्ञमर्चयति स मुख्यवायुज्ञो भवति । तज्ज्ञाने च सति तत्रस्थो हरिस्तद्द्वारा तस्यात्मज्ञार्चकस्य विशेषतो भगवज्ज्ञानवृद्धिं करोतीति भावः । कथमेतज्ज्ञानस्य भूतित्वम्? सुखप्राप्तिदुःखनिरासयोरन्यतरत्वाभावादित्यतो ब्रह्मप्राप्तिहेतुत्वादित्याह— **उपासत इति** ।। येऽकामाः कामादिदोषहीनाः पुरुषं पूर्णषड्गुणं ब्रह्मोपासते, श्रवणमननध्यानैर्जानन्ति तं शुक्रं शोकरहितमेतद् ब्रह्म गन्तुमिति शेषः, अतिवर्तन्ति संसारक्लेशमतिक्रम्य वर्तन्ते, मुक्ता भवन्तीत्यर्थः । हिशब्दः प्रसिद्धिद्योतकः ।। १ ।।

**स.टी.**——आत्मज्ञार्चको भूतिमान् भवतीत्युक्तम् । भूतिमेवाह— **स इति** ।। स आत्मज्ञार्चको ब्रह्मणो धाम प्राणः "प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तित" इति वचनात् तं प्राणं वेद । यत्र प्राणे विश्वं पूर्णं ब्रह्म निहितं भाति । आत्मज्ञार्चकं पुरुषं ये उपासते । तदुपदेशेन शुक्रं गन्तुमन्यदिति वर्तते ।

सर्वं तीर्त्वा भवेच्छुक्रं प्रतिवृत्तिर्भवेत्पुनः ।
ज्ञानिनो सा हि मुक्तिः स्यात्तन्नैवात्येति कश्चन ।। इति वचनात् ।।

**व.टी.**——तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम इत्युक्तम् । तत्रात्मज्ञार्चनेन किं फलं भवतीत्यत उच्यते— **स वेदैतत्परमं ब्रह्मधामेति** ।। १ ।।

**श्री.टी.**——आत्मज्ञार्चको भूतिमान्भवतीत्युक्तं तां भूतिमेवाह— **स वेदैतदित्यादिना** ।। स आत्मज्ञार्चकस्तदर्चनप्रभावाद्ब्रह्मधाम ब्रह्मणो धामभूतं प्राणं वेद । मुख्यप्राणज्ञानावाप्तिरेव तस्य भूतिरिति भावः । प्राणस्य ब्रह्मधामत्वं

कुत इत्यत उक्तम्— **यत्रेति** ।। यत्र प्राणे शुभ्रं शुद्धं विश्वं पूर्णं ब्रह्म निहितं सन्निहितं सद्भाति अतस्तस्य ब्रह्मधामत्वमित्यर्थः । ये अकामास्सन्तः पुरुषमात्मज्ञमुपासते सेवन्ते ते एतन्मुख्यप्राणस्थितं शुक्रं शोकरहितं परं ब्रह्म प्रतिगन्तुं अन्यदिति शेषः । संसारजातमतिवर्तन्ति अतिवर्तन्ते परित्यजन्ति तदुपदेशेनेत्यर्थः ।।

**उ.टी.**—आत्मज्ञार्चनेन भूतिर्भवतीत्युक्तम् । सा च भूतिर्नाणिमाद्यैश्वर्यम् । अल्पफलत्वात् । किन्तु प्राणस्थब्रह्मोपासनाजन्यतत्स्थब्रह्मसाक्षात्कारद्वारा मोक्षप्राप्तिरेव महापुरुषार्थत्वादिति भावेनाह— **स वेदेति** ।। तदयं मन्त्रार्थः । वक्ष्यमाणहिशब्दस्यात्राकर्षः । स च हेत्वर्थः । यस्माद्विश्वं पूर्णं ब्रह्म । यत्र प्राणे । निहितं स्थितं स जगद्धारयति । यस्माच्च ब्रह्मप्राणाधिष्ठाने भाति प्रकाशते तस्मात्सः प्राण एव परमं वैकुण्ठाद्यपेक्षया प्रधानम् । ब्रह्मधाम विष्णोर्गृहम् । अतः सः आत्मज्ञार्चकः । प्रथमं ब्रह्मणो धाम प्राणं वेद । अनन्तरं च एतत् प्राणस्थं ब्रह्म वेद श्रवणाद्युपायैर्जानाति । ततो ब्रह्म तस्य प्राणाधिष्ठाने भाति आविर्भवति । ततो ब्रह्म शुभ्रं मोक्षरूपशुभप्रदं भवतीत्यर्थः । अनेनात्मज्ञार्चकस्य प्राणस्थब्रह्मोपासनादिमोक्षान्तभूतिरुक्ता भवतीति बोध्यम् । न केवलमात्मज्ञार्चकस्यैवैषा भूतिः किन्तु प्राणस्थब्रह्मोपासकानां सर्वेषामपि भवतीति भावेनाह— **उपासत इति** ।। अकामाः कामादिदोषरहिताः ये अधिकारिणः । पुरुषं पूर्णषड्गुणं प्राणस्थं विष्णुमुपासते । शृण्वन्ति मन्वते ध्यायन्ति च । ते धीराः मुख्यप्राणाधिष्ठाने ब्रह्मापरोक्षज्ञानिनो भूत्वेति शेषः । अन्यत् अविद्यादिकम् । अति अतिक्रम्य । शुक्रं शोकरहितम् । एतत् ब्रह्म प्रतिवर्तन्ते । तेषां विष्णुसालोक्यादिमुक्तिरूपा हरिं प्रति वृत्तिर्भवेदित्यर्थः । पूर्वं तत्र तत्रोपासनादिकमुक्तम् । अत्र तत्सर्वं संगृह्योच्यत इति वा । पूर्वं ब्रह्मोपासनादिकमेवोक्तम् । अत्र तु प्राणस्थब्रह्मोपासनादिकमुक्त्वा तस्य पूर्वोक्तं तदधिकं च फलमुच्यत इति वा पूर्वोत्तरयोर्भेद इति ।। १ ।।

**आ.टी.**—यत्र मुख्यप्राणे विश्वं पूर्णं शुभ्रं शुद्धं ब्रह्म निहितं स्थितं भाति तदेतत् परमं श्रेष्ठं ब्रह्मधाम ब्रह्मणोऽधिष्ठानं मुख्यप्राणं स आत्मज्ञार्चको वेत्ति

तदुपदेशादिना धीरा ज्ञानिनः अकामाः सन्तः परमपुरुषमुपासते ते च शुक्रं शुद्धं ब्रह्म गन्तुं यदन्यत्संसारदुःखं तदेतदतिवर्तते ।। १ ।।

**गू.टी.**——ज्ञानिसेवनफलमाह— **स इति** ।। यत्र यस्मिन्प्राणे विश्वं पूर्णं शुद्धं ब्रह्म सन्निहितं सत्प्रकाशते तदेतत्परमं ब्रह्मधाम ब्रह्मणो हरेर्धाम गृहरूपं प्राणं स आत्मज्ञार्चको वेत्ति । तदुपदेशादिनेत्यर्थः । ये धीराः अकामास्सन्तः शोकरहितत्वाच्छुक्रं पुरुषं हरिमुपासते ते शुक्रं प्रति गन्तुं तदन्यदे तद्दुःखादिकमतिवर्तन्ते तरन्तीत्यर्थः ।। १ ।।

## भाष्यम्

**स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद । यत्र विश्वं पूर्णं ब्रह्म निहितम् ।**

**प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः ।**
**उपायैर्यो विजानीयात् प्राणस्थं परमेश्वरम् ।।**

**तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम् ।**
**नित्यं प्राणे स्थितस्यैव विष्णोरावेश एव हि ।।**

**प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा ।**
**सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि ।।**

**तत्र स्थित्वापि भुञ्जन्त आविशेयुः पुनश्च ते ।**
**मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् ।।**
**ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु ।। इति च ।।**

**एतच्छुक्रं प्रत्यन्यदतिवर्तन्ते ।**

**सर्वं तीर्त्वा हरिं शुक्रं प्रति वर्ती भवेत्पुनः ।**
**ज्ञानिनः सा हि मुक्तिः स्यात्तन्नैवात्येति कश्चन ।।**

**—इति महावाराहे ।।**

**व्या.टी.**——स वेदैतदित्यत्र तच्छब्दपरामृष्टः क इत्यत आह— **प्रधानमिति** ।। आविष्टो भवतीत्युक्तमावेशमेव विशदमाह— **नित्यमिति** ।। प्राणस्य प्रधानधामत्वात्प्राणद्वारा ज्ञानदातृत्वरूपत्वादावेशस्य नोक्तविरोध इति भावः । ननु पूर्वं सत एव किञ्चिदतिशयकरणेनाविष्टव्यवहारगोचरत्वं कुत्र दृष्टमित्यत आह— **सन्निधानमिति** ।। पूर्वोऽपिरवधारणार्थः । तथा सति योजना । पुरुषेषु सन्निधानं प्राप्ता एव पिशाचाः स्वतःस्थित्वा विषयान् भुञ्जाना अपि पुनश्च ते मन्त्रादिभिराविशन्तीति यथा तथा विष्णुरित्यादि ।। एतच्छुक्रं शोकरहितं अतिक्रम्य वर्तत इत्यन्यथाप्रतीतिं निवारयति— **एतदिति** ।। प्रति गन्तुमिति शेषः । शुक्रमति वर्तत इत्येवार्थः किन्न स्यादित्यतो बाधकमाह— **सर्वमिति** ।।

**ध.टि.**——अत्र तच्छब्दार्थः क इति न ज्ञायते अमुक इति न निर्णीयते, पूर्वत्र आत्मज्ञं ह्यर्चयेद्भूतिकाम इति आत्मज्ञतदर्चकयोरुभयोः प्रस्तुतत्वात् । ब्रह्मधाम च किमिति न ज्ञायते, विशिष्य कस्याप्यनुक्तत्वादित्यत आह— **स इति** ।। यद्यपि स आत्मज्ञोऽपरोक्षज्ञानी यत्र विश्वं जगत् निहितं अत एव धाम विश्वाश्रयं ब्रह्म वेदेति पररीत्या व्याख्यातुं शक्यम् । तथाप्युत्तरत्र "तस्यैष आत्मा विशते ब्रह्मधामे"त्यत्र धामभूतं ब्रह्म कर्तृ विशते इति व्याख्याने प्रवेशनक्रियायां कर्मानुक्तिदोषप्रसङ्गेन ब्रह्मधामेत्यस्यैवैकपदत्वेन कर्मसमर्पकतया वक्तव्यत्वेनात्राप्येकपदत्वमाश्रित्य व्याख्यानस्योचितत्वात् । नच ब्रह्मधामेत्येतदेव द्वितीयान्तत्वेन कर्मसमर्पकमिति वाच्यम् । "आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययमि"त्युक्तरीत्या ब्रह्मपरत्वेन तेनाधिकारिग्रहणायोगात् । तस्येत्यस्याधिकत्वाच्च । त्वन्मते मुक्तावैक्येन विशते इत्युक्तयुक्तियोगाच्च नचात्मान इति वाच्यम् । अस्मदुक्तरीत्या मुख्यार्थत्वे सम्भवति अमुख्यार्थग्रहणायोगात् । अस्मत्पक्षे प्रधानं धाम विष्णोस्त्विति समाख्यानुगुण्याच्च । तथाचार्चयेदित्युक्तात्मज्ञार्चकपरामर्शक एवायं तच्छब्दः । ब्रह्मधामेत्येकं पदमभिप्रेत्य तस्यार्थमाह— **ब्रह्माण इति** ।। इति भाष्यार्थः ।। **यत्रेतीति** ।। यत्र प्राणो विश्वं समस्तं पूर्णं चेत्यभिधानाद्विश्वं पूर्णमित्युक्तं भाष्ये ।। **सर्वेषामपीति** ।। ब्रह्मसन्निधानस्य सर्वत्राविशिष्टत्वादिति भावः ।। ।।

**प्रधानमितीति** ।। अत्र प्रधानं धाम सुखसन्निधानपात्रम् । उपायैः प्रवचनाद्युपायैः । यतत इत्यस्यार्थो विजानीयादिति । सदा ज्ञानिन इति वक्ष्यमाणत्वात् । अत्रापि नित्यं विजानीयादित्यन्वयः । सर्वदा तज्ज्ञानाय यत्नं कुर्यात् । एष आत्मेत्यस्यार्थो हरिरिति ।। तस्य ब्रह्मधाम विशते इत्यस्यार्थः । तस्य तदर्थं प्राणे आविष्टो भवतीति ।। **विशदमाहेति** ।। नित्यं हरेः प्राणे सन्निहितत्वात् हरेः प्राणे आवेशो नाम क इत्यत उक्तं विवृणोति— **नित्यमितीति** ।। अत्र सदा ज्ञानिनः प्रवचनाद्युपायैर्ज्ञानार्थं यततोऽधिकारिणो यत्प्राणद्वारा ज्ञानदीपनं ज्ञानोद्दीपकरणं तत्राविर्भाव इति यावत् । तदेव नित्यं प्राणे स्थितस्यैव विष्णोः आवेश इत्युक्त्या प्राणे हि प्रसिद्धमित्यर्थः । अत्र विवक्षितमर्थं दर्शयति— **प्राणस्य प्रधानत्वादिति** ।। **मन्त्रादिभिराविशन्तीति** ।। वाग्व्यवहारकरणेन पुनः सन्निधानं प्राप्ता भवन्ति तदभिप्रायेण विशेयुरित्युच्यन्ते । इदानीमाविष्टा उच्यन्त इत्यर्थः ।। **तथा विष्णुरित्यादीति** ।। तथा विष्णुः सदा प्राणे स्थितोऽपि सन् ज्ञानिनः पुनरेव ज्ञानद्वारा ज्ञानदीप्त्यादिकं ज्ञानोद्दीपनादिरूपमतिशयविशेषं कुर्यात्करोति वाय्वाविष्टजीवस्य वायुद्वारा ज्ञानदीपनं करोति । तदाविष्टप्राणरूपाधिष्ठाने आविर्भवतीति यावत् । तदभिप्रायेण ब्रह्मधाम प्रविष्ट इत्युच्यत इति शेष इत्यर्थः ।। **शुक्रं शोकरहितमिति** ।। शुक्रं तच्छोकराहित्यादिति वचनादिति भावः ।। **एतदितीति** ।। अत्र एतत् ब्रह्मधामशब्दोक्तमुख्यप्राणाच्च स्थितं शुक्रं प्रति । अन्यदिति श्रुतौ शेषोक्तिः । अन्यत् संसारजातम् । वृतु धातोर्नित्यात्मनेपदित्वादाह— **अतिवर्तन्त इति** ।। परित्यजन्तीति यावदित्यर्थः ।। **सर्वमितीति** ।। अत्र शुक्रमित्यनूद्य हरिमिति व्याख्यातम् । शुक्रं प्रति गन्तुं सर्वं संसारजातं तीर्त्वा स्थितस्य ज्ञानिनः व्यावृत्तिर्भवेत् । भगवत्समीप एव या अवस्थितिर्भवति सैव मुक्तिरिति प्रसिद्धमित्यर्थः । प्रतीतार्थे बाधकमाह— **तन्नैवेति** ।। तं हरिमतिक्रम्य कोऽपि न गच्छतीत्यर्थः ।।

**स.टी.**——तस्य ज्ञानार्थं ब्रह्मधाम प्राणं आत्मनित्यं ध्रुवं आविष्टो भवति । नित्यमाविष्टस्य कोऽयमावेशः । ज्ञानिनः प्राणद्वारेण सदायं ज्ञानदीपनं ददाती-

त्यङ्गीकारात् । पूर्वं सत एव किञ्चित्करणेनायं व्यवहारः क्व दृश्यते । यथा पुरुषेषु सन्निधानं प्राप्ता अपि पिशाचाः तत्र स्थित्वा भुञ्जन्तोऽपि मन्त्रादिभिः पुनस्तं आविशेयुः तथा विष्णुः प्राणस्थितोऽपि सन् ज्ञानिनः पुनरेव ज्ञानदीप्त्यादिकं कुर्यादेव इदमेव तस्यावेशनम् । तदिदमभाषिष्ट— **स आत्मज्ञार्चकः इत्यारभ्य महावराह इत्यन्तेन** ।।

**वामन.टी.**—अस्य वाक्यस्यार्थं स आत्मज्ञार्चक इत्यादिभाष्येण व्याख्याति । मुख्यप्राण एव हि परब्रह्मणः परं गृहं नित्यनिवासयोग्यत्वात् । अत्रापि प्रधानं धामेत्यादि ब्रह्मसारवाक्यमाह । उपायास्तु भक्तिपूर्वकाः प्रवचनादयः । सन्निधानं परदेहे गूढत्वेन स्थित्वा स्वेच्छया भोगादिकं मन्त्रौषधादिभिरावेशस्तु तत्र परकीय आद्युद्बोधनेन । तदशक्यात्मार्थव्यवहारः । तस्मिन्ब्रह्मधाम्नि प्राणे ये जनाः पुरुषमुपासते ते तमेव प्राप्नुवन्ति । ननु नेयं सावयवप्राप्तिः केवल-मोक्षोऽभिप्रेतः किन्तु निर्गुणभावनया तदतिक्रम एव हि साक्षान्मोक्षो भवेदि-त्यत आह— **एतच्छुक्रं प्रतीति** ।। अत्र प्रमाणमाह— **सर्वं तीर्त्वेति** ।। शोकादिदोषराहित्याच्छुक्राख्यं हरिं प्रत्यन्यत्सर्वं तीर्त्वा पुनस्तत्समीपवृत्तिरेव ज्ञानिनो भवेत् । नापि तदैक्यं शंक्यम् । सह ब्रह्मणेति श्रुतेः । अत एवाति-क्रमश्च न भवेत् ।।

**व.टी.**—तद्व्याचष्टे— **स इति** ।। अत्रैव वचनान्तरसंवादं चाह— **प्रधान-मिति** ।। ननु हरेः सर्वत्रापि सर्वदाविष्टत्वात्तस्यार्थे नित्यमाविष्टो भवतीति किं विशिष्याभिधीयत इत्यत आह— **नित्यमिति** ।। एतमेवार्थं दृष्टान्तेनोप-पादयति— **सन्निधानमिति** ।। "ते शुक्रमेतदतिवर्तन्ति धीरा" इत्यत्र शुक्रं भगवन्तमतिक्रम्य गच्छन्तीत्यन्यथाप्रतीतिनिरासायाह— **एतच्छुक्रमिति** ।। अत्रैव समाख्यामाह— **सर्वमिति** ।।

**श्री.टी.**—अत्र स इति तच्छब्देनात्मज्ञपदोक्तापरोक्षज्ञान्येव परामृश्यते । तथाच स आत्मज्ञपदोक्तापरोक्षज्ञानी यत्र विश्वं जगत् निहितमत एव धाम विश्वाश्रयं

ब्रह्म वेदेति व्याख्यानमसदिति भावेन स्वयं व्याचष्टे— **स इति** ।। तथाचार्चये-दित्युक्तात्मज्ञार्चकपरामर्शक एवायं तच्छब्द इत्यर्थः । ब्रह्मधामेत्येकं पदमित्यभिप्रेत्य तस्यार्थमाह— **ब्रह्मण इति** ।। धाम गृहम् । ब्रह्मधामत्वस्यैव विवरणं यत्र विश्वमित्यादिकमित्यभिप्रेत्य व्याचष्टे— **यत्रेति** ।। यत्र प्राणे । विश्वं समस्तं पूर्णं चेत्यभिधानाद्विश्वं पूर्णमित्युक्तम् । ननु ब्रह्मधामशब्देन प्राण एवोच्यत इति कुतः ? परब्रह्मसन्निधानस्य सर्वत्र विद्यमानत्वेन सर्वेषामपि ब्रह्मधामत्वादित्यतः प्राणस्यैव ब्रह्मधामशब्दवाच्यत्वे निमित्तं वदन्नेतैरुपायैरिति वाक्यमपि व्याचष्टे-— **प्रधानमिति** ।। मुख्यसन्निधानपात्रमिति यावत् । उपायैः प्रवचनाद्युपायैः । यतत इत्यस्यार्थो विजानीयादिति। सदा ज्ञानिन इति वक्ष्यमाणत्वादत्रापि नित्यं विजानीयादित्यन्वयः । सर्वदा ज्ञानाय यत्नं कुर्यात् । एष आत्मेत्यस्यार्थो— **हरिरिति** ।। तस्य ब्रह्मधाम विशत इत्यस्यार्थस्तस्य तदर्थे प्राणे आविष्टो भवतीति । नित्यं हरेः प्राणे सन्निहितत्वादधिकारिनिमित्तं हरेः प्राणे आवेशो नाम क इत्यत उक्तं विवृणोति— **नित्यमिति** ।। सदा ज्ञानिनः प्रवचनाद्युपायैर्ज्ञानार्थं यततोऽधि-कारिणो यत्प्राणाद्वारा ज्ञानदीपनं ज्ञानोद्दीपनकरणं तत्राविर्भाव इति यावत् । तदेव नित्यं प्राणस्थितस्यैव विष्णोः प्राण आवेश उच्यत इति प्रसिद्धमित्यर्थः । तथाच तस्यैष आत्मेत्यादेः प्राणे स्थित्वा तद्द्वाराधिकारिणो ज्ञानोद्दीपनं करोति । अधिकारिणां तत्राविर्भवतीति तात्पर्यार्थः । ननु पूर्वं विद्यमानस्यैव किञ्चिदतिशय-करणेनाविष्टव्यवहारगोचरत्वं कुत्र दृष्टमित्यत आह— **सन्निधानमिति** ।। यथा पुरुषदेहेषु सन्निधानं प्राप्ता अपि ते पिशाचास्तत्र स्थित्वा विषयान्भुञ्जन्तोऽपि मन्त्रौषधादिभिर्पुनराविशेयुर्वाग्व्यवहारविशेषकरणेन पुनः सन्निधानं प्राप्ता भवन्ति तदभिप्रायेणाविशेयुरित्युच्यन्ते इदानीमाविष्टा जाता इत्युच्यन्ते तथा विष्णुः सदा प्राणस्थितोऽपि सज्ज्ञानिनः पुनरेव प्राणद्वारा ज्ञानदीप्त्यादिकं ज्ञानोद्दीपनादिरूपाति-शयविशेषं कुर्यात्करोति प्राणरूपेऽधिष्ठाने आविर्भवतीति यावत् । तदभिप्रायेण ब्रह्मधाम प्रविष्ट इच्युच्यत इति शेषः । "ते शुक्रमेतदतिवर्तन्ति धीरा" इत्यत्र शोकरहितत्वाच्छुक्रं ब्रह्म अतिक्रम्य वर्तन्ते इत्यन्यथाप्रीतितिनिरासाय व्याचष्टे-

— **एतदिति** ।। ब्रह्मधामशब्दोक्त-मुख्यप्राणावस्थितमित्यर्थः । शुक्रं शोकरहितम् । "शुक्रं तच्छोकराहित्यादि"ति वचनात् । प्रतिगन्तुमिति शेषः । अन्यदिति श्रुतौ शेषोक्तिः । अन्यत् संसारजातम् । वृतु धातोर्नित्यात्मनेपदित्वादाह— **अतिवर्तन्त इति** ।। परित्यजन्तीति यावत् । ब्रह्मातिक्रम्य गच्छन्तीत्येवार्थः किन्न स्यादित्यतस्तत्र बाधकमाह— **सर्वमिति** ।। शुक्रमित्यनूद्य हरिमिति व्याख्यातम् । शुक्रं प्रतिगन्तुं सर्वं संसारजातं तीर्त्वा स्थितस्य ज्ञानिनो या वृत्तिर्भवेद्भगवत्समीप एव या स्थितिर्भवति सैव मुक्तिरिति प्रसिद्धमित्यर्थः । प्रतीतार्थे बाधकमाह— **तं नैवेति** ।। तमतिक्रम्य कोऽपि न गच्छतीत्यर्थः ।।

**उ.टी.**—अत्र मन्त्रे यत्रेति सप्तम्न्तेन यदुच्यते तदेव स इत्यनेन परामृश्यत इति प्रतीतिं निवारयति— **स आत्मज्ञार्चक इति** ।। ब्रह्मधामेत्येतत् पदद्वयं ब्रह्मरूपं तेज इत्यर्थकमित्यन्यथाप्रतीतिनिरासायाह— **ब्रह्मणो धाम प्राणमिति** ।। अनेन ब्रह्मधामेत्येकं पदम् । ब्रह्मणो धामेति समासः धामपदं गृहार्थकम् । तस्य वेदेत्यनेनान्वय इत्युक्तं भवति । प्राणस्य ब्रह्मधामत्वमुपपादयितुं यत्र विश्वमित्याद्युक्तम् । तत्र विश्वशब्दस्य प्रसिद्धार्थताप्रतीतिनिरासायार्थं दर्शयति— **विश्वं पूर्णमिति** ।। विश्वं समस्तं पूर्णं चेत्यभिधानादिति भावः । यत्रेत्यस्य निहितमित्यनेनान्वयं दर्शयितुं यत्रेत्यस्यानुवादः । ब्रह्मेति विशेष्यमध्याहृतम् । यत्र निहितमित्यन्वयः । यत्र प्राणे निहितं स्थितं सज्जगद्धारयतीति शेषः । यथोक्तम्— "वाक्प्राणमध्यगो नित्यं धारयत्यखिलं हरिः" इति । यत्रेत्यस्यैतदिति पूर्वेणान्वयः । तथाच यतः प्राणे स्थित्वा जगद्धारकं ब्रह्म अतः प्राणो ब्रह्मधामेत्युक्तं भवति । ननु वैकुण्ठादिकं परित्यज्य प्राण एव ब्रह्मधामपदेन कुतो ग्राह्य इत्यतोऽत्रार्थे प्रमाणमाह— **प्रधानं धामेति** ।। परममित्यस्यार्थः प्रधानमिति । तथाच वैकुण्ठादेरप्रधानत्वान्मुख्यप्राणस्यैव मुख्यधामत्वात्परमविशेषणबलेन ब्रह्मधामपदेन प्राण एव गृह्यत इति भावः । अनेन "एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधामे"ति वक्ष्यमाणं मन्त्रगतो ब्रह्मधामशब्दोऽप्युक्तार्थः । तच्छ्रुतिव्याख्यानन्यायेनैव स वेदैतदिति मन्त्रो व्याख्यातव्य इति भावेन समग्रमन्त्रार्थ-

व्याख्यानरूपं प्रमाणं पठति— **उपायैरिति** ।। श्रवणाद्युपायैरित्यर्थः । अनेन एतैरुपायैर्यतत इत्यस्य यो विद्वान् श्रवणादिभिर्ब्रह्मसाक्षात्कारार्थं यतत इत्यर्थ उक्तः । तस्य प्राण इत्युत्तरार्धेन तस्यैष आत्मा विशते ब्रह्मधामेति वाक्यं व्याख्यातम् । नित्यमित्यस्य व्याख्यानं ध्रुवमिति । नियमेनेत्यर्थः । ननु हरिस्तस्य प्राण आविष्टो भवतीति कथम् । मुख्यप्राणे हरिप्रवेशस्य नित्यसिद्धत्वादित्याशंक्य विवक्षितं हरेः प्राणप्रवेशशब्दार्थं दर्शयति— **नित्यं प्राणे स्थितस्येति** ।। आद्य एवकारोऽपिशब्दार्थः । द्वितीयस्तु ज्ञानदीपनमेवेत्यन्वेति । तथाच नित्यं प्राणस्थस्यापि विष्णोः । प्राणद्वारेण प्राणप्रसादद्वारेण । तदुक्तम् "ज्ञानरूपेण वायुना" "प्रसन्नेनैव तं पश्येदि"ति । प्रसन्नमुख्यप्राणाधिष्ठानेनेति यावत् । ज्ञानिनः प्राणस्थब्रह्मोपासकस्य सदा यज्ज्ञानदीपनं अपरोक्षज्ञानोत्पत्तिः तदभिवृद्धिश्च तदेवावेशः । नतु प्रसिद्धः । अतो नित्यं प्रविष्टस्य विष्णोः पुनस्तत्र प्रवेशोक्तिर्नानुपपन्नेत्यर्थः । पूर्वं प्रविष्टस्यापि पुनः प्रवेशोक्तिः पारिभाषिकप्रवेशाभिप्रायेणेत्यर्थं दृष्टान्तेनोपपादयति— **सन्निधानमिति** ।। यथा पिशाचाः पुरुषेषु सन्निधानं प्राप्ता अपि तत्र पुरुषेषु स्थित्वा भुञ्जन्तोऽपि मन्त्रादिभिर्मन्त्रौषधादिभिर्निमित्तैः पुनश्च पुनरप्याविशेयुः आविशन्तीत्युच्यन्ते अतिवक्तृत्वादिव्यापारवशात् तथा विष्णुः सर्वदा प्राणे स्थितोऽपि सन् प्राणाधिष्ठाने ज्ञानिनो ज्ञानदीप्त्यादिकं, उत्पन्नस्य ज्ञानस्याधिकविषयत्वं दीप्तिः । आदिपदेनानुत्पन्नस्योत्पत्तिर्ग्राह्या । तथाच ज्ञानिनः उपासकस्य ज्ञानोत्पत्तिं तदभिवृद्धिं च पुनःपुनः कुर्यादेवं कुर्वंश्च मुख्यप्राणाविष्ट इत्युच्यत इति योजना ।। एतच्छुक्रं शोकरहितं अतिक्रम्य वर्तन्त इत्यन्यथाप्रतीतिं निवारयति— **एतदिति** ।। शुक्रं प्रतीत्यस्य वर्तन्त इत्यनेनान्वयः । एतच्च वृक्षं प्रतिविद्योतते विद्युदितिवद्योज्यम् । तथाच शुक्रं ब्रह्म यत्रास्ति तत्र वर्तन्त इत्यर्थः ।। **अन्यदतीति** ।। अन्यत्कर्मादिकं अति अतिक्रम्य विनाश्येति यावत् । प्रतीत एवार्थः किं न स्यादित्याशंकां निराकुर्वन् स्वोक्तार्थे प्रमाणमाह— **सर्वं तीर्त्वेति** ।। कर्मादिकं तीर्त्वेत्यर्थः । अनेनान्यदतिक्रम्येति प्रमापितम् । शुक्रं शोकरहितम् । शुक्रं तच्छोकराहित्यादित्युक्तेः । हरिं प्रति ज्ञानिनः पुनर्वृत्तिः

पुनःपुनः स्थितिर्भवेदिति योजना । अनेन शुक्रं प्रतिवर्तन्त इत्येतत्प्रमापितम् । ननु हरिं प्रति वृत्तिः कथं पुरुषार्थः नित्यसिद्धत्वादित्यत आह— **सा हीति** ।। सा क्षीराब्ध्यादौ हरिणा सह वृत्तिरेव मुक्तिः । सालोक्यादिरूपा मुक्तिः स्यात् हि यस्मात्तस्मात् हरिं प्रति वृत्तिः पुरुषार्थ एव । तादृश्याः हरिं प्रति वृत्तेः सर्वैरपि प्रार्थनीयत्वादिति भावः । ते शुक्रमेतदिति वर्तन्तीत्यस्य प्रतीतार्थ एव किं न स्यादित्यत आह— **तन्नैवेति**।। तस्य शुक्रमिति शोकराहित्यावगमात् । कश्चन तन्नैवातिक्रम्य वर्तत इत्यर्थः ।।

## उपनिषत्

**कामान् यः कामयते मन्यमानः**
**स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनश्च**
**इहैव सर्वे प्रविलीयन्ति कामाः ।। २ ।।**

**व्या.टी.**——अकामा इत्यस्य व्यावर्त्यमाह— **कामानिति** ।। कामान् भद्रान् मन्यमानः ।। २ ।।

**ध.टि.**——।। **कामानितीति** ।। यः पुमान्कामान् । काम्यन्त इति कामान् काम्यान् भद्रान्मन्यमानः सन्कामयते । स कामभिः कामैः बद्धस्सन् तत्र तत्र जायते । कृतात्मनः शुद्धबुद्धेः । अत एव पर्याप्तकामस्य सम्पूर्णकामस्य यथेष्टं विषयान् भुक्तवतः इति यावत् । इहैव जन्मनि लोके शरीरे वा । सर्वे कामाः प्रविलीयन्ति निवृत्ता भवन्तीत्यर्थः ।। २ ।।

**वामन.टी.**——अथ य उपासकः प्राकृतकामान्कामयते । तानेव नित्यं मन्यमानः स नानायोनिषु तैरेव सहितो जायते न मुक्तिं याति । अथ यः पर्याप्तकामोऽपि तद्गतामनर्थसन्ततिमनुभूय ज्ञात्वा कृतात्मा शिक्षितबुद्धिर्भवेत्, तस्य तज्जन्मन्येव प्रियकामा विहीयन्ते ।। २ ।।

**न.टी.**—अकामा इत्यस्य व्यावर्त्यमाह— **कामानिति** ।। कामान् विषयान् भद्रान् मन्यमानः सन् यः कामयते स कामभिः कामैः तत्र तत्र तत्तत्कामभोगार्ह-नानायोनिषु बद्ध्यते । पर्याप्तकामस्य संकुचितविषयरागस्य । कृतात्मनः भगवन्निष्ठ-मनस्कस्य च इहैव जीवन्मुक्त्यवस्थायामेव सर्वे कामाः भगवत्प्रसादविरुद्धेच्छाः । प्रविलीयन्ते विनष्टा भवन्ति ।। २ ।।

**रा.खं.**—अकामा इति किमर्थमित्यतस्सकामतयोपासने क्षयिष्णुलोकप्राप्तिरेव न नित्यलोकावाप्तिरित्याह— **कामानिति** ।। यः कामान्विषयान्भद्रान्मन्यमानः कामयते इच्छति । विषयकामनया भगवन्तमुपास्त इति यावत् । स पुमान् कामभिर्विषयैस्सह तत्र तत्र लोके भाग्यपुरुषसन्ततौ वा जायते । अकामता तर्हि कथं भवतीत्यत आह— **पर्याप्तेति** ।। यथेष्टं विषयान् भुक्तवतोऽत एव कृतात्मनस्तृप्तमनस्कस्येहैव जन्मनि सर्वे कामाः कामनाः नानावस्तुविषयिण्य इच्छाः प्रविलीयन्ति निवृत्ता भवन्तीति ।। २ ।।

**स.टी.**—अकामा इत्यस्य व्यावर्त्यमाह— **कामानिति** ।। कामभिरित्यत्र बहुलं छन्दसीति वचनाद्भिस ऐस्त्वाभावः ।। २ ।।

**श्री.टी.**—अकामा इत्यस्य व्यावर्त्यमाह— **कामानिति** ।। यः पुमान्कामान् काम्यन्त इति व्युत्पत्त्या काम्यान् भद्रतया मन्यमानः सन्कामयते स कामभिः कामैर्बद्धः सन् तत्र तत्र जायते । कृतात्मनः शुद्धबुद्धेः । अत एव पर्याप्तकामस्य सम्पूर्णकामस्य इहैव लोके शरीरे वा सर्वे कामाः प्रविलीयन्तीत्यर्थः ।। २ ।।

**उ.टी.**—प्रागविद्यादिबन्धनिवृत्तिरपरोक्षज्ञानेन भवतीत्याह— **कामानिति** ।। यः कामान् विषयान् भद्रान् मन्यमानः सन् कामयते । स कामभिः बहुलं छन्दसीति भिस ऐस्त्वाभावः । कामैर्निमित्तैस्तत्र तत्र नानायोनिषु जायते । एवं कामस्य बन्धकत्वमुक्त्वा इदानीं तन्निवृत्तिप्रकारमाह— **पर्याप्तकामस्येति** ।। पर्याप्तः मोक्षार्थं पर्याप्तः कामो भगवद्भक्त्यादिकामो यस्य स तथा । तस्य विषय-कामनात्यागवतः । चशब्दो विषयसमुच्चये । एवम्भूतस्य ज्ञानिनः सर्वे कामाः

मोक्षप्रतिबन्धकीभूतकामाः इहैवापरोक्षज्ञानजन्मन्येव प्रविलीयन्ति प्रविलीयन्ते । अपरोक्षज्ञानजन्मन्येव प्रविलीयन्त इत्युक्त्या अपरोक्षज्ञानादेव सर्वकामप्रविलय इत्युक्तं वेदितव्यम् ।। २ ।।

**आ.टी.**——कामिनोऽनिष्टमाह— **कामानिति** ।। कामान्विषयान् सम्यक् मन्यमानो यः पुमान्कामयते तानिच्छति । स कामभिः कामैरिच्छाभिस्तत्र तत्र स्वाभीष्टविषयप्रदशरीरेषु लोकेषु च जायते । कृतात्मनश्शिक्षितबुद्धेः पर्याप्तकामस्य परमात्मप्रसादात्सम्पूर्णकामस्य ज्ञानिनः इहैव जन्मनि सर्वनिषिद्धकामाः प्रविलीयन्ति ।।

**गू.टी.**——अकामा इत्यस्य व्यावर्त्यमाह— **कामानिति** ।। हरिं बहु मन्यमानश्चेतनो यः काम्यान्कामयते स कामभिः कामैर्निमित्तैः तान्भोक्तुमिति यावत् । तत्र भूम्यादौ योनिषु च जायते । पर्याप्तकामस्य निवृत्तकामस्य कृतात्मनः । हरिप्रवणमनसः पुंसः सर्वे कामा इहैव प्रविलीयन्ते नश्यन्ति । जन्मान्तरं प्रापयन्तीत्यर्थः ।।

## उपनिषत्

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनूं स्वाम् ।। ३ ।।**

**व्या.टी.**——न चक्षुषा पश्यतीत्यत्रान्यसामर्थ्याद्भगवन्तं न पश्यति किन्तु ज्ञानप्रसादेनेत्युक्तं विशदमाह— **नायमिति** ।। ३ ।।

**ध.टि.**—— ।। **नायमितीति** ।। अयमात्मा स भगवान् प्रवचनेन । सावधारणमेतत् । व्याख्यानेन शास्त्राभ्यासरूपोपासनयेति यावत् । मेधया प्रज्ञया तत्पूर्वकविचारेण मननेनेति यावत् । बहुना श्रुतेन श्रवणेन । एतत्साधनसामर्थ्येनैव लभ्यो ज्ञेयो न भवति । किन्त्वेष आत्मा प्रसन्नः सन् मदीयोऽयमिति यं भक्तं वृणुते स्वीकरोति । यस्मै प्रसीदतीति यावत् । तेनैव प्रसादविषयेणैव लभ्यः ।

तदेव विवृणोति— **तस्येति** ।। एष आत्मा तस्य प्रसादविषयस्य अधिकारिणः स्वां तनुं विवृणुते स्वस्वरूपं प्रकाशयति । तस्यैवापरोक्षो भवतीत्यर्थः ।।

**वामन.टी.**—एवं विरक्तस्यापि भक्तिहीनैरुपायैरलभ्योऽयं भगवानित्याह— **नायमात्मेति** ।। ३ ।।

**न.टी.**—परमात्मप्रसादेनैव तं पश्यत इत्युक्तं विवृणोति— **नेति** ।। अयं परमात्मा प्रवचनेन व्याख्यानेन लभ्यो न साक्षात्कारविषयः । मेधया प्रज्ञया न बहुना श्रुतेन श्रवणेन न । किन्तु एष परमात्मा यं वृणुते यस्मै प्रसीदति तेन लभ्यः । एतदेव विशदयति— **तस्येति** ।। तस्य स्वप्रसादविषयस्य एष परमात्मा स्वं स्वकीयां तदीयां तनुं रूपं विवृणुते प्रदर्शयति ।। ३ ।।

**रा.खं.**—न चक्षुषा गृह्यत इत्यत्र देवतान्तरशक्त्या हरिं न पश्यन्ति, किन्तु ज्ञानप्रसादादित्युक्तं, तद्विशदयति— **नायमिति** ।। मेधा प्रज्ञाविशेषः । अयमात्मा भक्तिहीनप्रवचनादिना न लभ्यः न साक्षात्कर्तुं शक्यः, अपितु यं भक्तमेष आत्मा वृणुते स्वीकरोति, यस्मै प्रसीदतीति यावत् । तेनैव प्रसादविषयेणैव लभ्यः । तद्व्यनक्ति— तस्य स्वप्रसादविषयस्यैष प्रसन्नः आत्मा स्वां तनूं विवृणुते प्रकाशयतीति । तस्यैवापरोक्षविषयो भवतीत्यर्थः ।। ३ ।।

**स.टी.**—ज्ञानप्रसादेनेत्युक्तं विवृणुते— **नायमिति** ।। बलहीनेन श्रवणमननहीनेन। प्रवचनादिना लिङ्गात्प्रमाणानुक्तपसोऽप्यलभ्यः ।। ३ ।।

**श्री.टी.**—पूर्वं ज्ञानप्रसादेनैव तं पश्यतीत्युक्तम् । तदयुक्तम् । प्रवचनादिनैव ज्ञानोत्पत्त्युपपत्तेरित्यत आह— **नायमात्मेति** ।। अयमात्मा भगवान्प्रवचनेन सावधारणमेतत् । व्याख्यानेन शास्त्राभ्यासरूपोपासनयेति यावत् । मेधया प्रज्ञया तत्पूर्वकं विचारेण मननेनेति यावत् । बहुना श्रुतेन श्रवणेन । एतत्साधन-सामर्थ्येनैव लभ्यो ज्ञेयो न भवति किन्तु एष आत्मा प्रसन्नः सन्मदीयोऽयमिति यं भक्तं वृणुते तेनैव लभ्यः । तदेव विवृणोति । एष आत्मा तस्याधिकारिणः स्वां तनुं विवृणुते स्वस्वरूपं प्रकाशयति अपरोक्षो भवतीत्यर्थः ।। ३ ।।

**उ.टी.**—पूर्वं ज्ञानप्रसादेनेत्यादिना अपरोक्षज्ञानं प्रति विष्णुप्रसादस्यैव मुख्यहेतुत्वमित्युक्तम् । इदानीं विष्णुभक्तेरपि अपरोक्षज्ञानं प्रति मुख्यहेतुत्वमस्तीति भावेनाह— **नायमात्मेति** ।। अधिकारिनिष्ठसाधनेषु भक्तेः प्राधान्यमिहाभिप्रेतम् । विष्णुप्रसादस्तु नाधिकारिनिष्ठः अतः प्राक् तत्प्राधान्यस्योक्तत्वेऽपि न तद्विरोध इति ध्येयम् । अयमात्मा विष्णुः प्रवचनेन सच्छास्त्रव्याख्यानेन । न लभ्यः न ज्ञेयः । मेधया 'धीर्धारणावती मेधे'ति कोशात् धारणावत्या बुद्ध्या । मननेन ध्यानेन चेति यावत् । बहुना विपुलेन । श्रुतेन श्रवणेन । अत्र श्रवणादीनां ज्ञानकारणत्वनिषेधः प्राधान्याभिप्रायेण । नतु सर्वथा । तथात्वे श्रवणादिविध्यनुपपत्तिरित्यवगन्तव्यम् । तर्हि अपरोक्षज्ञानं प्रति किं प्रधानं कारणमित्यत आह— **यमेवेति** ।। एषः परमात्मा यं वृणुते भक्तत्वेन स्वीकरोति । तेनैव लभ्यः ज्ञेयः । तदेव विवृणोति— **तस्येति** ।। भक्तस्येत्यर्थः । एषः आत्मा स्वां तनुं स्वस्वरूपं विवृणुते प्रकाशयति । भगवान् भक्तस्य अपरोक्षज्ञानविषयो भवतीत्यर्थः ।। ३ ।।

**आ.टी.**—न चक्षुषा पश्यतीत्यादि विवृणोति— **नेति** ।। अयं परमात्मा प्रवचनेन वेदव्याख्यानेन मेधया स्मृत्या बहुवारं श्रवणेन न प्राप्यः । एषः परमात्मायं भक्तत्वेन वृणुते यस्य प्रसन्नो भवति तेनैव लभ्यः प्राप्यः कथम् । एष परमात्मा तस्य भक्तस्यापरोक्षाय स्वां तनुं स्वस्वरूपं विवृणुते प्रकटीकरोति । ततश्च तस्य ज्ञानिनः स्वां तनुं स्वस्वरूपं लिङ्गशरीरभङ्गेन प्रकटीकरोति ।।

**गू.टी.**—पुंनिष्ठसाधनैस्तहेवैर्वास्तर्वा न प्राप्यः किन्तु स्वप्रसादेनैव हरिः प्राप्य इत्युक्तं विशदयति— **नायमिति** ।। बहुना श्रुतेन सर्ववेदार्थश्रवणेन मेधया श्रवणजन्यज्ञानधारणया प्रवचनेन व्याख्यानेनाऽपि अयमात्मा हरिः न लभ्यः । एष हरिर्यं वृणुते स्वीयत्वेन । यस्य श्रवणादिभिः प्रसन्नो भवतीति यावत् । तेनैव लभ्यः प्राप्यो ध्येयः येन च ध्येयस्तस्य प्रसन्न आत्मा स्वां तनुं विवृणुते स्वस्वरूपं दर्शयति । ततः स्वापरोक्षज्ञानानन्तरं तस्य जीवस्य स्वां तनुं आविर्भावयतीत्यर्थः ।। ३ ।।

**उपनिषत्**

**नायमात्मा बलहीनेन लभ्यो**
**नच प्रमादात्तपसो वाऽप्यलिङ्गात् ।**
**एतैरुपायैर्यतते यस्तु विद्वां-**
**स्तस्यैष आत्मा विशते ब्रह्मधाम ।। ४ ।।**

**व्या.टि.**—तर्हि प्रवचनादेर्वैयर्थ्यं किम्? नेत्याह— **नायमिति** ।। बलहीनेन श्रवणमननबलहीनेन । अलिङ्गात्प्रमाणानुक्तात् ।। ४ ।।

**ध.टि.**— ।। **बलहीनेनेति** ।। अयमात्मा बलहीनेन श्रवणमननभक्त्यादिबल-हीनेन । प्रमादाद्भगवद्विस्मरणादिरूपात् । दृष्टान्तार्थमेतदुक्तिः । अलिङ्गात् 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव चे'त्यादि वचनात् ज्ञापकशून्यात् । तदेतद-भिप्रेत्य टीकायां प्रमाणानुक्तादिति व्याख्यातम् । तपसोऽपीत्यर्थः । तस्माच्छ्रवणा-दिकमप्यावश्यकमिति भावः । यमेवैष इत्युक्तं विशदयति— **एतैरिति** ।। यो विद्वानधिकारी एतैः प्रवचनाद्युपायैः यतते ज्ञानाय यत्नं करोति । तस्याधिकारिणो ज्ञानदानार्थं एष आत्मा प्रसन्नस्सन् ब्रह्मधाम मुख्यप्राणं विशते मुख्यप्राणद्वारा ज्ञानदीपनं करोति । अधिकारिणं तत्र नयतीत्यर्थः ।। ४ ।।

**वामन.टी.**—बलहीनस्तु युक्तिहीनः । अलिङ्गं तपोदेवताविशेषस्मृतिहीनः ।

**न.टी.**—नन्वेवं तर्हि श्रवणादिवैय्यर्थ्यमित्यतः परमात्मप्रसादानुगुणस्य सार्थकमित्याह— **नेति** ।। अयमात्मा परमात्मा बलहीनेन श्रवणमननबल-हीनेन लभ्यो न । प्रमादात् परमात्मनि मनसो अनवधानात् । ध्यानाभावा-दित्यर्थः । न च लभ्यः । अलिङ्गात् प्रमाणानुक्तात् भगवत्प्रसादाननुगुणात् तपसो वा न लभ्यः । यस्तु विद्वान् शास्त्रजन्यविष्णूत्कर्षज्ञानवान् । एतैरुपायैः भगव-त्प्रसादानुगुणश्रवणादिसाधनैः भगवदपरोक्षार्थं यतते । तस्य ब्रह्मधाम परब्रह्मावस्थानं हृदयं एष आत्मा विशते । अपरोक्षज्ञानविषयो भवतीत्यर्थः ।। ४ ।।

**रा.खं.**——तर्हि प्रवचनादेर्वैयर्थ्यमित्यत आह— **नायमिति** ।। बलहीनेन श्रवणमननभक्त्यादिबलहीनेन । प्रमादाद्भगवद्विस्मरणादिरूपात् । दृष्टान्तार्थमेतदुक्तिः । अलिङ्गाल्लिङ्गोपलक्षितप्रमाणानुक्तात्तपसोऽपीत्यर्थः । तर्हि केन लभ्य इत्यत आह-— **एतैरिति** ।। भक्त्याद्युपेतश्रवणादिरूपैरुपायैः विद्वान् ज्ञानी यस्तु यतते साक्षात्काराय तस्यैष आत्मा ब्रह्मधाम प्रागुक्तदिशा मुख्यवायुं विशते प्रविशति । यस्त्वेतैरुपायैर्विद्वान्भूत्वा पुनर्ब्रह्मज्ञानाय यत्नवानास्ते तस्मिन्पुरुषे स्थितमुख्यवायौ विद्यमान एव भगवान्वायुद्वारा तस्य ज्ञानदीपनं करोतीति ज्ञानदीपनस्यागन्तुकत्वेन हेतुना तदपेक्षया तस्य ब्रह्मधाम वायुं विशत इत्युच्यते । यथा पिशाचाविष्टपुरुषे तस्मिन्सदा स्थितोऽपि मन्त्रादिभिराविष्टः पिशाच इति व्यवहारस्तथेति भावः ।। ४ ।।

**स.टी.**——यमेवैष इति विवृणुते— **एतैरिति** ।। य उपायैः प्रवचनादिभिः विद्वान् प्राणस्थं परमेश्वरं जानीयात् ।। ४ ।।

**श्री.टी.**——ननु तर्हि श्रवणादीनां वैय्यर्थ्यं स्यादित्यत आह— **नायमिति** ।। अयमात्मा बलहीनेन श्रवणमननबलहीनेन लभ्यो ज्ञेयो न भवति । वाशब्द उपमायाम् । यथा प्रमादान्मिथ्याज्ञानात् अलिङ्गात् "लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव चे"ति वचनाज्ज्ञापकशून्यात्प्रमाणादुक्तादिति यावत् । तपसश्च लभ्यो न तथेत्यर्थः । तस्माच्छ्रवणादिकमप्यावश्यकमिति भावः । यमेवैष इत्युक्तं विशदयति— **एतैरिति** ।। यो विद्वानधिकारी एतैः प्रवचनाद्युपायैर्यतते ज्ञानाय यत्नं करोति तस्याधिकारिणो ज्ञानदानार्थं एष आत्मा प्रसन्नः सन् ब्रह्मधाम मुख्यप्राणं विशते मुख्यप्राणद्वारा ज्ञानदीपनं करोति । अधिकारिणां तत्राविर्भवतीत्यर्थः ।। ४ ।।

**उ.टी.**—भक्तिरेव साक्षात्कारहेतुः नतु श्रवणादिकमिति यदुक्तं तत् भक्तेरधिकारिनिष्ठसाधनेषु श्रवणाद्यपेक्षया प्राधान्याभिप्रायेण । नतु श्रवणादीनां साक्षात्कारजनकत्वं नास्तीत्यभिप्रेत्येति भावेन श्रवणादीनामन्वयव्यतिरेकाभ्यां ब्रह्मदर्शनहेतुत्वं

प्रतिपादयन्नेव वाय्वधिष्ठाने ब्रह्मसाक्षात्कारो भवतीत्याह— **नायमात्मा बलहीनेनेति** ।। अयमात्मा विष्णुः बलहीनेन श्रवणमननध्यानबलहीनेन । न लभ्यो न द्रष्टव्यः । प्रमादात् अनवधानात् । "प्रमादोऽनवधानते"त्यमरः । विष्णुभक्तिरूपावधानाभावादिति यावत् । नच लभ्यत इत्यन्वयः ।। **तपसो वाप्यलिङ्गादिति** ।। वाशब्दश्चशब्दार्थः । तेन न लभ्य इत्यस्यात्राप्यनुकर्षः । लिङ्गपदेन तपसः सात्विकत्वज्ञापकं परमश्रद्धाज्ञापकं विवक्षितम् । तथाच—

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकांक्षिभिर्युक्तैः सात्विकं तत्प्रचक्षते ।।

इति गीतोक्ततपसः सात्विकत्वापादकपरमश्रद्धाफलेच्छाविरहविष्णुविषयकमनोयोगरूपं यत्तपसः सात्विकत्वे लिङ्गं तद्रहिता-त्तपसोऽपि देवद्विजगुरुप्राज्ञपूजनमित्यादित्रिविधतपसोऽपि विष्णुर्न द्रष्टव्य इत्यर्थः। किन्तु यो विद्वान् श्रवणादिना ब्रह्मसाक्षात्कारो न भवतीति जानन् । एतैः पूर्वोक्तैः श्रवणादिभिः तपोऽन्तैरुपायैर्दर्शनार्थं यतते तस्य पुरुषस्यार्थे तैः प्रसन्न इति शेषः । एषः आत्मा परमात्मा ब्रह्मधाम वायुं विशते तत्र तस्याविर्भवतीति तत्त्वप्रकाशिकायामुक्तम् । "उपायैर्यो विजानीयादि"ति भाष्यरीत्या तु विशते मुख्यप्राणाधिष्ठाने स्वसाक्षात्कारं जनयति । उत्पन्नं च स्वसाक्षात्कारं वर्धयतीति योज्यम् ।। ४ ।।

**आ.टी.**——न चक्षुषा पश्यतीत्यादि विवृणोति— **नेति** ।। अयं परमात्मा प्रवचनेन वेदव्याख्यानेन मेधया स्मृत्या बहुवारं श्रवणेन न प्राप्यः । एष परमात्मायं भक्तत्वेन वृणुते यस्य प्रसन्नो भवति तेनैव लभ्यः प्राप्यः कथम् । एष परमात्मा तस्य भक्तस्यापरोक्षाय स्वां तनुं स्वस्वरूपं विवृणुते प्रकटीकरोति । ततश्च तस्य ज्ञानिनः स्वां तनुं स्वस्वरूपं लिङ्गशरीरभङ्गेन प्रकटीकरोति किञ्चायमात्मा बलहीनेन श्रवणादिबलहीनेन प्रमादात् मनस एकाग्रत्वाभावात् अलिङ्गात्सात्त्विकतपोलक्षणहीनात्तपसश्च न प्राप्यः । किन्तु विद्वान्परमात्मन एव स्वातन्त्र्यादिकं ज्ञात्वा एतैः शास्त्रोक्तैः श्रवणाद्युपायैर्ब्रह्मापरोक्षाय यतते । तस्यापरोक्षज्ञानं दातुमेष परमात्मा ब्रह्मधाम स्वाधिष्ठानं मुख्यप्राणं विशते । भूतावेशवत् तत्र गतः स्वकार्यं करोतीत्यर्थः ।। ४ ।।

**गू.टी.**——श्रवणादिबलहीनेन अलिङ्गात् प्रमाणानुक्तात् तपसः । प्रमादात् प्रमाद-पूर्वकाच्च तपसः आलोचनादेश्च न प्राप्यः । उपायैः प्रमाणोक्तैः भक्तिपूर्वकश्रवणादि-साधनैर्यो विद्वान् अपरोक्षाय यतते तस्यापरोक्षं दातुमयमात्मा ब्रह्मणो धाम प्राणं विशते प्राणे स्थित्वापरोक्षज्ञानविषयो भवतीत्यर्थः । यो ज्ञानी श्रवणादिभिर्यतते तस्य सदा प्राणे स्थितो हरिस्तदा प्राणद्वारा पुनर्ज्ञानदीपनं करोति । एष एव पुनरावेश इति भावः । तज्ज्ञानफलमाह— **यमिति** ।। यमेनं प्राणस्थं हरिं प्राप्य तस्य ज्ञानेन तृप्ताः कृतात्मानः तन्मनस्का अत एव वीतरागाः गतरागादिदोषाः शमादियोगयुक्तमनसश्च ऋषयस्सर्वतो देहादेर्मुक्तास्सन्तः सर्वगं व्याप्तं अत एव सर्वं पूर्णं हरिमेवापियन्ति प्रविशन्ति ।। ४ ।।

## उपनिषत्

**सम्प्राप्यैनमृषयो ज्ञानतृप्ताः**
**कृतात्मानो वीतरागाः प्रशान्ताः ।**
**ते सर्वगं सर्वतः प्राप्य धीरा**
**मुक्तात्मानः सर्वमेवापियन्ति ।। ५ ।।**

**व्या.टी.**——विशते ब्रह्मधामेति आत्मा ज्ञायत इत्युक्तं तज्ज्ञानमहिमानमाह— **सम्प्राप्येति** ।। ५ ।।

**ध.टि.**—— ।। **सम्प्राप्येतीति** ।। आदौ निवृत्तकर्मणः कृतात्मानः शुद्धान्तःकरणाः पश्चाद्वीतरागा वैराग्यवन्तो भवन्ति । "कर्मणा शुद्धसत्त्वस्य वैराग्यं जायते हृदि" इति वचनाज्ज्ञानतृप्ताः श्रवणादिद्वारा जातेनापरोक्षज्ञानेन तृप्तास्सन्तो ऋषय एनं हरिं सम्प्राप्य स्थिताः । प्रशान्ताः प्रकृष्टसुखवन्तो विषयोपरता इति शेषः । तस्यैव विवरणम्— **त इति** ।। भगवत्येव युक्तात्मानो धीराः सर्वतो देहादेर्मुक्ता-त्मानस्सन्त इत्यर्थः । सर्वगं सर्वस्थितं सर्वं पूर्णं भगवन्तम् । तत्समीपं प्राप्यानन्तर-मेवापियन्ति तं प्रविश्यान्तर्बहिर्वा मोदन्ते इत्यर्थः ।। ५ ।।

**न.टी.**——तज्ज्ञानमहिमानमाह— **सम्प्राप्येति** ।। वीतरागाः प्रक्षीणविषयरागाः । कृतात्मानः निगृहीतमनआदीन्द्रियाः प्रशान्ताः त्रिकारणेषु क्रौर्यरहिताः मुक्तात्मानः भगवति मनोयोगयुक्ताः धीराः सिद्धान्तज्ञानादचलाः ऋषयः ज्ञानतृप्ताः अपरोक्षज्ञानेनान्यत्रालम्बुद्धियुक्ताः सर्वतो देहादेर्मुक्ताः सन्तः एनं परमात्मानं सम्प्राप्य तदनन्तरं ते ऋषयः सर्वगं व्याप्तं सर्वगुणपूर्णपरमात्मानमेवापियन्ति प्रविशन्ति । प्रविश्य तत्र वा बहिर्निर्गत्य वा भोगान् भुञ्जते ।। ५ ।।

**रा.खं.**——आत्मज्ञानमहिमानमाह— **सम्प्राप्यैनमिति** ।। ज्ञानतृप्ता ज्ञानेन तृप्ता ऋषयः एनं भगवन्तं सम्प्राप्य कृतात्मानः कृतकृत्या, वीतरागाः प्रशान्ताः विषयोपरता भवन्ति । न केवलमेतावदेव, किन्तु ते धीरास्सर्वतो देहादिबन्धान्मुक्तात्मानस्सन्तस्सर्वगं भगवन्तं प्राप्य सर्वमेव गुणपूर्णं भगवन्तमेवापियन्ति इतरैरज्ञेयतया प्रविशन्ति । प्रविश्य चेच्छयाऽन्तर्बहिस्सञ्चरन्तो भोगान् भुञ्जाना आसत इत्यर्थः ।। ५ ।।

**स.टी.**——भगवज्ज्ञानमहिमानमाह— **सम्प्राप्येति** ।। सर्वतो देहादेर्मुक्ताः सन्तः सर्वं पूर्णं भगवन्तम् । तमेवापियन्ति । देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमं प्राप्य तस्मिन्प्रविश्याथ प्रविश्यान्तर्बहिस्तथेति वचनात् ।। ५ ।।

**व.टी.**——आत्मज्ञानिनां फलमुच्यते— **सम्प्राप्यैनमिति** ।। ५ ।।

**श्री.टी.**——भगवज्ज्ञानमहिमानमाह — **सम्प्राप्येति**।। आदौ निवृत्तकर्मणा कृतात्मानः शुद्धान्तःकरणाः पश्चाद्वीतरागाः वैराग्यवन्तो भवन्ति । "कर्मणा शुद्धसत्त्वस्य वैराग्यं जायते हृदी"ति वचनात् । ज्ञानतृप्ताः श्रवणादिद्वारा जातेनापरोक्षज्ञानेन तृप्तास्सन्तो ऋषय एनं हरिं सम्प्राप्य स्थिताः प्रशान्ताः प्रकृष्टसुखवन्तो भवन्तीति शेषः । तस्यैव विवरणम् । तत्र भगवत्येव युक्तात्मानो धीराः सर्वतो देहादेर्मुक्तास्सन्त इति शेषः । सर्वगं सर्वत्र स्थितम् । सर्वं पूर्णं भगवन्तं तत्समीपं प्राप्यानन्तरं तमेवापियन्ति प्रविशन्ति । प्रविश्य चान्तर्बहिर्वा मोदन्त इत्यर्थः ।। ५ ।।

**उ.टी.**—प्राक् सत्यमेव जयतीति मन्त्रे अप्रतीकालम्बनानां वैकुण्ठस्थं विष्णुरूपं गम्यमुक्तम् । इदानीं प्रतीकालम्बनानां ब्रह्माण्डान्तर्गम्यं वदन्नेव ब्रह्माण्डाद्बहिः सर्वेषामपि ज्ञानिनां गम्यमाह— **सम्प्राप्येति** ।।

ततश्चायं मन्त्रार्थः—

वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
अपरोक्षतया विष्णो.............. ।।

इत्यनुव्याख्यानानुसारेण वीतरागा इत्यादिकं योज्यम् । ते वीतरागाः । अत एव प्रशान्ताः भक्तिदार्ढ्योपेता इति यावत् । तत एव कृतात्मानः श्रवणमनन-ध्यानविषयीकृतपरमात्मानः । तेनैव हेतुना ज्ञानतृप्ताः यथायोगं बिम्बापरोक्षज्ञानेना-वतारापरोक्षज्ञानेन च युक्ताः । ऋषयः ऋषिचिरपितृदेवगन्धर्वमनुष्यगन्धर्वक्षितिप-मनुष्योत्तमाः । एनं वायुम् । ब्रह्मधामेति प्रकृतत्वात् । चतुर्मुखमिति तु पर-मार्थः । सम्प्राप्य तदुपदेशेन ज्ञानतृप्ताः स्वबिम्बापरोक्षज्ञानपूर्णाः भवन्तीति शेषः । अत्रायं विवेकः । ज्ञानिनस्त्रिविधाः । उत्तममध्यमाधमभेदात् । तत्राप्रतीकालम्बना उत्तमाः व्याप्तदर्शित्वात् । तेषां गम्यं सत्यमेवमिति मन्त्रेऽभिहितम् । प्रतीकालम्बनाः द्विविधाः । देहालम्बनाः प्रतिमालम्बनाश्चेति । तत्र ऋष्याद्याः क्षितिपान्ताः मध्यम-ज्ञानिनो देहालम्बनाः देहान्तर्दर्शित्वात् । अधमज्ञानिनो मनुष्योत्तमास्तु प्रतिमा-लम्बनाः । देहाद्बहिः प्रतिमासु अवतारदर्शित्वात् । तत्र देहालम्बनाः अर्चिरादिमार्गेण सत्यलोकस्थब्रह्माणं प्राप्य तदुपदेशेन ज्ञानतृप्ताः भवन्ति । स्वबिम्बापरोक्षज्ञानपूर्णा भवन्ति । मनुष्योत्तमा अपि त्रिविधाः । उत्तममध्यमाधमभेदात् । यथोक्तम्—- "अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः" इति ।

तत्रोत्तमाः मानुषोत्कृष्टाः

सदैवाखण्डितध्यानं तप इत्युच्यते बुधैः ।
अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया ।।

इत्युक्तलक्षणतपोनामकसाधनेन तपोलोकं गच्छन्ति। "तपसस्तु तपोलोकः प्राप्य तेनान्यथा क्वचिदि"त्युक्तेः । मध्यमा मानुषोत्कृष्टाः

अपरोक्षदृशा नित्यमेकमात्रायुजा युतम् ।
योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् ।।

इत्युक्तलक्षणयोगाख्यसाधनेन जनलोकं गच्छन्ति । "जनलोकस्तु योगत" इत्युक्तेः । अधमा मानुषोत्कृष्टास्तु

तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् ।
पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम् ।।

इत्युक्तलक्षणपादयोगाख्यसाधनेन महर्लोकं गच्छन्ति । "पादयोगान्महर्लोक" इत्युक्तेः । एवं त्रिविधा अपि मनुष्योत्तमाः महरादिलोकत्रयं गत्वा कालान्तरे सत्यलोकं प्राप्य तत्र ब्रह्मोपदेशेन ज्ञानतृप्ताः भवन्तीति । तदनेन मन्त्रार्धेन देहालम्बनप्रतिमालम्बनभेदेन द्विविधानां प्रतीकालम्बनानां ब्रह्माण्डान्तः प्राप्यमुक्तम् । इदानीं प्रतीकालम्बनानामप्रतीकालम्बनानां च ब्रह्माण्डाद्बहिर्गम्यं भगवद्रूपमाह— **ते सर्वगमिति** ।। ये वैकुण्ठलोकं प्राप्ताः अप्रतीकालम्बनाः । ये च साक्षाल्लोकान्तरगमनद्वारेण वा सत्यलोकं प्राप्ताः ते सर्वेऽपि सर्वतो देहादेश्चरमदेहात्कर्मबन्धात्कामबन्धाच्च मुक्तात्मानः । अनेन विशेषणेन देवव्यावृत्तिः । तेषामधुनापि चरमदेहसद्भावात् । धीराः ज्ञानिनः । सर्वगं पृथिव्यादिगुण-त्रयान्ततत्त्वान्तर्गतं भगवन्तं प्राप्य सर्वं पूर्णं पृथिव्यादिरूपं भगवन्तमेवापियन्ति प्रविशन्ति । प्रविश्य च तदन्तस्तद्बहिर्वा मोदन्त इत्यपि ग्राह्यम् । तेन ज्ञानिनां प्रकृतिबन्धनिवृत्तेः प्रागपि सुखभोगोऽस्तीति सूचितम् । सालोक्यादिमोक्षानन्तरं विशेषाकारेण भोग इति ज्ञातव्यम् ।। ५ ।।

**आ.टी.**——वायावाविष्टब्रह्मज्ञानफलमाह— **यमिति** ।। यमेनं वाय्वाविष्टं हरिं प्राप्यापरोक्षतो ज्ञात्वा ज्ञानतृप्तास्तज्ज्ञानेनान्यत्रालंबुद्धिभुक्ता कृतात्मानः पूर्णमनसः अत एवान्यत्र रागहीनाः भगवन्निष्ठा ऋषयो ज्ञानिनस्ते धीरा हरौ युक्तमनसो भूत्वा सर्वतो देहादेर्मुक्तास्सन्तस्सर्वगं अत एव सर्वं पूर्णं ब्रह्म प्राप्य समीपं गत्वा तमेव परमात्मानमपियन्ति विशन्ति ।। ५ ।।

### भाष्यम्

**सर्वतो देहादेर्मुक्ताः सर्वगं भगवन्तं प्राप्य तमेवापियन्ति ।**

**देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमम् ।**
**प्राप्य तस्मिन् प्रविश्याथ मोदन्तेऽन्तर्बहिस्तथा ।।**

**—इति च ।।**

**व्या.टी.**—ते सर्वगमिति वाक्यं अर्थाप्रतीतेर्व्याचष्टे— **सर्वत इति** ।। अपियन्ति प्रविशन्ति । उक्तमर्थं प्रमाणेन द्रढयति— **देहादेरिति** ।।

**ध.टि.**— ।। **सर्वत इतीति** ।। अत्र मुक्ता इति शेषोक्तिः । सर्वं पूर्णम् । "विश्वं समस्तं पूर्णं च सर्वमि"त्यभिधीयत इति वचनात् । तत्समीपं प्राप्यानन्तरमपि यन्ति प्रविशन्ति । प्रविश्य मोदन्त इति शेषः । **देहादेरितीति** ।। अत्र सर्वत इत्यनूद्य देहादेरिति व्याख्यातम् । प्रविश्याथेत्यादि श्रुतौ शेषोक्तिरित्यर्थः ।।

**वामन.टी.**—एतैः प्रवचनाद्युपायैर्यतमानस्योक्तलक्षणस्याधिकारिणो हृदये प्राणगः प्रकाशते भगवान् सर्वगमिति वाक्यशेषं व्याख्याति— **सर्वतो देहादेरिति** ।। ये ज्ञानतृप्ता ऋषयः ते प्राकृतदेहेन्द्रियादेः सर्वतो मुक्ताः परिपूर्णं भगवन्तं सम्प्राप्य तमेव प्रविशन्ति । अत्रापि देहेन्द्रियादेरित्यादिकं महावराहवचनमाह— **देहादेरित्यादिना** ।।

**स.टी.**—तदभाषत— **सर्वत इति** ।।

**व.टी.**—तद्दुर्गमार्थत्वाद्याचष्टे— **सर्वतो देहादेरिति** ।। अस्मिन्नेव व्याख्याने वचनान्तरसंवादमाह— **देहादेरिति** ।।

**श्री.टी.**— ते सर्वगमिति वाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे— **सर्वत इति** ।। मुक्ता इति शेषोक्तिः । सर्वं पूर्णम् । 'विश्वं समस्तं पूर्णं च सर्वमित्यभिधीयत' इति वचनात् । तत्समीपं प्राप्याऽनन्तरमपियन्ति प्रविशन्ति । प्रविश्य मोदन्त

इति शेषः । अत्र प्रमाणमाह— **देहादेरिति** ।। सर्वत इत्यनूद्य देहादेरिति व्याख्यानम् । प्रविश्याथेत्यादि श्रुतौ शेषोक्तिः ।।

**उ.टी.**—अत्र मन्त्रे सर्वत इत्यस्यान्वयं दर्शयन्व्याचष्टे— **सर्वतो देहादेः मुक्तास्सन्त इति** ।। देहशब्देन चरमदेहो ग्राह्यः । आदिपदेन कर्मबन्धकामाविद्याश्च ग्राह्याः । मुक्ता इत्येकदेशोत्कीर्तनेन मुक्तात्मान इति समग्रं ग्राह्यम् । धीरा इत्यनेन देवानां प्राप्तौ तद्व्यावृत्त्यर्थं देहादेर्मुक्तात्मान इति व्याख्यातम् । देवानां तु परान्ते चरमदेहक्षयः । नतु ततः पूर्वमिति तद्व्यावृत्तिः । अनेन एकगुणोपासकानामपि संग्रहः । तेषां विशिष्टोत्क्रमणाभावेऽपि प्रबलरोगादिना देहे क्षीणे सति देहान्मुक्तत्वात् । कर्मादिबन्धमुक्तत्वाञ्च । नचात्र ते सर्वगमिति तच्छब्देन वैकुण्ठपर्यन्तमागतानामेव ज्ञानिनां परामर्शः । एकगुणोपासकानां तु न वैकुण्ठपर्यन्तमागमनम् । अतः कथं तच्छब्देन तत्परामर्श इति वाच्यम् ।

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा नरोञ्चाद्या ब्रह्मलोकात्सहामुना ।।

इत्यणुभाष्ये मनुष्योत्तमादीनां अर्चिरादिमार्गेण कार्यब्रह्मप्राप्तेः तेन सह कार्यब्रह्मप्राप्तेश्चोक्तत्वेनैकगुणोपासकानामपि वैकुण्ठपर्यन्तगमनसद्भावात् । नचाणुभाष्ये नरोञ्चपदेन कथमेकगुणोपासकानां ग्रहणमिति वाच्यम् । तेषामपि मनुष्योत्तमत्वात्। "केचित्तु मानुषाः मुक्तिमनुत्क्रम्यैव देहत" इति वचनबलेन विशिष्टोत्क्रमणशून्यानामेकगुणोपासकानां मनुष्योत्तमत्वावगमात् । नचाणुभाष्ये नरोञ्चपदेन एकगुणोपासकभिन्ना एव मनुष्योत्तमा ग्राह्या इति वाच्यम् । एकगुणोपासकानामर्चिरादिमार्गादिकं नास्तीति विशेषवचनाभावेन सर्वेषामपि मनुष्योत्तमानां नरोञ्चपदेन ग्राह्यत्वात्। अपवादाभावे उत्सर्गस्य स्थितिरिति न्यायात् । अत्रैव च स्थितिस्तेषामिति वचनं तु भोगार्थं नत्वत्रैव स्थितिरित्येवं परम् । केचित्तु—

मानुषा इत्युपक्रम्य दृष्ट्वा विष्णुमनुज्ञया ।
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः ।। इत्युक्तत्वात् ।।

तस्माद्देहादेर्मुक्ता इति विशेषणेन एकगुणोपासकग्रहणे न किञ्चिद्बाधकम् । अन्यथा

एकगुणोपासकानां पृथिव्याद्यावरणगतभगवत्प्रवेशाभावेन अन्तिमावरणान्तस्थित-विरजानदीस्नानाभावेन लिङ्गभङ्गाद्ययोगादिति ध्येयम् । सर्वगं प्राप्य सर्वमेवापि-यन्तीति पदानां व्यवहितत्वादन्वयं दर्शयन्नेव किञ्चिद्व्याचष्टे— **सर्वगमित्यादिना**।। अत्र पृथिव्याद्यव्यक्तान्ततत्त्वगतमिति सर्वगमित्यस्यार्थो बोध्यः । भगवन्तमिति भाष्यमध्याहृतम् । तमेवेत्यनेन सर्वमित्यस्यानन्तरं इत्यध्याहृत्य तस्यैव शब्दान्वय इति सूचितम् । ब्रह्मणा सहेति शेषः कर्तव्यः । ततश्च ब्रह्मणा सह सर्वम् । 'विश्वं समस्तं पूर्णं च सर्वमित्यभिधीयत' इति वचनात्पूर्णम् । तं सर्वगं पृथिव्यादिसर्वतत्त्वगतं भगवन्तमेवापियन्ति प्रविशन्तीत्यर्थः । तदुक्तम्—

ज्ञानिनः प्रलये सर्वं ब्रह्मणा सह पार्थिवम् ।
परमात्मानमाविश्य वारिस्थं तत्समाहिताः ।।
अग्निस्थं परमात्मानं तद्युताश्चैव वायुगम् ।
नभोगतं तेन नीताः मनस्स्थं तद्युतास्तथा ।।
ततो बुद्धिस्थमीशेशं ततोऽहंकारगं हरिम् ।
ततो विज्ञाननामानं महत्तत्त्वगतं हरिम् ।।
तत आनन्दनामानमव्यक्तस्थं जनार्दनम् ।।
प्राप्य नावृत्तिमायान्ति शान्तिभूता निरामयाः ।। इति ।।

सर्वतो देहादेर्मुक्ता इत्याद्युक्तव्याख्याने प्रमाणमाह— **देहादेरिति** ।। **सर्वगमिति** ।। पृथिव्यादिसर्वतत्त्वगतमित्यर्थः ।। **मोदन्तेऽन्तर्बहिस्तथेति** ।। अनेन यदा ब्रह्माण्डान्तस्स्थो ज्ञानिवर्गः पृथिव्याद्यावरणगतं भगवन्तं प्रविशति तदा तद्भगव-द्देहान्तः तद्बहिर्वा आनन्दमनुभवतीति सूचितम् । सम्प्राप्यैनमिति मन्त्रे एनमित्यस्य वायुमित्यर्थः । ब्रह्मधामेति तस्यैव प्रकृतत्वात् । ततश्चैनमित्यस्य ब्रह्माणमित्यर्थः पर्यवस्यति । मुक्तिप्रसङ्गे वायुवाचिशब्देन ब्रह्मा ग्राह्य इत्यनुव्याख्यानोक्तेः । एवं च एनं ब्रह्माणं सम्प्राप्य ज्ञानतृप्ता इति संयोज्यम् । अत्र तृप्ता इत्यनेनेदं सूचितम् । पूर्वं यथायोगं अवताराद्यपरोक्षयुक्ताः नतु स्वबिम्बदर्शनयुक्ताः । अतस्ते तृप्ताः न भवन्ति । हिरण्यगर्भप्राप्त्यनन्तरं तु तदुपदेशेन मोक्षजनकं यत्स्व-

इति शेषः । अत्र प्रमाणमाह— **देहादेरिति** ।। सर्वत इत्यनूद्य देहादेरिति व्याख्यानम् । प्रविश्याथेत्यादि श्रुतौ शेषोक्तिः ।।

**उ.टी.**—अत्र मन्त्रे सर्वत इत्यस्यान्वयं दर्शयन्व्याचष्टे— **सर्वतो देहादेः मुक्तास्सन्त इति** ।। देहशब्देन चरमदेहो ग्राह्यः । आदिपदेन कर्मबन्धकामाविद्याश्च ग्राह्याः । मुक्ता इत्येकदेशोत्कीर्तनेन मुक्तात्मान इति समग्रं ग्राह्यम् । धीरा इत्यनेन देवानां प्राप्तौ तद्व्यावृत्त्यर्थं देहादेर्मुक्तात्मान इति व्याख्यातम् । देवानां तु परान्ते चरमदेहक्षयः । नतु ततः पूर्वमिति तद्व्यावृत्तिः । अनेन एकगुणोपासकानामपि संग्रहः । तेषां विशिष्टोत्क्रमणाभावेऽपि प्रबलरोगादिना देहे क्षीणे सति देहान्मुक्तत्वात् । कर्मादिबन्धमुक्तत्वाच्च । नचात्र ते सर्वगमिति तच्छब्देन वैकुण्ठपर्यन्तमागतानामेव ज्ञानिनां परामर्शः । एकगुणोपासकानां तु न वैकुण्ठपर्यन्तमागमनम् । अतः कथं तच्छब्देन तत्परामर्श इति वाच्यम् ।

अर्चिरादिपथा वायुं प्राप्य तेन जनार्दनम् ।
यान्त्युत्तमा नरोच्चाद्या ब्रह्मलोकात्सहामुना ।।

इत्यणुभाष्ये मनुष्योत्तमादीनां अर्चिरादिमार्गेण कार्यब्रह्मप्राप्तेः तेन सह कार्यब्रह्मप्राप्तेश्चोक्तत्वेनैकगुणोपासकानामपि वैकुण्ठपर्यन्तगमनसद्भावात् । नचाणुभाष्ये नरोच्चपदेन कथमेकगुणोपासकानां ग्रहणमिति वाच्यम् । तेषामपि मनुष्योत्तमत्वात्। "केचित्तु मानुषाः मुक्तिमनुत्क्रम्यैव देहत" इति वचनबलेन विशिष्टोत्क्रमणशून्यानामेकगुणोपासकानां मनुष्योत्तमत्वावगमात् । नचाणुभाष्ये नरोच्चपदेन एकगुणोपासकभिन्ना एव मनुष्योत्तमा ग्राह्या इति वाच्यम् । एकगुणोपासकानामर्चिरादिमार्गादिकं नास्तीति विशेषवचनाभावेन सर्वेषामपि मनुष्योत्तमानां नरोच्चपदेन ग्राह्यत्वात्। अपवादाभावे उत्सर्गस्य स्थितिरिति न्यायात् । अत्रैव च स्थितिस्तेषामिति वचनं तु भोगार्थं नत्वत्रैव स्थितिरित्येवं परम् । केचित्तु—

मानुषा इत्युपक्रम्य दृष्ट्वा विष्णुमनुज्ञया ।
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः ।। इत्युक्तत्वात् ।।

तस्माद्देहादेर्मुक्ता इति विशेषणेन एकगुणोपासकग्रहणे न किञ्चिद्बाधकम् । अन्यथा

एकगुणोपासकानां पृथिव्याद्यावरणगतभगवत्प्रवेशाभावेन अन्तिमावरणान्तस्थित-विरजानदीस्नानाभावेन लिङ्गभङ्गाद्ययोगादिति ध्येयम् । सर्वगं प्राप्य सर्वमेवापि-यन्तीति पदानां व्यवहितत्वादन्वयं दर्शयन्नेव किञ्चिद्व्याचष्टे— **सर्वगमित्यादिना**।। अत्र पृथिव्याद्यव्यक्तान्ततत्त्वगतमिति सर्वगमित्यस्यार्थो बोध्यः । भगवन्तमिति भाष्यमध्याहृतम् । तमेवेत्यनेन सर्वमित्यस्यानन्तरं इत्यध्याहृत्य तस्यैव शब्दान्वय इति सूचितम् । ब्रह्मणा सहेति शेषः कर्तव्यः । ततश्च ब्रह्मणा सह सर्वम् । 'विश्वं समस्तं पूर्णं च सर्वमित्यभिधीयत' इति वचनात्पूर्णम् । तं सर्वगं पृथिव्यादिसर्वतत्त्वगतं भगवन्तमेवापियन्ति प्रविशन्तीत्यर्थः । तदुक्तम्—

ज्ञानिनः प्रलये सर्वं ब्रह्मणा सह पार्थिवम् ।
परमात्मानमाविश्य वारिस्थं तत्समाहिताः ।।
अग्निस्थं परमात्मानं तद्युताश्चैव वायुगम् ।
नभोगतं तेन नीताः मनस्स्थं तद्युतास्तथा ।।
ततो बुद्धिस्थमीशेशं ततोऽहंकारगं हरिम् ।
ततो विज्ञाननामानं महत्तत्त्वगतं हरिम् ।।
तत आनन्दनामानमव्यक्तस्थं जनार्दनम् ।।
प्राप्य नावृत्तिमायान्ति शान्तिभूता निरामयाः ।। इति ।।

सर्वतो देहादेर्मुक्ता इत्याद्युक्तव्याख्याने प्रमाणमाह— **देहादेरिति** ।। **सर्वगमिति** ।। पृथिव्यादिसर्वतत्त्वगतमित्यर्थः ।। **मोदन्तेऽन्तर्बहिस्तथेति** ।। अनेन यदा ब्रह्माण्डान्तस्स्थो ज्ञानिवर्गः पृथिव्याद्यावरणगतं भगवन्तं प्रविशति तदा तद्भगव-द्देहान्तः तद्बहिर्वा आनन्दमनुभवतीति सूचितम् । सम्प्राप्यैनमिति मन्त्रे एनमित्यस्य वायुमित्यर्थः । ब्रह्मधामेति तस्यैव प्रकृतत्वात् । ततश्चैनमित्यस्य ब्रह्माणमित्यर्थः पर्यवस्यति । मुक्तिप्रसङ्गे वायुवाचिशब्देन ब्रह्मा ग्राह्य इत्यनुव्याख्यानोक्तेः । एवं च एनं ब्रह्माणं सम्प्राप्य ज्ञानतृप्ता इति संयोज्यम् । अत्र तृप्ता इत्यनेनेदं सूचितम् । पूर्वं यथायोगं अवताराद्यपरोक्षयुक्ताः नतु स्वबिम्बदर्शनयुक्ताः । अतस्ते तृप्ताः न भवन्ति । हिरण्यगर्भप्राप्त्यनन्तरं तु तदुपदेशेन मोक्षजनकं यत्स्व-

बिम्बापरोक्षज्ञानं तेन तृप्ता इति । ततश्चैनं सम्प्राप्य ज्ञानतृप्ता इत्यस्य हिरण्यगर्भं प्राप्य तदुपदेशेन स्वबिम्बापरोक्षज्ञानपूर्णा इत्यर्थः । हिरण्यगर्भोपदेशेन स्वबिम्बापरोक्षज्ञानं च श्रुत्यादिसिद्धम् । स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत इति श्रुतौ बिम्बापरोक्षज्ञानस्य विशेषाकारेण ब्रह्मोपदेशजन्यत्वाभिधानात् ।

प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च ।
ज्ञानं चतुर्मुखात्प्राप्य......... ।।

इति स्मृतौ ब्रह्माणमस्मान्मतिमाप्येत्यनुव्याख्यानसंवादलाभात् । इत्थं च ऋषय इत्यनेन ऋष्याद्याः मनुष्योत्तमान्ताः प्रतीकालम्बना ग्राह्याः । तैरेव चतुर्मुखस्य प्राप्यत्वात् । तथाच श्रुतिः । "सप्रतीकाश्चतुर्मुखम् । अप्रतीकाः परमुहैते गच्छन्ती"ति । ननु ऋष्याद्याः क्षितिपान्ताः मध्यमाधिकारिण एव प्रतीकालम्बनाः । अन्तःप्रकाशत्वात् । यथोक्तम्—

प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् ।
नतु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ।। इति ।।

मनुष्योत्तमास्तु बहिःप्रकाशाः । "मानुषा एव बहिःप्रकाशा" इति श्रुतेः । अतस्ते न प्रतीकालम्बना इति चेत् । उच्यते । ऋष्यादीनां मध्यमज्ञानिनां प्रतीकालम्बनत्वं प्रतीकं देह इत्यादिसूत्रभाष्यसिद्धम् । मनुष्योत्तमास्तु प्रतिमालम्बनाः । तेषां प्रतीकालम्बनत्वं तु प्रतीकं देहादिकं तद्गतमेव ये नराः । उपासत इत्यनुव्याख्यानसिद्धम् । तत्रादिपदेन प्रतिमां गृहीत्वा तस्याः प्रतीकत्वाभिधानात् । ततश्च प्रतीकालम्बनाः द्विविधाः । देहालम्बनाः प्रतिमालम्बनाश्चेत्यभिप्रायेण मनुष्योत्तमानामपि प्रतीकालम्बनत्वोक्तौ न कश्चिद्दोष इति । ननु तथापि मनुष्योत्तमानां चतुर्मुखप्राप्तिर्न युज्यते । प्रतिमालम्बनत्वात् । देहालम्बनानामेव चतुर्मुखप्राप्तेः । यथोक्तम्— 'स्वदेहे ब्रह्म दृष्ट्वैव गच्छेद्ब्रह्मसलोकताम्' इति । सत्यम् । तथापि प्रतिमालम्बनानामपि चतुर्मुखप्राप्तिरस्त्येव । तदुक्तम्— प्रतीकं देहादिकं तद्गतमेव ये नराः । "उपासते ते पुरतः समाप्नुयुर्ब्रह्माणमि"ति । नचैवं स्वदेहे ब्रह्म दृष्ट्वैवेत्यवधारणविरोधः । देहालम्बनाः अर्चिरादिमार्गेण गत्वा लोकान्तरे स्थिति-

मकृत्वैव चतुर्मुखं प्राप्नुवन्तीत्यभिप्रायेणावधारणोपपत्तेः । प्रतिमालम्बनास्तु नैवम् । किन्तु महरादिलोके स्थित्वा कालान्तरे चतुर्मुखं प्राप्नुवन्ति । एतच्च ते ब्रह्मलोकेष्विति मन्त्रव्याख्यानावसरे स्फुटीकरिष्यामः । नचैवमपि पुरतः समाप्नुयुर्ब्रह्माण-मित्यनुव्याख्यानं कथं घटते । देहालम्बनानां पूर्वं ब्रह्मप्राप्तावपि प्रतिमालम्बनानां महरादिलोके स्थित्यनन्तरमेव चतुर्मुखप्राप्तिरिति वाच्यम् । वैकुण्ठस्थविष्णु-प्राप्तिमपेक्ष्यानुव्याख्याने पूर्वं चतुर्मुखप्राप्तिरुक्तेत्यलम् ।।

## उपनिषत्

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले**
**परामृतात्परिमुच्यन्ति सर्वे ।। ६ ।।**

**व्या.टी.**——मोक्षः किं ज्ञानानन्तरमेव भवति नेत्याह— **वेदान्तेति** ।। वेदानां अन्ताद्युक्त्यनुसन्धानरूपाज्ञातविज्ञानेन सम्यग्विषयीकृतार्थाः । परामृतात् प्रकृतेः ।। ६ ।।

**ध.टि.**——।। **वेदान्तेतीति** ।। सम्यग्विषयीकृतार्थाः सारासारविवेकवन्तः सन्न्यासयोगात्काम्यकर्मपरित्यागरूपादुपायात् शुद्धसत्त्वाः शुद्धान्तःकरणा यतयः श्रवणादिप्रयत्नवन्तोऽधिकारिणः । अपरोक्षज्ञानानन्तरं भोगेन क्षीणप्रारब्धकर्माणः प्रतीकालम्बनाश्च ब्रह्मलोके चतुर्मुखलोके सत्याख्ये स्थिता भवन्ति । पश्चात्ते सर्वे परान्तकाले परब्रह्मायुस्तस्यान्तकाले महाप्रलये ब्रह्मणा सह विरजास्नानेन परामृतात् लिङ्गदेहरूपायाः प्रकृतेः परिमुच्यन्ति मुच्यन्ते । मुक्ता भवन्तीत्यर्थः ।।

**वा.टी.**——'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यत्र वेदान्तविज्ञानेन वेदान्तश्रवण-जनितज्ञानेन सुनिश्चितार्थाः सम्यक् निश्चिततत्त्वार्थाः यतयः, यती प्रयत्न इति धातोस्तदनन्तरं मनने ध्याने च कृतप्रयत्नाः, तेन चापरोक्षज्ञाने सति शुद्धसत्त्वाः

शुद्धान्तःकरणाः एते ब्रह्मलोकेषु प्रतीकालम्बनाश्चेच्चतुर्मुखलोके, अप्रतीकालम्बनाश्चेत्परब्रह्मलोकेषु स्वयोग्यतानुसारेण स्थित्वा परान्तकाले परामृतान्नित्यमुक्तान्नारायणात् सर्वे परिमुच्यन्ति । ल्यब्लोपनिमित्तेयं पञ्चमी । परमपुरुषं प्राप्य सर्वे परिमुच्यन्ति । परितः परमाच्छादिकमायायाः, स्वाच्छादिकमायायाः स्वस्वरूपावरकलिङ्गदेहाच्च मुक्ता भवन्ति । नतु यतीनामेव मोक्ष इति नियमः । प्रियव्रतध्रुवजनकादिराजर्षीणां वनस्थानामपि मोक्षश्रवणात् । अस्य वाक्यस्योक्तविधया सावकाशत्वाच्च ।। ६ ।।

**न.टी.**—मोक्षः किं ज्ञानानन्तरमेव भवति नेत्याह— **वेदान्तेति** ।। वेदान्तयुक्त्यनुसन्धानरूपोऽन्तो निर्णयस्तस्मात् जातविज्ञानेन सुनिश्चितार्थाः सम्यग्विषयीकृतविष्ण्वाद्यर्थाः । सन्न्यासयोगात् काम्यकर्मपरित्यागरूपोपायात् । शुद्धसत्त्वाः शुद्धान्तःकरणाः ये यतयः अपरोक्षज्ञानप्रयत्नशीलाः ते सर्वे अपरोक्षज्ञानानन्तरं ब्रह्मलोके स्थित्वा तदुपदेशं प्राप्य परान्तकाले विरिञ्चायुःसमाप्तिकाले परामृतात् प्रकृतेः परिमुच्यन्ति ।। ६ ।।

**रा.खं.**—ज्ञानानन्तरमेव मुक्ता भवन्ति किमित्यतो नेत्याह— **वेदान्तेति** ।। वेदानामन्तो निर्णयो यस्मात्तस्मान्मीमांसाशास्त्रजनितेन विज्ञानेन सुनिश्चितार्था सम्यङ्निर्णीतार्था भगवति सर्वकर्मणां समर्पणाख्यसन्न्यासयोगादुपायाच्छुद्धसत्त्वा यतयः प्रयत्नशीलाः ये ते सर्वे ब्रह्मलोकेषु सत्यलोकेषु स्थित्वेति शेषः । स्थानबाहुल्याद्बहुवचनम् । परान्तकाले परेति ब्रह्मणः शतायुषो नाम, तस्यान्तकाले परामृतात्प्रकृतिबन्धात्परिमुच्यन्ति परिमुच्यन्ते मुक्ता भवन्तीति । तदुक्तं सूत्रे 'कार्यं बादरिरस्य गत्युपपत्तेः' इति । एतच्च प्रतीकेषु ब्रह्मध्यातृपरम् । अप्रतीकालम्बना ये व्याप्तदर्शिनस्ते तु वैकुण्ठादिलोकेऽमुक्तस्थाने स्थितं भगवन्तमेव प्राप्य तत्र स्थित्वा, परान्तकालसमये पुनः सत्यलोकं प्राप्य तेन सह मुच्यन्ते । तदाह सूत्रे 'परं जैमिनिर्मुख्यत्वात्' इति ।। ६ ।।

**स.टी.**—मोक्षः किं परोक्षज्ञानानन्तरमेव भवति नेत्याह— **वेदान्तेति** ।।

वेदान्तानि ब्रह्मसूत्राणि तज्जन्येन ज्ञानेन ब्रह्मलोके स्थित्वा परान्तकाले परामृतात्प्रकृतेः । अन्यथाभावनियमोऽनृतता कार्यकारण इति न्यायविवरणोदाहृतवचनात् परिमुच्यन्ति ।। ६ ।।

**व.टी.**——ननु किं ज्ञानिनां ज्ञानोदयसमनन्तरमेव मोक्षः किं वा व्यवधानमस्तीत्यपेक्षायामुच्यते— **वेदान्तेति** ।। ६ ।।

**श्री.टी.**——ननु मोक्षः किमपरोक्षज्ञानानन्तरमेव भवति नेत्याह— **वेदान्तेति** ।। वेदान्ता उपनिषदस्तच्छ्रवणजनितं यद्विज्ञानं तेन सुनिश्चितार्थाः सम्यग्विषयीकृतभगवद्रूपार्थाः । सन्न्यासयोगात्काम्यकर्मपरित्यागरूपादुपायाच्छुद्धसतत्त्वाः शुद्धान्तःकरणा यतयः एवं श्रवणादिप्रयत्नवन्तोऽधिकारिणोऽपरोक्षज्ञानानन्तरं भोगेन क्षीणप्रारब्धकर्माणः प्रतीकालम्बनाश्चेद्ब्रह्मलोके चतुर्मुखलोके सत्याख्ये स्थिता भवन्ति । अप्रतीकालम्बनाश्चेत्परब्रह्मलोके स्थिता भवन्ति । पश्चात्ते सर्वे परान्तकाले परं ब्रह्मायुस्तस्यां तत्काले महाप्रलये ब्रह्मणा सह विरजास्नानेन परामृताल्लिङ्गदेहरूपात्प्रकृतेः परिमुच्यन्ति मुच्यन्ते मुक्ता भवन्तीत्यर्थः ।। ६ ।।

**उ.टी.**——ननु त्रिविधमनुष्योत्तमरूपाः प्रतिमालम्बनाः यथायथं महरादिलोकं गच्छन्ति । देहालम्बनास्तु सत्यलोकम् । तत्र किन्ते प्रतिमालम्बनादयः स्वगम्यं लोकं प्राप्य तत्र कतिपयकाले स्थित्वा ब्रह्माण्डाद्बहिर्गच्छन्ति उत महरादिगमनानन्तरं क्वाप्यस्थित्वाऽविलम्बेनैव गच्छन्ति । किञ्च गुणत्रयगतभगवत्प्राप्त्यनन्तरं ज्ञानिनां किं भवतीति तत्राह— **वेदान्तेति** ।। ये यतयो निर्जितेन्द्रियसमूहाः । ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते इति कोशात् । सन्न्यासयोगात् फलकामनादित्यागः सन्न्यासः । भगवदर्पणबुद्ध्या स्ववर्णाश्रमोचितकर्मानुष्ठानं योगः । मध्यमपदलोपी चात्र समासः । ततश्च सन्न्यासपूर्वकाद्योगात् । शुद्धसत्त्वाः शुद्धान्तःकरणाः । कर्मणा शुद्धसत्त्वस्येति स्मृतेः । अत एव वेदान्तविज्ञानसुनिश्चितार्थाः । अन्तो निर्णयः । वेदान्तः सर्ववेदार्थनिर्णयः । श्रवणमिति यावत् । तज्जन्यं विज्ञानं मननं ध्यानं च । तेन सुनिश्चितोऽपरोक्षीकृतोऽर्थः परतत्त्वं यैस्ते तथा । ते सर्वे

अप्रतीकालम्बनादयः । ब्रह्मलोकेषु वैकुण्ठादिमहर्लोकान्तलोकेषु स्थित्वा कतिपयकाले उषित्वा । परान्तकाले परस्य ब्राह्मवर्षशतस्यान्तकाले अन्तिमकाले वर्षशतस्याष्टधा विभागे कृते योऽन्तिमभागः सार्धद्वादशरूपः तस्मिन्काल इति यावत् । महरादिलोकमिति शेषः । परि परित्यज्य । इतः परमव्यक्ततत्त्वपर्यन्तं गत्वा । वर्षशतसमाप्तौ पुन्नामकब्रह्मणा सह विरजानदीस्नानेनेति शेषः । परामृता-न्नित्यमुक्तलक्ष्म्यभिमन्यमानप्रकृतिबन्धात् । स्वमते विद्याविरोधित्वेन प्रकृतेरेवा-विद्याबन्धादिति परमार्थः । इदमुपलक्षणम्— लिङ्गदेहाञ्चेत्यपि ग्राह्यम्। मुच्यन्ति मुच्यन्ते । अत्यन्तमुक्ताः भवन्तीति । अत्रास्याः विरिञ्चदेहे लय इति ज्ञेयम् । अथ गारुडमार्ग उच्यते । अग्र्यवराणामन्यत्र प्रविष्टत्वेन अनुक्तानां सर्वदेवानामग्नौ प्रवेशः । तस्य सूर्ये । तस्य बृहस्पतौ । एवं विनायकाख्यदेवानां गणेशे ऋभूणां च पृथिव्यां प्रवेशः । गणेशपृथिव्योश्च बृहस्पतौ प्रवेशः । तस्याः सुपर्णे । तस्य सरस्वत्याम् । तस्याः ब्रह्मणि इत्येवं देवानां स्वोत्तमप्रवेशेन चरमदेहलय इति। अयं च देवानां स्वोत्तमप्रवेशेन देहलयः पृथिव्यादिसर्वतत्त्वलयानन्तरं भवति । तथाहि—सर्गक्रमतो विपर्ययः मुक्तौ लये इत्यनुव्याख्याने सर्गक्रमवैपरीत्येन देवानां स्वोत्तमप्रवेशेन चरमदेहलय उक्तः । तत्र सूक्ष्मसृष्टौ देवानां सूक्ष्मोपादानक-देहयोगलक्षणोत्पत्तिरेव सर्गः । तत्त्वान्तर्देवानां देहोत्पत्ति-स्त्वनुसर्गः । तदुक्तं तत्त्वप्रकाशिकायाम्—आकाशः सम्भूत इत्यादौ जडानां मुख्योत्पत्तिरुच्यते । देवानां त्वनुसर्ग इति । अतो मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायेना-नुव्याख्यानगतसर्गशब्देन मुख्यस्यैव सर्गस्य ग्रहणम् । तेन सर्वतत्त्वलयानन्तरं सूक्ष्मसृष्टौ यो देवानामुत्पत्तिक्रमः तद्वैपरीत्येनैव देवानां स्वोत्तमप्रवेशेन चरमदेहलय इति सिद्ध्यतीति ।। ६ ।।

**आ.टी.**——ब्रह्मज्ञानानन्तरमेव मुक्तिर्न भवतीत्याह— **वेदान्तेति** ।। ये यतयः प्रयत्नवन्तः वेदानामन्तेन निर्णयेन ब्रह्ममीमांसोक्तरीत्या जातेन विशेषज्ञानेन सुनिश्चिता अर्था येषां ते तथा सन्न्यासयुक्तयोगात्काम्यकर्मादि त्यक्त्वा शुद्धमनसो ध्यानयोगं प्राप्य ब्रह्मलोके ब्रह्मापरोक्षे सति ते सर्वे ब्रह्मापरोक्षिणोऽर्चिरादिमार्गेण

प्राप्ते ब्रह्मलोके यया योग्यया परापरब्रह्मलोके स्थित्वा परान्तकाले चतुर्मुख-शतवर्षानन्तरं ऋतं ब्रह्म तद्विरोधादनृतं बन्धः । परं च तदनृतं च परानृतं तस्माल्लिङ्गशरीराद्बन्धात्परिमुच्यन्ते ।। ६ ।।

**गू.टी.**—ज्ञानेन सत्यलोकादिप्राप्तिद्वारा मोक्षो भवतीत्याह— **वेदान्तेति** ।। वेदानामन्तात् युक्त्यनुसन्धानात्मकात् निर्णयात् जातेन विज्ञानेन सम्यग्विषयीकृतार्थाः सर्वस्य त्यागरूपात् योगादुपायात् ये शुद्धमनसो यतयः ते सर्वे ब्रह्मलोके स्थित्वा परान्तकाले ब्रह्मप्रलये परनृतात् अत्यन्तानृतादिकं यस्याः सकाशाद्भवति तस्याः प्रकृतेः परिमुच्यन्ति परामृता दिति पाठे नित्यप्रकृतेरित्यर्थः । चतुर्विध-नाशरहितहरिप्रसादादिति वा ।। ६ ।।

## भाष्यम्

**ब्रह्मलोकेषु स्थित्वा परान्तकाले परिमुच्यन्ति ।।**

**व्या.टी.**—ते ब्रह्मलोकेषु मुच्यन्त इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे— **ब्रह्मेति**।।

**ध.टि.**— ।। **ब्रह्मलोकेषु मुच्यन्ते इत्यन्यथाप्रतीतिमिति** ।। ब्रह्मलोकप्राप्तौ सत्यां तदैव तत्रैव मुच्यते इत्यन्यथाप्रतीतिमित्यर्थः । तथात्वे परान्तकाले इत्यस्य वैय्यर्थ्यापत्तेः । विरजास्नानेन विरजायामेव मुक्त्यङ्गीकाराच्च ।। **ब्रह्मेतीति** ।। अत्र ब्रह्मलोक इति क्वचिदेकवचनान्तः पाठः । स्थानबाहुल्यात् बहुवचनम् । प्रतीकालम्बनाश्चेत् अमुक्तस्थानब्रह्मलोकेषु सत्यलोकेषु अप्रतीकालम्बनाश्चेत् परब्रह्मलोकेषु वैकुण्ठेषु अवस्थानं बोध्यम् । परब्रह्मायुः परिमुच्यन्ति । परामृत-शब्दवाच्यलिङ्गशरीरादित्यर्थः ।।

**वामन.टी.**—पुनश्च ज्ञानिनां विशेषं फलं चाह— **ब्रह्मलोकेष्विति** ।। भाष्य-स्यायमर्थः । सत्याख्ये ब्रह्मलोकेऽभीष्टदेशेषु च कञ्चित्कालं स्थित्वा परान्त-काले वैकुण्ठं प्राप्य परिमुच्यन्ति । अतो विरिञ्चलोक एव साक्षान्मोक्ष इति न शंक्यम् ।।

**स.टी.**——तदभाषत— **ब्रह्मलोकेष्विति** ।।

**व.टी.**——चतुर्मुखब्रह्मलोकेषु परिमुच्यन्तीत्यन्यथाप्रतीतिनिरासाय व्याकरोति — **ब्रह्मलोकेष्विति** ।।

**श्री.टी.**——ते ब्रह्मलोके त्वित्यत्र परब्रह्मलोके परामृताल्लिङ्गशरीरान्मुच्यन्त इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे— **ब्रह्मलोक इति** ।। चतुर्मुखलोके सत्याख्ये परब्रह्मलोके वैकुण्ठे च स्थिता भवन्तीति शेषः । परं ब्रह्मायुः । परिमुच्यन्ति। परामृतशब्दवाच्यलिङ्गशरीरादित्यर्थः ।।

**उ.टी.**——अत्र मन्त्रे ब्रह्मलोकेषु परामृतात्परिमुच्यन्तीत्यन्वयः प्रतीयते । अन्तिमावरणानन्तरस्थितविरजानदीस्नानेन पुन्नामकब्रह्मणा सह प्रकृतिबन्धमोक्षस्य प्रमितत्वादित्यतोऽपेक्षिताध्याहारपूर्वकं तद्वाक्यं योजयति— **ब्रह्मलोकेष्वित्यादिना मुच्यन्तीत्यन्तेन** ।। अत्र ब्रह्मलोकेषु स्थित्वेत्यनेनाद्यप्रश्नस्योत्तरमुक्तम् । द्वितीयस्योत्तरलाभप्रकारं वक्ष्यामः । तत्र ब्रह्मलोकेष्वित्यस्य विष्णुलोकेष्वित्यर्थकत्वाद्वैकुण्ठसत्यतपोजनमहर्लोकष्वित्यर्थः । एतेषां लोकानां विष्णुलोकत्वं च ददौ लोकान् वैष्णवानिति भारततात्पर्यसिद्धम् ।। **परान्तकाल इति** ।। परं ब्रह्मवर्षशतम् । तस्याष्टधा विभक्तस्य अन्तः कालः सार्धद्वादशवर्षरूपः तत्रेत्यर्थः । परीति पृथक्पदं परित्यज्येत्यर्थकम् । अत्र महर्लोकादिकमित्युपस्कर्तव्यम् । तथाच परान्तकाले महर्लोकादिकं परित्यज्येत्यर्थः । इतः परमुत्तरोत्तरं अव्यक्ततत्त्वगतभगवत्प्राप्त्यर्थं पुन्नामकब्रह्मणा सह विरजानदीस्नानेनेति शेषः । अनेन द्वितीयस्योत्तरं लब्धम्। मुच्यन्तीति परस्मैपदं छान्दसम् । मुच्यन्ते । अस्य परामृतादित्यनेनान्वयः । परामृतादित्यस्य नित्यमुक्तलक्ष्म्यभिमन्यमानप्रकृतिबन्धादित्यर्थः। न्यायविवरणोक्तपरामृतादिशाखान्तरस्थपाठे प्रकृतिबन्धादित्यर्थः स्फुट एव । तथाहि—प्रकृतिप्राकृतं अनृतं परिणाममाहुः । प्रकृतिप्राकृतं प्रोक्तमिति स्मृतेः। तत्र प्राकृतवारणाय परेति विशेषणम् । तेन परामृतादित्यस्य प्रकृतिबन्धादित्यर्थकत्वात्तदनुसारेण परामृतादित्यस्यापि स एवार्थ इत्यवगन्तव्यम् । एतच्चोपलक्षणम् । लिङ्गदेहान्मुच्यन्त

इत्यपि ग्राह्यम् । इदं शरीरं निहत्य अविद्यां गमयित्वा अन्यन्नतरं कल्याणतरं रूपं तनुत इति श्रुत्यन्तरे प्रकृतिरूपाविद्यायाः लिङ्गशरीरस्य च सहैव निवृत्त्यभिधानादिति ध्येयम् ।।

## उपनिषत्

**गताः कलाः पञ्चदश प्रतिष्ठा**
**देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा**
**परेऽव्यये सर्व एकीभवन्ति ।। ७ ।।**

**व्या.टी.**—मुक्तिप्रकारं दर्शयति— **गता इति** ।। ७ ।।

**ध.टि.**— ।। **गता इतीति** ।। प्रतिष्ठाः संसारिणां प्रतिष्ठाः नियामकाः । कलाः कलाभिमानिनः पञ्चदश देवाः । गताः मुक्ताः । यस्य जीवस्य संसारे नियामकतया स्थिताः ताः कलादेवताः तज्जीवमुक्त्यवसरे मुक्ताः सत्यो मुक्तस्यापि तस्य नियामका इति तात्पर्यार्थः । पञ्चदशकलास्तु 'स प्राणमसृजत । प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियमनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति षट्प्रश्नोक्तदिशा कर्मव्यतिरिक्ता ध्येयाः । तदभिमानिदेवाश्च 'कर्मेति पुष्करः प्रोक्त' इत्यादि षट्प्रश्नभाष्योक्तदिशा प्राणवाणीविनायकप्राणसुत-मरुत्पावकबुधशनीन्द्ररुद्रचन्द्रवरुणवह्निस्वाहापर्जन्योषाः क्रमाज्ज्ञेयाः । तत्र प्राणः जीवाख्यकलाभिमानी बोध्यः । यद्यपि कर्माभिमानिना पुष्करेण सह षोडशकला-स्तथापि तस्य कर्माणीति पृथगुक्तेः पञ्चदशेत्युक्तिः । पृथगुक्तिकृत्यं भाष्ये व्यक्तम् । प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रतिष्ठाः प्रति प्रति प्रत्येकं प्रत्येकं स्थिताः देहधारणादिना स्थितिहेतवः । कलाभिमानिदेवताव्यतिरिक्ताः मुक्तास्सर्वे देवास्तथा मुक्तानि कर्माणि तदभिमानी पुष्करः विज्ञानमय आत्मा जीवश्चेत्येते सर्वे अव्यये नाशहीने परे परमात्मनि एकीभवन्ति । तेन संश्लिष्टा भवन्ति । तं

प्रविशन्तीति यावत् । प्राग्विरुद्धमतयोऽधुना ऐकमत्यं प्राप्नुवन्तीति वा । ईश्वरव्यक्तिस्थानापेक्षया एकस्थानस्थिता भवन्तीति वार्थः ।। ७ ।।

**वा.टी.**——गताः मुक्ताः पञ्चदश मुक्ताः पञ्चदश कलाः प्राणश्रद्धारुद्रेन्द्र-सोमवरुणाग्निविनायककोणवायुपावकाख्याग्निकुमारपर्जन्यस्वाहाबुधोषाशन्याख्याः कलाः कलाभिमानिनो ब्रह्मादिदेवाः प्रतिदेवतासु देवताः प्रति विद्यमानाः तासु प्रजासु प्रतिष्ठिताः बिम्बरूपेण प्रति प्रति स्थिताः । सर्वे देवाः पञ्चदशकाव्यतिरिक्ता देवाः शतगणस्थदेवाः पुष्करव्यतिरिक्ततदितरदेवाश्च कर्माणि कर्माभिमानि-पुष्कराख्यदेवः, बहुवचनमभिमन्यमानकर्मबाहुल्यविवक्षया, विज्ञानमयः, अपरोक्ष-ज्ञानी आत्मा उक्तदेवताजीवव्यतिरिक्तो जीवः, जातावेकवचनं, ऋष्यादिमनुष्योत्तम-पर्यन्तापरोक्षज्ञानिजीवा इत्यर्थः । एकीभवन्ति अविरोधाख्यैकीभावं प्राप्नुवन्ति । प्रागपि विद्यमानत्वेन पराभिमतैक्यस्य 'अभूततद्भावे कृभ्वस्तियोगे च्विः' इति सूत्रोक्ताभूततद्भावार्थकच्विप्रत्ययार्थत्वायोगात् । प्रागविद्यमानस्यैवैक्यस्य प्राप्तिस्तु भिन्नयोर्घटपटयोः कदाप्यैक्यादर्शनेनासम्भावित एव । मत्स्यादिभगवदवताराणां मूलरूपेण क्वचिदेकीभावकथनेऽपि मूलरूपाख्यविशेषेण संश्लेष एवैकीभावः, नत्वैक्यम् । तस्य प्रागपि विद्यमानत्वेन च्विप्रत्ययार्थत्वायोगात् । गता नष्टा भविष्यन्तीति परकीयार्थे भविष्यन्तीति पदाभावो दोषः । यथास्थितपदप्रयोग एवार्थसम्भवे अध्याहारोऽपि दोष एव । किञ्च देवाश्च सर्वे प्रतिदेवतासु गता इत्युक्तदेवतानामपि नाशप्रसङ्गात् कर्माणीत्युक्तकर्मणामनष्टानामेवैकीभावकथन-विरोधाच्च ।। ७ ।।

**न.टी.**——मुक्तिप्रकारमाह— **गता इति** ।। प्रतिदेवतासु प्रतिबिम्बभूतासु जीवप्रजासु प्रतिष्ठा देहे स्थितिहेतुत्वेन विद्यमानाः पञ्चदशकलादेवाः तत्त्वाभिमानिदेवाः सर्वकर्माणि जीवानेककर्माभिमानी पुष्करः विज्ञानमयः स्वयोग्यसमग्रज्ञानः आत्मा मुच्यमानो जीवश्च परे मुक्तामुक्तविलक्षणत्वेनोत्तमे अव्यये चतुर्विधनाशरहिते परमात्मनि मुक्तिकाले गताः मुक्ताः एकीभवन्ति । परमात्ममत्यविरुद्धमतयः निर्दुःखानन्दानुभवत्वेन तत्सदृशाः तेन सहैकस्थान-

निवासिनो भवन्ति । प्राणादिकलादिदेवेभ्यः कर्माभिमानिपुष्करस्य पृथगुक्तिः । तस्य प्रत्यवरत्वात् ।। ७ ।।

**रा.खं.**——मुक्तिप्रकारमाह— **गता इति** ।। प्रतिष्ठाः संसारिणां प्रतिष्ठा नियामकाः कलाः कलाभिमानिनः पञ्चदश देवाः गता मुक्ताः । यस्य जीवस्य संसारे नियामकतया स्थितास्ताः कलादेवतास्तज्जीवमुक्त्यवसरे मुक्ताः सत्यो मुक्तस्यापि तस्य नियामिका इति तात्पर्यार्थः । पञ्चदशकलास्तु, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च' इति षट्प्रश्नोक्तदिशा ध्येयाः । तदभिमानिदेवताश्च 'कर्मेति पुष्करः प्रोक्तः' इत्यादि षट्प्रश्नभाष्योक्तदिशा प्राणवाणीविनायकप्राणसुतमरुत्पावकबुध-शनीन्द्ररुद्रचन्द्रवरुणवह्निस्वाहापर्जन्योषाः क्रमाज्ज्ञेयाः । उक्तं हि 'यत्र मूर्तिधराः कला' इत्येकादशस्कन्धतात्पर्ये सप्तदशाध्याये 'कलाः प्राणाद्याः, स प्राणमसृजत प्राणाच्छ्रद्धां' इत्यादि । यद्यपि कर्माभिमानिना पुष्करेण सह षोडशकलाः, तथापि तस्य कर्माणीति पृथगुक्तेः पञ्चदशत्वम् । पृथगुक्तिकृत्यं भाष्ये व्यक्तम् । सर्वे देवाश्च कलादेवेभ्योऽन्ये सर्वे देवाश्च प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु स्थितास्तिष्ठन्ति । कर्माणि कर्माभिमानी पुष्करः, विज्ञानमयो विज्ञानरूप आत्मा जीवश्च अव्यये नाशरहिते परे परमात्मनि, सर्वे षोडशकलादेवताः जीवाश्चेत्येते सर्वे मुक्ताः सन्त एकीभवन्ति परमात्मानं प्रविश्य तेन सह एकस्थानस्थिता भवन्तीति वा, तद्बुद्धिविषयीकृतार्षविषयकबुद्धिमन्तो नतु तद्विरुदधार्थविषयकमतियुक्ता इति वार्थः ।। ७ ।।

**स.टी.**——मुक्तिप्रकारं दर्शयति— **गता इति** ।। ७ ।।

**व.टी.**——परामृतात्परिमुच्यन्तीत्युक्तं मोक्षं निरूपयति— **गताः कला इत्यादिना तत्रैकीभवन्तीत्यन्तेन** ।। ७ ।।

**श्री.टी.**——मुक्तिप्रकारमेव दर्शयति— **गता इति** ।। गता मुक्ता इति वक्ष्यमाणानां सर्वेषां विशेषणम् । प्राणादिपञ्चदशकलाभिमानिदेवताः गताः मुक्ताः सत्यः

तथा मुक्ताः कलाभिमानिदेवताव्यतिरिक्ताः प्रतिदेवतासु स्वप्रतिबिम्बभूतासु प्रजासु प्रतिष्ठाः प्रति प्रति प्रत्येकं प्रत्येकं स्थिता देहधारणादिना स्थितिहेतवः सर्वे देवाः । तथा मुक्तानि कर्माणि तदभिमानिपुष्करो विज्ञानमय आत्मा मुक्तो जीवश्चेत्येते सर्वे परेऽव्यये परमात्मनि एकीभवन्ति तेन संश्लिष्टा भवन्ति तं प्रविशन्तीति यावत् । यथोदके उदकान्तरस्य संश्लेषाभिप्रायेणैवैकीभावव्यवहारस्तथेत्यर्थः । यद्वा प्राग्भगवद्विरुद्धमतयोऽधुना तेनैकमत्यं प्राप्नुवन्ति । प्राग्विरुद्धमतयो ब्राह्मणा राजकुले एकीभवन्तीति यथेत्यर्थः । अथवा प्रागीश्वरव्यक्तिस्थानापेक्षयान्यत्रेतस्ततः स्थितास्तत्र मिलिता भवन्ति । अह्नीतस्ततः स्थिता गावः सायं गोष्ठे एकीभवन्तीति यथेत्यर्थः । कर्मणां कलात्वेऽपि ताभ्यः पृथगुक्तिरत्यन्तनीचताज्ञापनार्थेति ज्ञातव्यम् ।। ७ ।।

**उ.टी.**—एवं सर्वज्ञानिनां कर्मक्षयादिप्रकृतिबन्धध्वंसान्तो मोक्षो ज्ञानेन भवतीति तत्र तत्र प्रागुक्तम् । इदानीं प्रकृतिबन्धध्वंसानन्तरं भाविनीं वासुदेवप्रवेशरूपां तदनन्तरभाविनीं सालोक्यादिरूपामपरामपि मुक्तिं दर्शयति— **गता इति** ।। ततश्चायं मन्त्रार्थः—गताः प्रकृतिबन्धान्मुक्ता इति वक्ष्यमाणानां सर्वेषां विशेषणम् । प्रतिदेवतासु देवताप्रतिबिम्बभूतासु मुक्तप्रजासु । प्रतिष्ठाः प्रतिप्रतिनियामकत्वेन स्थिताः प्राणाद्याः पञ्चदशकलादेवास्तदन्यसर्वदेवाश्च । कर्माणि कर्माभिमानिदेवता च । विज्ञानमय आत्मा जीवश्चेत्येते सर्वे परेऽव्यये परमात्मनि चतुर्व्यूहगतवासुदेवनामके प्रविशन्ति । इतःपरं महाप्रलयसमाप्तिपर्यन्तं विष्णौ स्थित्वा सृष्टौ जातायां परमात्मनो बहिर्निर्गत्य श्वेतद्वीपं गत्वा तत्र श्वेतद्वीपपतिं दृष्ट्वा तदाज्ञयेति वाक्यमध्याहार्यम् । तदुक्तम्—

सर्वेऽपि ते मुक्तगणा अमन्दसान्द्रनिजानन्दमशेषतोऽपि ।
भुञ्जन्त एवासत ईशदेहे लयेऽथ सर्गे बहिरेव यान्ति ।। इति ।।
श्वेतद्वीपं ततो गत्वा दृष्ट्वा विष्णुं च चेतनाः ।
अनुज्ञाताः प्रमोदन्ते निर्दुःखाश्च धरादिषु ।। इति ।।

।। **एकीभवन्तीति** ।। प्रकृताः सर्वेऽपि मुक्ताः प्राग्विभिन्नमतयोऽधुनैकविषयक-

मतिकाः भवन्ति । यथा प्राग्विमतयो ब्राह्मणाः राजकुल एकीभवन्ति तद्वत् । तत्रापि सायुज्यमुक्तियोग्याः भगवच्चक्षुरादिमतिकाः तद्धस्तादिप्रयोज्यक्रियाः भवन्ति । सार्ष्टिसारूप्ययोग्यास्तु सादृश्यं प्राप्नुवन्ति । यथा कीटाः भ्रमरैरेकीभूतास्तद्वत् । सालोक्यसामीप्ययोग्यास्तु क्षीराब्ध्यादिस्थितभगवद्रूपापेक्षया एकस्थानस्थितिकाः भवन्ति ।अतः एकीभवन्तीति युज्यते । यथाह्नि इतस्ततः स्थिताः गावः सायं गोष्ठ एकीभवन्तीत्युक्तिस्तद्वत् । अत्र सालोक्ययोग्यानां किञ्चिद्दूरे स्थानैक्यम् । सामीप्यभाजां तु भगवत्समीप इति विवेक्तव्यमिति ।। ७ ।।

**आ.टी.**——मुक्तिप्रकारमाह— **गता इति** ।। प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः ब्रह्मसरस्वतीउमाहंप्राणबृहस्पतिप्राणापानादयः प्रत्येकं नियामकत्वेन स्थिताः देवाः गताः मुक्ताः । तथा कला प्राणः श्रद्धा मन इन्द्रियं तपो मन्त्रलोकनामभूतपञ्चकमिति पञ्चदशकलाः । प्राणभारतीरुद्रशेषगरुडकामानिरुद्धइन्द्रियेशास्सूर्याद्याः सोमवरुणवह्निस्वाहापर्जन्यउषापुष्करपञ्चभूतेशा विघ्नेशाद्याः । प्राणादिकलादेवाश्च गता मुक्तास्सन्तः कर्माणि कर्माभिमानिदेवाश्च विज्ञानमय आत्मा मनुष्यादिजीवोऽप्येते सर्वे मुक्तास्सन्तः परेऽव्यये नित्ये परमात्मनि एकीभवन्ति । स्थानैक्यादिकं प्राप्नुवन्ति ।। ७ ।।

**गू.टी.**——मुक्तिप्रकारं दर्शयति— **गता इति** ।। प्राणादिपञ्चदशकला-भिमानिनो देवाः अन्ये च देवाः प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः संसारे मुक्तौ च नियामकाः ते सर्वे देवाः तथा कर्माणि कर्माभिमानी च विज्ञानमय आत्मा जीवश्च गताः मुक्तास्सन्तः अव्यये नाशरहिते परे परमात्मनि एकीभवन्ति प्रविशन्तीत्यर्थः अविरुद्धा एकस्थाना वा ।। ७ ।।

**भाष्यम्**

**अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा ।**
**एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः ।।**

कुतोऽभूतस्य भवनं स्वरूपस्यैक्यमेव हि ।
अतो नदीनां जीवानां विरुद्धानां नृणामपि ।।

अब्धिना हरिणा चैव तथैव च नरान्तरैः ।
एकीभावस्तु संश्लेषो विरोधस्य च वर्जनम् ।।

स्वरूपैक्यं कुतस्तेषां नित्यभिन्नस्वरूपिणाम् ।
हरेरपि स्वरूपाणामेकीभावो यदोच्यते ।
संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः ।।

—इति च ।।

गताः मुक्ताः । प्राणादिपञ्चदशकलारूपाः देवताः अन्ये च देवाः सर्वे प्रतिदेवतासु देवताप्रतिबिम्बभूतासु प्रजासु प्रति प्रति स्थिताः कर्माणि विज्ञानमयो जीवश्च परमात्मनि प्रविशन्ति ।

प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात् ।
कलानां देवता अन्या देवतानां नरा अपि ।।

तस्मात्सर्वेषु मुक्तेषु नरेष्वपि नियामकाः ।
तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः ।।

—इति मुक्तविवेके ।।

कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः ।
कलाभ्यः पृथगुक्तं तत् पुष्करः कर्म चोच्यते ।। इति ।।

अन्यथा गता भविष्यन्तीत्यध्याहारो दोषः । नच मूलरूपाणि प्रतिदेवता इत्युच्यन्ते देवानाम् । प्रतिरूपशब्दवद्धि प्रतिदेवताशब्दः । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' 'इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति' 'यथा सोम्येमाः समुद्रायणाः'

**इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनाच्च मुक्ता देवता एवोच्यन्ते । 'स प्राणमसृजत' इत्यादेश्च पुरुषो भगवान् ।**

**व्या.टी.**——एकीभवन्त्येतदैक्यप्रतीतिं निवारयन् व्याचष्टे— **अविरोध इति** ।। कुतः स्वरूपयो-र्नैकीभावोऽर्थ इत्यतः च्विप्रत्ययलब्धामुपपत्तिमाह— **कुत इति** ।। प्रागेकत्वेनाभूतस्य पश्चादेकत्वभवनं कुतः स्यान्न कुतोऽपीत्यर्थः । नन्वनेनोत्तरत्रापि जीवः परमात्मनो भिन्नः पूर्वं ततो भिन्नत्वादित्युक्तं भवति । तस्येश्वररूपेष्वनैकान्त्य-मित्यतस्तत्परिहरति— **स्वरूपस्यैक्यमेव हीति** ।। पूर्वमपि तेषां स्वरूपैक्यमेव हि । अतस्तत्र नोक्तहेतुवृत्तिरिति भावः । तर्ह्येकी-भाववाक्यानां का गतिरित्यतोऽविरोधादिरित्युक्तं दृष्टान्ताभ्यामाह— **अत इति** ।। पूर्वं भिन्नस्य पश्चादैक्यायोगान्नदीनां अब्धिना जीवानां हरिणा चैकीभावस्तु संश्लेषः । परस्परविरुद्धानां नरान्तरैरेकीभावो विरोधस्य वर्जनमित्यर्थः । हेतुमेव विवरितुमाह-— **स्वरूपैक्यमिति** ।। पूर्वं नित्यभिन्नस्वरूपिणाम् । नन्वेकीभावो नाम संश्लेष एव नत्वैक्यमिति न युक्तम्। हरे रूपाणां एकीभावोक्तेरैक्यार्थत्वस्याङ्गी-कर्तव्यत्वादित्यत आह— **हरेरपीति**।। हरे रूपाणामेकीभावो यदोच्यते तत्रापि संश्लेष एवोच्यते । नत्वैक्यमिति कुत इत्यत आह— **सिद्धत्वादिति** ।। पूर्वमेव तेषां स्वरूपैक्यस्य सिद्धत्वात्पश्चात्स्वरूपैक्यस्य नो भवः । अतः संश्लेष एव भगवद्रूपाणां एकीभावोक्तेरर्थ इत्यर्थः ।। गताः प्राप्ता इत्यन्यथाप्रतीतिं निवारयंस्तस्य वाक्यस्य योजनाप्रकारं दर्शयति— **गता इति** ।। कलादेवादिदेवाः संसारिणः प्रतिष्ठाः नियामकाः सन्तः तन्मुक्त्यवसरे मुक्तास्सन्तः मुक्तस्यापि तस्य नियामका-स्तिष्ठन्तीति भावार्थः । वाक्यार्थं प्रमाणेन द्रढयति— **प्रतिबिम्ब इति** ।। कलाः कलादेवताः। मुक्तेष्वपीत्युत्तरत्रापिशब्दसम्बन्धः । ननु कर्मणोऽपि कलात्वात् षोडशेत्यनुक्त्वा पञ्चदशेत्युक्तिः कस्मादित्यत आह— **कलाभ्य इति** ।। गता मुक्ता इति स्वव्याख्या ।। अन्येषां तु कला जडरूपाः जीवेभ्यः मुक्त्यवसरे गता भविष्यन्ति। सर्वदेवाश्च प्रतिदेवतासु स्वमूलरूपेषु गता भविष्यन्तीति । तां दूषयति— **अन्यथा इति** ।। प्रतिदेवतास्वित्यस्य प्रतिबिम्बभूतास्विति स्वव्याख्यानं

कथमित्याह— **प्रतिरूपेति** ।। कलादेवा इति कुतोऽवगतमित्यत आह— **विज्ञानेति** ।। स प्राणमसृजतेत्यादिना भगवदुत्पन्नासु कलासु विज्ञानात्मा स ह देवैश्च सर्वैरिति देवशब्दप्रयोगादित्यर्थः । यथा सोम्येमाः समुद्रायणाः समुद्रं प्राप्येति नदीदृष्टान्तपूर्वकं इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्तीति जडेऽनुपपन्नपुरुषप्राप्तिलक्षणमुक्तिकथनाच्च गताः कला इति मुक्तदेवा एवोच्यन्त इत्यर्थः । पुरुषं प्राप्येत्युक्तेः पुरुषो जीवश्चेत्कथं तं प्राप्तानां मुक्तत्वमित्यत आह— **स इति** ।। स प्राणमसृजतेत्यादेर्वाक्यात्पुरुषस्य प्राणादिस्रष्टृत्वावगमात् पुरुषो भगवान् ।।

**ध.टि.——अविरोध इतीति** ।। अत्राविरोधो मत्यैक्यं एकविषयकमतिमत्त्वमिति यावत् । प्राग्विरुद्धमतयो ब्राह्मणाः राजकुले एकीभवन्तीति वचनादेव । प्राग्विरुद्धमतयोऽधुना तेनैकमत्यं प्राप्नुवन्तीत्यर्थः । अत्र विषयैक्यान्मत्यैक्यम् । मत्यैक्यान्मतिमतामैक्यं व्यपदिश्यते इति द्रष्टव्यम् । अत्रैकपदस्य लक्षणेति ज्ञातव्यम् । सादृश्यं संश्लेषः । अत एवैकीभावस्तु संश्लेषो विरोधस्य च वर्जनमित्युत्तरत्र संश्लेषग्रहणमिति ज्ञेयम् । यथोदके उदकान्तरस्य संश्लेषाभिप्रायेण एकीभावव्यवहारः । एवं परमात्मनि सर्व एकीभवन्ति तेन संश्लिष्टा भवन्ति । तं प्रविशन्तीति यावदित्यर्थः । एकदेशस्थितिः स्थानैक्यम् । अह्नि इतस्ततः स्थिताः गावः सायं गोष्ठे एकीभवन्तीतिवत् । प्रागीश्वरव्यक्तिस्थानापेक्षयाऽन्यत्र इतस्ततः स्थितास्तत्र मिलिता भवन्तीत्यर्थः । अत इत्यस्य व्याख्यानम्— **पूर्वं भिन्नस्य पश्चादैक्यायोगादिति** ।। अत्र भाष्ये विरोधस्य च वर्जनमित्यत्रत्येन चशब्देन स्थानैक्यसंग्रहः । एवशब्दयोः संश्लेषो विरोधस्य च वर्जनमित्येताभ्यां सम्बन्धः । यथेत्यध्याहार्यम् । तथाचैवं योजना— यथा नदीनां अब्धिना समुद्रेणैकीभावो नाम स्थानैक्यसंश्लेषावेव । यथा वा परस्परविरुद्धानां नृणामपि नरान्तरैरेकीभावो नाम विरोधस्य वर्जनमेव न स्वरूपैक्यमिति । तथैव जीवानां हरिणा एकीभावो नाम स्थानैक्यं संश्लेषः । विरोधस्य च वर्जनमेव न स्वरूपैक्यमिति । तदेतदभिप्रेत्याह— **नदीनामित्यादिना** ।। संश्लेष इत्युपलक्षणम् । स्थानैक्यमित्यपि

बोध्यम् ।। **स्वरूपैक्यमितीति** ।। अत्र तेषां नद्यादीनाम् । भिन्नस्वरूपिणामिति कर्मधारयादिनि इति बोध्यम् । **स्वरूपैक्यमितीति** ।। **हरे रूपाणामेकीभावोक्तेरितीति** ।। एतन्नानावताराणां निधानं बीजमव्ययमित्याद्युक्तेरित्यर्थः । निधानं अत्रैकीभवन्तीत्यर्थ इति तात्पर्यव्याख्यातत्वात् । स्वरूपैक्यस्येत्येतत् पूर्वोत्तराभ्यां सम्बद्ध्यत इत्यभिप्रेत्य व्याख्याति— **पूर्वमेवेति** ।। पूर्वमेवेत्यध्याहारः । विश्लेषदशायामपीति तदर्थः । स्वरूपाणां रामकृष्णाद्यवताराणामित्यस्यात्रानुवृत्तिमभिप्रेत्योक्तम् ।। **तेषामिति** ।। स्वरूपैक्यस्य अत्यन्ताभेदस्य भवो भवनम् । एकीभावशब्दार्थो नो नैव भवति । अभूततद्भावार्थकच्विप्रत्ययबाधादित्यर्थः ।। **गता इतीति** ।। गता मुक्ता इति वक्ष्यमाणानां पञ्चदशकला-देवतातदन्यदेवकर्मविज्ञानमयात्मनां सर्वेषां विशेषणम् । कला एव रूपं प्रतिमा यासां तास्तदभिमानिन्य इत्यर्थः । कलाश्च स प्राणमसृजतेत्यादिना षट्प्रश्नोपनिषदुक्ताः कर्मव्यतिरिक्ताः ज्ञातव्याः । तद्देवताश्च विष्णोः प्राणस्ततः श्रद्धेत्यादिना तद्भाष्योक्ताः प्राणवाणीविनायकप्राणसुतमरुत्पावकबुधशनीन्द्ररुद्रचन्द्रवरुणवह्निस्वाहापर्जन्योषाः क्रमाज्ज्ञातव्याः । अन्ये पञ्चदशकलाव्यतिरिक्ताः । प्रतिष्ठा इत्यस्यार्थः प्रति प्रति स्थिता इति । प्रत्येकं प्रत्येकं स्थिताः देहधारणादिना स्थितिहेतव इत्यर्थः । एकीभवन्तीत्यस्यार्थः प्रविशन्तीति । संश्लिष्टा भवन्तीत्यर्थः । मत्यैक्यादेरुपलक्षणमेतदिति भाष्यं व्याख्येयम् । एतद्भाष्याभिप्रायमाह— **कलादेवादिदेवा इति** ।। **प्रतिबिम्ब इतीति** ।। अत्र प्रतिबिम्बः तदधीनः तत्सदृशश्च । अन्याः श्रद्धाद्याः । चेतनप्रकरणे जडानां ग्रहणमयुक्तमित्यतः कलाः कलादेवा वाण्यादय इति व्याख्यातम् । प्रतिबिम्ब इति वचनव्यत्ययेनानुवर्तते । अन्या देवताः । कलानां कर्मातिरिक्तकलानां प्रतिबिम्बाः । देवतानां कला प्रतिबिम्बभूतानां अन्यासां देवतानाम् । नराः प्रतिबिम्बाः । नरा अपीत्यत्र विद्यमानस्यापिशब्दस्योत्तरत्र विद्यमानमुक्तेषु इत्यनेनान्वयमाह— **मुक्तेष्वितीति** ।। अपि सम्बन्ध इति अपेः सम्बन्ध इत्यर्थः । तस्मात्संसारे बिम्बप्रतिबिम्बभावेन नियम्यनियामकभावस्य सद्भावात् । स्वयं मुक्तास्सन्त इति शेषः । मुक्तेषु नरेष्वपि नियामका इति ।

इदं च नियामकत्वं बहिरेव । न स्वरूपदेहान्तरिति ज्ञातव्यम् । मुक्तौ कलारूपतत्त्वानां प्रेर्यभूतानामेवाभावे न तदभिमानिनामप्यभावात् ।। यथोक्तं छान्दोग्यभाष्ये पञ्चमाध्याये—

तुरीयायामवस्थायां प्राणादेव विबोधनम् ।
तथापि संस्मृतिस्तत्र प्राणवश्यतया भवेत् ।। इति ।।

व्याख्यातं चैतत्पदार्थकौमुद्यां वेदेशतीर्थश्रीमच्चरणैः । स्थलान्तरे प्राणस्येतरनिरपेक्षकर्तृत्वं समर्थयते— **तुरीयायामिति** ।। मोक्षावस्थायां इन्द्रियाणामेवाभावेन तदा अन्यव्यापाराभावादिति भावः । ननु मोक्षावस्थायां प्राणादेव स्वरूपेन्द्रियनियामकात् बोधश्चेत्तर्हि संसारे अनुभूतस्य तदानीं स्मृतिर्न स्यात् । पूर्वं मनआदिप्रवर्तकानां तदा स्वाभिमन्यमानाभावेनाप्रवर्तकत्वात् । नच तदानीं संसारे स्मृतिरेव नास्तीति वाच्यम् । "आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुरि"ति षष्ठाध्यायोदाहृतप्रमाणविरोधापत्तेरित्यत आह— **तथापीति** ।। तत्र तुरीयायामवस्थायामितरदेवताव्यापाराभावेऽपि प्राणस्य भक्त्या स्ववश्यतया तत्प्रसादात्संसारस्मृतिर्घटत इत्यर्थः । मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरःसराणामित्यनुव्याख्यानस्यापि ब्रह्मणोऽन्तःप्रेरकत्वं अन्येषां तु बहिरेवेत्यभिप्रायो द्रष्टव्य इति । एते चाखिलाः परमात्मनि तिष्ठन्तीति भाष्यार्थः ।। **कलाभ्य इतीति** ।। अत्र कलाभ्यः कलादेवताभ्यः अन्यदेवेभ्यः कलादेवताभिन्नदेवेभ्यः । कर्म प्रत्यवरम् । अतिनीचम् । तत्तस्मात् । किन्तत्कर्मेत्यत आह— **पुष्कर इति** ।। अभिमन्यमानशब्दस्य अभिमानिन्येव मुख्यत्वस्य अभिमान्यधिकरणन्यायसिद्धत्वादित्यर्थः । नच मूलरूपाणीति भाष्ये देवानां मूलरूपाणीति सम्बन्धो द्रष्टव्यः ।। **प्रतिरूपेतीति** ।। अत्र यथा "रूपं रूपं प्रतिरूपो बभूवे"त्यादौ प्रतिरूपशब्दः प्रतिबिम्बवाची । तथा प्रतिदेवताशब्दोऽपि प्रतिबिम्बवाचीत्यर्थः ।। **विज्ञानेतीति** ।। अत्र यत्रेत्यस्य तदेतदक्षरं वेदयते यस्तु सोम्येत्युत्तरेणान्वयः । यथा सोम्येति दृष्टान्तवाक्यम् । इमाः षोडशकला इति दार्ष्टान्तिकवाक्यात्पूर्वं द्रष्टव्यम् । यथा सोम्येमा इति वाक्यैकदेशानुवादः । यथेमाः नद्यः स्यन्दमानाः

समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्तीत्याद्युक्त्वा एवमेवास्य परिद्रष्टुरिमाः षोडशकला इति वाक्यमुक्तम् । तत्र सोम्येत्यस्यानुवृत्तिमभिप्रेत्य यथा सोम्येति भाष्ये पठितम् । शाखान्तरपाठो वा इति द्रष्टव्यम् । एतद्व्याचष्टे— **स प्राणमसृजतेत्यादिनेति** ।। उत्पन्नासु उत्पन्नत्वेन कथितासु । विज्ञानात्मा सह देवैश्च सर्वैरित्यस्मिन् षट्प्रश्नीय-मन्त्रे । विज्ञानात्मा विज्ञानस्वरूपो जीवः प्राणाः प्राणाश्वाः । पञ्चदशकलाः चक्षुरादयो तद्विषयाश्च तद्रूपादयो भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्देवैः प्राणादिकलाद्यभिमानिभिः सह यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति तदेतदक्षरं वेदयते यस्तु सोम्येत्येवं देवशब्दप्रयोगादित्यर्थः ।। **मुक्तिकथनाच्चेति** ।। तथाच षट्प्रश्नीयसमाख्याबलाद्गताः कला इत्यस्मिन्वाक्येऽपि कलाशब्देन मुक्ता देवा एवोच्यन्त इत्यर्थः । पुरुषस्य भगवत्त्वे स प्राणमसृजतेत्यादिवाक्यस्याहेतुत्वेन पञ्चम्यनुपपत्तिमाशंक्याह— **वाक्यात्पुरुषस्य स्रष्टृत्वावगमादिति** ।। भरद्वाजपुत्रेण सुकेशनामकेन तन्त्वा पृच्छामि क्वासौ पुरुष इत्येवं पिप्पलादं प्रति पृष्टे तस्मै स होवाच । इहैवान्तःशरीरे सोम्ये स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्युक्त्वा स पुरुषः इक्षाञ्चक्रे । स प्राणमसृजतेत्येवं प्राणः स्रष्टृतयोक्त एव पुरुषः पुरुषं प्राप्येति वाक्ये पुरुषशब्देन उच्यते । अतः पुरुषशब्दवाच्यो भगवानेवेति तत्प्राप्तानां प्राणादिकलादेवानां मुक्तत्वं युक्तमिति भावः ।।

**वामन.टी.—**गताः कला इत्यादिना मुक्तजीवानां परमात्मना स्वरूपैक्योक्ति-माशंक्य परिहरति अविरोधश्चेत्यादिना महावराहवचनेन । इह जीवेशयो-र्विधीयमान एकीभावस्त्वविरोधादिरूपेण त्रिधा प्रोक्तः । नहि तत्स्वरूपयोरेकी-भावो युक्तः । अनुभवादिविरोधात् । इदानीं भेदानुभवेऽपि मुक्तावभेदः स्यादिति चेत् सतोऽसत्त्वमपि तद्वत्स्यात् मानाभावसाम्यात् । अथ पूर्वमपि परेणैकीभूत एव जीवो मुक्तावप्येकीभवतीति ब्रूम इति चेत् । मैवम् । कुतो भूतस्य भवनं मृतस्य मरणं वा सम्भाव्ये तत्स्वरूपस्य स्वेनैक्यमित्येवोच्यत इति चेत् भवतु नाम किन्न छिन्नं स्वरूपस्यैक्यमेव हीति वचनान्नहि देवादि-जीवानां परमात्मस्वरूपत्वे किञ्चिन्मानम् । नचेयमेव श्रुतिरत्र प्रमाणम् । परे

अव्यय इति व्यधिकरणत्वेन भेदोक्तेः । अन्यथा देवादयः परा भवन्तीति सामानाधिकरण्येन श्रुत्युक्तिः स्यात् । अतो नदीनामित्यादिना श्रुत्यभिप्रेतार्थं दृष्टान्तप्रकटनपूर्वकं निगमयति । अतः स्वरूपैक्यासिद्धेः नदीनामब्धीना जीवानां हरिणा विरुद्धानां नृणां नरान्तरैश्चैकीभावो नाम संश्लोषो विरोधवर्जनं चेत्येतदेव स्वरूपैक्यस्य भूतस्यापि भवनं भगवद्रूपेषु दृष्टं हीत्यत आह— **हरेरपीति** ।। अनुभूतस्यैव भवनमित्यङ्गीकारे खपुष्पाद्युत्पत्तिः तेन निवार्यत इति चेत् कारणराहित्यादित्यविरोधः । कारणादेव हि कार्योत्पत्तिः दृष्टा । नच जीवब्रह्मैक्योत्पत्तौ करणं निरूपणीयं द्वैतापत्तेः । अथ गता इत्यादि भाष्येण श्रुतेरन्वयं दर्शयति । ये प्राणादिपञ्चदशकलारूपदेवा स्वं स्वं पदमनुभूय परं विष्णुं गताः प्राप्ताः मुक्ता इति भावः । ये पुनस्तदन्ये च प्रतिदेवतासु प्रतिष्ठा देवतास्वित्यन्वयः । अयं भावः । देवतानां प्रतिबिम्बभूतासु प्रजास्विन्द्रियादिनियामकत्वेन प्रति प्रतिस्थिताः सूर्यादिदेवता इति त उभयेऽपि कर्मदेवाश्च विज्ञानमयो जीवश्च तैः सर्वेऽपि परमात्मन्यव्यय एकीभवन्ति प्रविशन्तीत्यर्थः । प्रतिबिम्बो हरेरित्यादिना मुक्तिविवेकवाक्येन तेषां विशेषकं दर्शयति । कर्मकला प्राणादिभ्यः किमिति पृथगुक्तेत्यत आह— **कलादिभ्यश्चेति** ।। कलादिभ्यः प्रत्येकमप्यवरं कर्म पुष्कराख्यो वरुणपुत्रः तद्देवता । अत्र पुनः परकीययोजनां दूषयति— **अन्यथेति** ।। कलानां निवृत्तिर्भवेदित्यर्थाङ्गीकारे गता भवन्ति इति वृथाध्याहारो नाम दोषः स्यात् । अध्याहारकारणादृष्टेः । तासु प्रतिष्ठिता देवताश्च स्वस्वमूलरूपे गता भवन्तीत्यत्रान्योऽपि दोषः स्यादित्याह-— **नचेति** ।। नच देवतानां मूलरूपाणि प्रतिदेवता इत्युच्यन्ते । अर्थान्तरत्वापत्तेः । प्रतिरूपशब्दवत् प्रतिबिम्बवाचको हि देवतानां प्रतिदेवताशब्दः । मूलरूपेषु प्रत्येकमिति वक्तुं प्रतिशब्द इति चेत् एकस्यापि देवस्यापि मूलरूपाणि बहूनि सन्तीत्यनिष्टापत्तिरेव स्यात् । नहि स्वस्वमूलरूपेष्वित्युक्तं भवतीत्यर्थः । अतः प्रतिदेवतास्वित्युक्तं देवताप्रतिबिम्बभूताः स्युरित्येवार्थो निश्चीयते । एवमत्र कलाशब्देन मुक्तियोग्या देवा एवोच्यन्ते । न जडा इति

सिद्धम् । विज्ञानात्मेत्यादि श्रुत्यन्तरैरप्येतदेव द्रढयति । कलानां पञ्चदशत्वं षोडशत्वं च सङ्ख्यानभेदाद्युज्यते षोडशकलाः पुरुषं प्राप्य इति भगवत्प्राप्ति-कथनाच्च मुच्यमानदेवता एवैता इति गम्यते । नन्विमाः कलाः पुरुषं संसारि-जीवं प्राप्य तच्छरीरमाश्रित्य स्थित्वा तन्नाशे पुनरवगच्छन्ति देवानां तु स्वमूल-रूपं गत्वा परमात्मनैकीभावोपपत्तेरित्यत आह— **स प्राणमित्यादि** ।। स ईक्षाञ्चक्र इत्याद्युक्ता स प्राणमसृजतेत्यादि वचनाच्च सर्वस्रष्टुः परस्यैव प्रकरणत्वात् पुरुषो भगवानेव ।।

**स.टी.**—यदभ्यधाः स्वरूपैक्यं यदि सिद्धं स्यात् । तदाभूतस्य भवनायोगा-च्चिप्रत्ययानुपपत्तिरिति । तदसत् । मत्स्यादय एकीभवन्तीति व्यवहारोपलम्भात् । नैष दोषः । तत्रापि पूर्वमैक्यस्यासिद्धत्वेन न भवनासम्भवेन संश्लेषार्थत्वस्यैव वक्तव्यत्वेन व्यभिचारचोदनासम्भवात् । तदिदमभाषत— **अविरोधश्च सादृश्यमि-त्यादिना** ।। गताः मुक्ताः इत्येतद्वक्ष्यमाणानां पञ्चदशकलादेवता-तदन्यदेवकर्मविज्ञानमयानां सर्वेषां विशेषणम् । कला एव रूपं प्रतिमा यासां तास्तदभिमानिन्य इत्यर्थः । कलाश्च स प्राणमसृजत प्राणाच्छ्रद्धा खं वायुर्ज्योतिरापः पृथिवीमिन्द्रियमनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम चेति षट्प्रश्नोपनिषदुक्ताः कर्मव्यतिरिक्ताः ज्ञातव्याः । तद्देवताश्च—

विष्णोः प्राणस्ततः श्रद्धा तस्य रुद्रो मनोऽभिधः ।
तस्मादिन्द्रस्त्विन्द्रियात्मा मनसस्त्वेव देवता ।
ततश्च वरुणः श्रेष्ठः तस्मादग्निस्ततोऽवरः ।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।
ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।
उदकात्मको बुधस्तस्या उषा नामात्मिका ततः ।
ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।।

इति भाष्ये ज्ञातव्याः । अयं भावः—कलादिदेवाः संसारिणः नियामकाः

सन्तस्तन्मुक्त्यवसरे मुक्ताः तस्य नियामकास्तिष्ठन्ति । अत एवाभाषिष्ट—

प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात् ।
कलानां देवता अन्याः देवतानन्तरा अपि ।।
तस्मात्सर्वेषु मुक्तेषु नरेष्वपि नियामकाः ।
तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः ।।

इति मुक्तविवेक इति । ननु कर्मणोऽपि कलात्वात्पृथगुक्तिः कुतः । प्रत्यवरत्व-ज्ञापनार्थं यदि गता इत्यस्य निवृत्ता इत्यर्थः स्यात् तर्हि भविष्यतीत्यध्याहारः स्यात् । यदत्रोक्तं देवाश्च सर्वे प्रतिदेवतासु स्वमूलेषु गता इति तदसत् । प्रति-देवताशब्दस्य प्रतिरूपशब्दवत् प्रतिबिम्बार्थत्वात् । किञ्च स प्राणमसृजतेत्यादिना भगवत उत्पन्नासु कलासु विज्ञानात्मा सह देवैश्च सर्वैरिति देवताशब्दप्रयोगात्कला मुक्ता एव देवता उच्यन्ते । अपिच सोम्येमाः समुद्रायणाः समुद्रं प्राप्येति नदी-दृष्टान्तकथनपूर्वकं इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति । जडे अनुपपन्नपुरुषप्राप्तिलक्षणमुक्तिकथनाच्च । गता कला इति मुक्ता देवा एव उच्यन्ते । नच पुरुषं प्राप्येत्युक्ते पुरुषो जीवश्चेत्कथं तत्प्राणं उक्तस्वरूपं अभिदध्याः । स प्राणमसृजतेत्यादेः श्रुत्यन्तराच्च पुरुषशब्दस्य भगवत्परत्वात् ।

**व.टी.**——सर्वेषामेकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय मन्त्राभिप्रायं स्मृत्यैव दर्शयति— **अविरोध इति** ।। स्वरूपयोरेकीभावः कुतो नेत्यत आह— **कुत इति** ।। पूर्वं संसारावस्थायामभूतस्य स्वरूपैक्यस्य पश्चान्मोक्षावस्थायां भवनं कुतः स्यात् । न कुतश्चिदपि स्यादित्यर्थः । ननु पूर्वं भिन्नानां पश्चादभेदो न भविष्यतीति न युज्यते । कृष्णादिरूपाणां पूर्वं भिन्नानामपि पश्चान्मूलरूपेणा-भेददर्शनादित्यतस्तेषु पूर्वमप्यभेद एवेत्याह— **स्वरूपस्येति** ।। नन्वेवं सति तत्र तत्र जीवे ऐक्यादिव्यपदेशस्य कोऽभिप्राय इत्यत आह— **अत इति** ।। ननु किमर्थमेवम् । स्वरूपैक्यमेव किं न स्यादित्यत आह— **स्वरूपैक्य-मिति** ।। ननु सर्वत्राप्येकीभाववचनस्य संश्लेष एवार्थ इति नोपपद्यते । "एकीभूय पुनः शेते निर्दोषो हरिरादिकृदि"त्यादौ हरिरूपाणामेकीभाववचनस्य

स्वरूपैक्यार्थत्वादित्यत आह— **हरेरपीति** ।। यत्र हरिरूपाणामेकीभावो विधीयते तत्राप्येकीभावशब्दस्य संश्लेष एवार्थो न स्वरूपैक्यं हरिरूपाणां स्वरूपैक्यस्य पूर्वमपि सिद्धत्वेन कारणेन पश्चादैक्यं प्राप्त इत्यैक्यव्यपदेशस्यासम्भवात् । संश्लेषस्य तु पूर्वमसत्त्वेन पश्चात्तदुत्पत्तिसम्भवात् । संश्लेषं प्राप्त इति निर्देशे विरोधाभावादित्यर्थः । एवमेकीभावशब्दितस्य विवक्षितार्थमभिधायेदानीं समग्रवाक्यं व्याचष्टे— **गता इति** ।। प्रजानां देवताप्रतिबिम्बत्वे तासु देवानां प्रतिष्ठितत्वे च प्रमाणमाह— **प्रतिबिम्ब इति** ।। ननु कर्मणोऽपि पञ्चदशकलास्वन्तर्भावात् किमर्थं कर्माणि विज्ञानमयश्चेत्यत्र पृथक्कर्मोच्यत इत्यत आह— **कलाभ्य इति** ।। मायावादी तु गताः कला इत्येतद्वाक्यमेवं व्याचष्टे । पुरुषाः श्रिताः पञ्चदश कलागताः मुक्तिकाले निवृत्ता भविष्यन्तीति पुरुषाश्रिता सर्वे देवाश्च प्रतिदेवतासु स्वस्वमूलरूपेषु प्रविष्टा भविष्यन्ति मुक्त्यवस्थायां कर्माणि विज्ञानमयो जीवश्च परे ब्रह्मण्यैक्यं प्राप्नुवन्तीति । तदेतन्निराचष्टे— **अन्यथेत्यादिना** ।। देवानां मूलरूपाणि प्रतिदेवता इति पदेनोच्यते इत्युक्तम् । किं तर्हीत्यत आह— **प्रतिरूपवदिति** ।। ननु भवत्पक्षेऽपि कलाशब्दस्य देवतार्थत्वं कुत इत्यत आह— **विज्ञानात्मेत्यादिना** ।। अत्र सः प्राणमसृजतेत्यादिना प्रोक्तासु कलासु देवताशब्दप्रयोगात् कलाशब्दो देवतार्थ इत्यभिप्रायः । नन्वत्र पुरुषशब्दस्य भगवदर्थत्वे कलारूपदेवानां मुक्तौ भगवत्प्राप्तिरस्तीत्यङ्गीकर्तुं शक्यते । तदेव कुत इत्यत आह— **स प्राणमिति** ।। प्राणाद्यधिकदेवतास्रष्टृत्वादत्र पुरुषो हरिरेवेत्यर्थः ।।

**श्री.टी.**——अत्र केचित् कुसूले धान्यानामिव मूलरूपभगवच्छरीरतद्रूपाणां समुदितानामेवावस्थानं संश्लेष इत्याहुस्तदसाम्प्रदायिकमिति मन्तव्यम् । गताः कला इति वाक्यं परेणेत्थं व्याख्यातम् । तथाहि । मुक्तिकाले विदुषो देहांशभूताः प्राणाद्याः पञ्चदशकलाः जडभूताः प्रतिष्ठाः स्वकारणानि प्रतिगता भविष्यन्ति । देवाश्च सर्वे प्रतिदेवतासु स्वमूलरूपेषु गता भविष्यन्ति । कर्माणि विदुषा कृतानि निवृत्तकर्माणि विज्ञानमयश्चायमात्मा विद्वान् जीवः परेऽव्यये परमात्मनि

सर्व एकीभवन्तीति चिन्तनीयमिति । तामिमामपव्याख्यां प्रत्याख्यातुं आदौ तावत्स्वयं व्याचष्टे— **गता इति** ।। गता मुक्ता इति वक्ष्यमाणानां पञ्चदशकलादेवता तदन्यदेव । कर्म । विज्ञानमयात्मनां सर्वेषां विशेषणम् । कला एव रूपं प्रतिमा यासां तास्तदभिमानिन्य इत्यर्थः । कलाश्च स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकाः लोकेषु नाम चेति षट्प्रश्नोपनिषदुक्ताः कर्मव्यतिरिक्ता ज्ञातव्याः । तद्देवताश्च—

विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।
तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।।
ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।।
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेः सुतस्ततः ।
ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।।
उदकात्मको बुधस्तस्या उषानामात्मिका ततः ।
ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।।

इति तद्भाष्योक्ता ज्ञातव्याः । अन्ये पञ्चदशकलाव्यतिरिक्ताः । प्रतिष्ठा इत्यस्यार्थः **प्रति प्रति स्थिता इति** । प्रत्येकं प्रत्येकं स्थिता देहधारणादिना स्थितिहेतव इत्यर्थः ।। एकीभवन्तीत्येतत्प्रविशन्तीति व्याख्यातम् । तदयुक्तम् । मुक्तावेते कलादेवताद्याः परमात्मनि तिष्ठन्तीत्यत्र प्रमाणाभावादित्यत आह— **प्रतिबिम्ब इति** ।। तदधीनस्तत्सदृशेत्यर्थः । अन्याः श्रद्धाद्याः । कलाः कलादेवताः । प्रतिबिम्बा इति वचनं व्यत्ययेनानुवर्तते । अन्या देवताः कलानां कर्मातिरिक्तं देवानां प्रतिबिम्बाः । देवतानां कलाप्रतिबिम्बभूतानामन्यासां देवतानाम् । तस्मात्। संसारे बिम्बप्रतिबिम्बभावेन नियम्यनियामकभावस्य सद्भावात् । स्वयं मुक्ताः सन्त इति शेषः । मुक्तेषु नरेष्वपि नियामका इति । इदं च नियामकत्वं बहिरेव न स्वरूपदेहान्तरिति द्रष्टव्यम् । मुक्तौ कलारूपतत्त्वानां प्रेर्यभूतानामेव भावेन तदभिमानिनामप्यभावात् । यथोक्तं छान्दोग्यभाष्ये पञ्चमाध्याये

तुरीयायामवस्थायां प्राणादेव विबोधनम् ।
तथापि संस्मृतिस्तत्र प्राणवश्यतया भवेत् ।। इति ।।

व्याख्यातं चैतत्पदार्थकौमुद्यां वेदेशतीर्थश्रीमच्चरणैः । स्थलान्तरे प्राणस्येतर-निरपेक्षकर्तृत्वं समर्थयते— **तुरीयायामिति** ।। मोक्षावस्थायामिन्द्रियाणामेवाभावेन तदान्यव्यापाराभावादिति भावः । ननु मोक्षावस्थायां प्राणादेव स्वरूपेन्द्रिय-नियामकाद्बोधश्चेत्तर्हि संसारेऽनुभूतस्य तदानीं स्मृतिर्न स्यात् । पूर्वं मनआदि-प्रवर्तकानां तदास्माभिर्मन्यमानाभावेनाप्रवर्तकत्वात् । नच तदानीं संसारस्मृतिरेव नास्तीति वाच्यम् । आजन्ममरणं स्मृत्वा मुक्ता हर्षमेव प्राप्नुयुरिति षष्ठाध्यायोदाहृत-प्रमाणविरोधापत्तेरित्यत आह— **तथापीति** ।। तत्र तुरीयायामवस्थायामितरदेवता-व्यापाराभावेऽपि प्राणस्य भक्त्या स्ववश्यतया तत्प्रसादात्संसारस्मृतिर्घटत इत्यर्थ इति मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरःसराणामित्यनुव्याख्यानस्यापि ब्रह्मणोऽन्तःप्रेरकत्वमन्येषां तु बहिरेवेत्यभिप्रायो द्रष्टव्यः । एते चाखिलाः परमात्मनि तिष्ठन्तीत्यर्थः ।। ननु कर्मणोऽपि कलात्वाद्गताः कला षोडशेत्यनुक्त्वा पञ्चदशेत्यभिधाय कर्माणीति कर्मरूपकलायाः पार्थक्योक्तौ किं निमित्तमित्याशंक्य प्रमाणेनैव तद्दर्शयति— **कलाभ्यश्चेति** ।। कलादेवताभ्यः । अन्यदेवेभ्यः कलादेवताभिन्नदेवेभ्यः । प्रत्यवरमतिनीचम् । तत्तस्मात् । किं तत्कर्मेत्यत आह— **पुष्कर इति** ।। अभिमन्यमानशब्दस्याभिमानिन्येव मुख्यत्वस्याभिमान्य-धिकरणन्यायसिद्धत्वादिति भावः ।। परव्याख्याने बाधकमाह— **अन्यथेति** ।। प्रतिदेवतासु स्वमूलरूपेष्विति व्याख्यातं तद्दूषयति— **नचेति** ।। देवानां मूलरूपाणीति सम्बन्धः । ननु भवद्भिरपि प्रतिदेवतासु प्रतिबिम्बभूतास्विति कथं व्याख्यातम् । प्रतिदेवताशब्दस्य प्रतिबिम्बवाचित्वाभावादित्यतस्तदुपपादयति-— **प्रतिरूपशब्दवदिति** ।। यथा "रूपं रूपं प्रतिरूपो बभूव"त्यादौ प्रतिरूपशब्दः प्रतिबिम्बवाची, तथा प्रतिदेवताशब्दोऽपि प्रतिबिम्बवाचीत्यर्थः । नन्वेताः प्राणाद्याः कला जडा एवात्रोच्यन्त इति किन्न स्यात् । देवतात्वज्ञापकाभावान्मुक्तत्वज्ञापका-भावाच्चेत्यतः षट्प्रश्ने समाख्यामाह— **विज्ञानात्मेत्यादिना** ।। यत्रेत्यस्य तदेतदक्षरं

वेदयते यस्तु सोम्येत्युत्तरेणान्वयः । यथा सोम्येति दृष्टान्तवाक्यं इमा इति दार्ष्टान्तिक-वाक्यात्पूर्वं द्रष्टव्यम् । यथा सोम्येमा इति वाक्यैकदेशानुवादः । यथेमाः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्तीत्याद्युक्त्वा एवमेवास्य परिद्रष्टुरिमाः षोडश कला इति हि वाक्यम् । तत्र सोम्येत्यस्यानुवृत्तिमभिप्रेत्य सोम्येति भाष्ये पठितम्। शाखान्तरपाठो वा । तथाचायमर्थः । विज्ञानात्मा विज्ञानस्वरूपो जीवः प्राणाः प्राणाद्याः कलाश्चक्षुरादयस्तद्विषयाश्च रूपादयो भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैः देवैः प्राणादिकलाद्यभिमानिभिः सह यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति तदेतदक्षरं वेद ते यस्तु सोम्येत्येवं स प्राणमसृजतेत्यादिना भगवत उत्पन्नत्वेन कथितासु कलासु विज्ञानात्मा सह देवैश्च सर्वैरिति देवताशब्दप्रयोगात् तथा यथा सोम्येमाः समुद्रायणाः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति एवमेवास्य परिद्रष्टुर्जीवस्य मोक्षकाले इमाः मुक्ताः षोडशकलाः पुरुषाश्रयाः पुरुषं प्राप्यास्तमदर्शनं गच्छन्तीति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिलक्षणमुक्तिकथनाज्जड-विवक्षायामस्यानुपपत्तेर्गताः कला इति वाक्ये कलाशब्देन मुक्ता देवा एवोच्यन्ते न जडा इति । नन्वत्र पुरुषं प्राप्यास्तं गच्छन्तीति वाक्ये पुरुषं जीवं प्राप्येति जीवप्राप्त्युक्तेर्जीवं प्राप्तानां प्राणादिकलादेवानां कथं मुक्तत्वं युक्तम् । नहि जीवप्राप्तिर्मुक्तिरित्यत आह— **स प्राणमिति** ।। भरद्वाजपुत्रेण सुकेशनामकेन तं त्वा पृच्छामि क्वासौ पुरुष इति पिप्पलादं प्रति पृष्टस्तस्मै स होवाच इहैवान्तः शरीरे सोम्य पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्युक्त्वा स पुरुष ईक्षाञ्चक्रे स प्राणमसृजतेत्येवं प्राणादिस्रष्टृतयोक्त एव पुरुषः पुरुषं प्राप्येति वाक्ये पुरुषशब्देनोच्यतेऽतः पुरुषशब्दवाच्यो भगवानेवेति तं प्राप्तानां प्राणादिकलादेवतानां मुक्तत्वं युक्तमित्यर्थः ।।

**उ.टी.**—अत्र मन्त्रे अव्यये प्रविशन्तीत्यनेन महाप्रलये नरोत्तमादिदेवतान्तानां विष्णौ प्रवेशमुक्त्वा महाप्रलयसमाप्त्यनन्तरं तेषामेव सालोक्यसार्ष्टिसारूप्यसामीप्यै-कत्वमित्युतेति भगवतोक्तसालोक्यादिपञ्चविधमुक्तिं दर्शयितुं एकीभवन्तीत्युक्तम् । तेन स्वरूपैक्यं नोच्यते । किन्तु पारिभाषिक एवैकीभाव इति प्रमाणेनैवाह—

- **अविरोध इति** ।। अविरुद्धमतिकत्वमित्यर्थः । एकविषयकमतिकत्वमिति परमार्थः । तत्र ब्राह्मणा राजकुल एकीभवन्तीत्यादौ यथाश्रुतमेव । मुक्तानां तु द्वेधा । ब्रह्मत्यनुकूलमतिकत्वं ब्रह्मचक्षुरादिप्रयोज्य-मतिकत्वं चेति । तत्राद्यं सर्वमुक्तसाधारणम् । द्वितीयं तु सायुज्ययोग्यमुक्तमात्रनिष्ठम् । अत एवोक्तम्,

आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ।। इति ।।

अनेन सायुज्यं नाम तच्चक्षुरादिप्रयोज्यमतिकत्वं तद्धस्तादिप्रयोज्यक्रियावत्त्वं च । तदेकीभवन्तीत्यनेनोच्यत इत्युक्तं भवति । अस्मिन्पक्षे एकशब्दस्य मतौ लक्षणा । तद्विषयकत्वं च शक्यसम्बन्धः । ततो मतिमत्सु लक्षणेति लक्षित-लक्षणैषा । शक्यपरम्परासम्बन्धो लक्षितलक्षणेति तल्लक्षणलाभात् । ततश्चैकी-भवन्तीत्यस्यैकविषयकमतिका भवन्तीत्यर्थो लक्ष्यत इति बोध्यम् । चतथाशब्दौ परस्परसमुच्चयार्थौ ।। **सादृश्यमिति** ।। इदं च कीटो भ्रमरेणैकीभूत इत्यादौ यथाश्रुतमेव । मुक्तेषु समानैश्वर्यरूपा सार्ष्टिः । चतुर्भुजत्वादिरूपं सारूप्यं चेति बोध्यम् । इदं च सार्ष्टिसारूप्यं योग्यानभिप्रेत्योक्तम् । अत्र पक्षे सादृश्यमेकपद-वाच्यमेव ।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले परे ।
साधारणे समानेऽल्पे सङ्ख्यायां च प्रयुज्यते ।।

इत्येकशब्दस्य नानार्थकत्वोक्तेरिति ध्येयम् ।। **एकदेशस्थितिरिति** ।। एक-स्थानस्थितिकत्वमित्यर्थः । इदं च गावः सायं गोष्ठे एकीभवन्तीत्यादौ यथाश्रुतमेव । मुक्तेषु तु भगवान्व्यक्तरूपेण भूम्यादिश्वेतदीपान्ते यत्र तिष्ठति तल्लोकस्थितिकत्वम् । अत्रैव च स्थितिस्तेषामित्याद्युक्तेः । प्रमोदन्ते निर्दुःखाश्च धरादिष्वित्युक्तेः । सामीप्ययोग्यानां तु भगवत्समीपे तल्लोकस्थितिकत्वम् । तत्रापि क्रमयोगेन ज्ञाना-धिक्यात्समीपगा इत्युक्तेरिति । अत्र पक्षे एकशब्दस्य तत्स्थे लक्षणा । देशश्च योग्यतया लभ्यते । ततश्च एकीभवन्तीत्यस्य एकदेशस्थिताः भवन्तीत्यर्थ इति वक्तव्यम् । अनेन सालोक्यादिपञ्चविधमुक्तिरेकीभवन्तीत्यस्यार्थ इति लभ्यते ।

तथाशब्दानन्तरमितिशब्दोऽध्याहार्यः । एकीभवन्तीत्युक्त्या स्वरूपैक्यमेवैकीभावः किन्न स्यादित्यत आह— **नैकीभाव इति** ।। स्वरूपयोरैक्यमेकीभावो न भवतीत्यर्थः । कुत इत्यत आह— **कुतोऽभूतस्येति** ।। किंशब्द आक्षेपे । तेन नास्तीति लभ्यते । एवशब्दस्याध्याहृतेन सिद्धमित्यनेनान्वयः । हिशब्दो हेतौ । यस्मात्स्वरूपैक्यं सिद्धमेव नतु साध्यं अतो भूतस्य भवनं नास्तीत्यर्थः। अयमाशयः—एकीभवन्तीत्यत्र च्विप्रत्ययो अस्ति । स प्रकृत्यर्थस्याभूत-तद्भावमाचष्टे । अभूततद्भावे कृभ्वस्तियोगे सम्पद्य कर्तरि च्विरिति पाणिनिस्मृतेः । नचात्रैकशब्दवाच्यं स्वरूपैक्यं प्रागभूतं पश्चाद्भवति । जीवब्रह्मैक्यस्या-नादिब्रह्मस्वरूपत्वेन प्रागपि विद्यमानत्वात् । तथाच यस्मात्स्वरूपैक्यं प्राक् सिद्धमेव । नत्वभूतम् । तस्मात्प्रकृते भूतस्य भवनं नास्ति । अतश्च्विप्रत्ययार्थ-बाधात्स्वरूपयोरैक्यमेकीभावो न भवति । यदर्थमेकीभावो विविच्योक्तस्तदिदानी-माह— **अत इति** ।। जीवानां हरिणा सह संश्लेष एकीभावो नतु स्वरूपैक्यम् । यथा नदीनां अब्धिना सह संश्लेष एव एकस्थानस्थितत्वमेवैकीभावो नतु स्वरूपैक्यम् । नित्यभिन्नस्वरूपात् । एवं प्राग्विमतयो ब्राह्मणा राजकुल एकीभवन्तीत्यत्र यथा विरुद्धानां प्राग्विरुद्धमतिकानां नृणां नरान्तरैस्सह विरोधस्य वर्जनं एकविषयमतिकत्वमिति यावत् एकीभावो नतु स्वरूपैक्यम् । अन्योन्य-भिन्नत्वेन प्रमितत्वात् । तथा जीवानां हरिणा सह मत्यैक्यमेकीभावो नतु स्वरूपैक्यमिति योज्यम् । अपिचशब्दाः परस्परसमुच्चयार्थाः। आद्य एवशब्दः संश्लेष इत्यनेन सम्बद्ध्यते । द्वितीयस्तु वर्जनमित्यनेन । तथाशब्द उपमायाम् । तुशब्दो विशेषार्थः । स्थानविशेषे संश्लेष इत्यन्वयः । स्वरूपैक्यं कुत इत्यत्र हेतुगर्भविशेषणं नित्यभिन्नस्वरूपिणमिति । तर्ह्येकीभावोक्तिरयुक्ता स्यादित्याशंक्य तत्राप्येकीभावः पारिभाषिक एव । अन्यथा च्विप्रत्ययार्थबाधप्रसङ्गादिति भावेनाह-— **हरेरपीति** ।। पुरुषं प्राप्येत्युक्तः पुरुषो जीवश्चेत्कथं तं प्राप्तानां तु मुक्तत्वमित्यत आह— **स इति** ।। प्राणमसृजतेत्युपक्रमवाक्योक्तस्तावद्भगवानेव । मुख्यप्राणादि-स्रष्टृत्वलिङ्गात् । अतः उपक्रमानुसारेण पुरुषं प्राप्येत्युपसंहारोक्तः पुरुषो भगवानेवे-

त्यङ्गीकार्यम् । अन्यथोपक्रमोपसंहारयोर्विरोधप्रसङ्गात् । यद्यप्युक्रमादुपसंहारः प्रबलः व्याख्यानरूपत्वात्परत्वाच्च । तथापि यदोपक्रमो निरवकाशः तदोपसंहारादपि प्रबल एवेत्यन्यत्रोक्तम् । अतः उपक्रमानुसारेणोपसंहारस्यार्थन्तरकथनं युक्तमेवेति भावः ।। "परेऽव्यये सर्व एकीभवन्ती"ति वाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे- — **अविरोध इति** ।। मत्यैक्यमित्यर्थः । एकविषयकमतिमत्त्वमिति यावत् । प्राग्विरुद्धमतयो ब्राह्मणा राजकुले एकीभवन्तीतिवत्प्राग्भवद्विरुद्धमतयोऽधुना तेनैकमत्यं प्राप्नुवन्तीत्यर्थः। अत्र विषयैक्यान्मत्यैक्यं मत्यैक्यान्मतिमतामैक्यं व्यपदिश्यत इति द्रष्टव्यम् । अत्र सर्वपदस्य लक्षणेति ज्ञातव्यम् । सादृश्यं संश्लेषः । यथोदके उदकान्तरस्य संश्लेषाभिप्रायेणैकीभावव्यवहार एवं परमात्मनि सर्वे एकीभावन्ति तेन संश्लिष्टा भवन्ति तं प्रविशन्तीति यावदित्यर्थः । एकदेशस्थितिः स्थानैक्यम् । अह्नीतस्ततः स्थिता गावः सायं गोष्ठे एकीभवन्तीति-वत्प्रागीश्वरव्यक्तिस्थानापेक्षयान्यत्रेतस्ततः स्थितास्तत्र मिलिता भवन्तीत्यर्थः । प्रतीतार्थे बाधकमाह— **नैकीभाव इति**।। ननु स्वरूपयोरेकीभाव एवार्थः कुतो न स्यादित्यतोऽभूततद्भावार्थकच्विप्रत्ययानुपपत्तिरित्यभिप्रेत्य तल्लब्धां युक्तिं दर्शयति- — **कुत इति** ।। अभूतस्य प्रागेकत्वेनाविद्यमानस्य भवनं एकत्वेन भवनं कुतो न कुतोऽपीत्यर्थः । अनेन जीवः परमात्मना मुक्तावैक्यं न प्राप्यते प्राक् ततोऽत्यन्तभिन्नत्वाते यद्यतः प्रागत्यन्तभिन्नं तत्ततो न कालान्तरेऽप्यैक्यं प्राप्यते यथा घटो घटेनेत्यनुमानमुक्तं भवतीति ज्ञातव्यम् । यथोक्तमनुव्याख्याने,

कथं च यः पूर्वमसौ न पश्चाद्भवेत् स एवेत्यपि युक्तिमेति ।
यतो न दृष्टं यदभून्न पूर्वं पश्चात्तदा सेति कुतश्च किञ्चिदिति ।।

ननु प्राङ्मूलरूपिणो भगवतोऽत्यन्तभिन्नत्वेन दृष्टानां रामकृष्णादिरूपाणां पश्चात्तेनैक्यस्यैव दर्शनाद्व्यभिचार इत्यत आह— **स्वरूपस्येति** ।। रामकृष्णादि-स्वरूपस्य मूलरूपिणा भगवतैक्यमेव सर्वदा सर्वप्रमाणैः प्रसिद्धं न भेद इत्यर्थः । तथाच तत्र हेतोरेवाभावान्न व्यभिचार इति भावः । ननु तर्ह्येकीभाववाक्यानां कोऽर्थ इत्यतोऽविरोधश्चेत्यादिनोक्तमेवार्थं दृष्टान्तकथनपूर्वकं विवृणोति— **अत**

**इति**।। प्राग्भिन्नस्य पश्चादैक्यायोगादित्यर्थः । विरोधस्य च वर्जनमित्यत्रत्येन चशब्देन स्थानैक्यसंग्रहः । एवशब्दस्य संश्लेषो विरोधस्य वर्जनमित्येताभ्यां सम्बन्धः । यथेत्यध्याहार्यम् । तथाचैवं योजना । यथा नदीनामब्धिना समुद्रेणैकीभावो नाम स्थानैक्यं संश्लेषावेव यथा वा परस्परविरुद्धानां नृणामपि नरान्तरैश्चैकीभावो नाम विरोधस्य वर्जनमेव न स्वरूपैक्यं तथैव जीवानां हरिणैकीभावो नाम स्थानैक्यं संश्लेषो विरोधस्य वर्जनमेव न स्वरूपैक्यमिति । तथाच च्विप्रत्ययो मुख्यार्थ एवेति भावः । ननु सर्वत्रापि स्वरूपैक्यमेवार्थः कस्मान्न स्यादित्याशंक्य कुतोऽभूतस्य भवनमित्युक्तं विवृणोति— **स्वरूपैक्यमिति** ।। तेषां नद्यादीनाम्। भिन्नस्वरूपिणामिति कर्मधारयादिनिः । यदुक्तं स्वरूपस्यैक्यमेव हीति भगवद्रूपाणामपि प्राक्स्वरूपैक्यमेवास्तीति तदयुक्तम् । तथात्वे भगवद्रूपाणामन्ते भगवतैकीभावप्रतिपादकाना"मेतन्नानावताराणां निधानं बीज"मित्याद्युक्तीनां वैय्यर्थप्रसङ्गात् । अत्रैकीभवन्त्यन्तत इति तात्पर्ये व्याख्याततत्वादित्याशंक्य तत्राप्येकीभावो नाम संश्लेष एव न स्वरूपैक्यमित्याह— **हरेरपीति** ।। स्वरूपाणां रामकृष्णाद्यवताररूपाणां एकीभावो हरिणा । यदा यत्र वाक्ये तत्रेति शेषः । संश्लेष एवेति । अत्र संश्लेषो नाम रूपाणामैक्यम् । कुतो न स्वरूपैक्यं तत्रैकीभावशब्दार्थ इत्यत आह— **सिद्धत्वादिति** ।। स्वरूपैक्यस्येत्येतत्पूर्वोत्तराभ्यां सम्बद्ध्यते । स्वरूपैक्यस्य विश्लेषदशायामपि सिद्धत्वेन च्विप्रत्ययानुपपत्त्या स्वरूपैक्यस्यात्यन्ताभेदस्य भवो भवनमेकीभावशब्दार्थो नो नैव भवतीत्यर्थः । ननु भगवद्रूपाणां प्रागविद्यमानस्वरूपैक्यं पश्चाद्भवतीत्येवार्थः किन्न स्यादित्यत आह— **सिद्धत्वादिति** ।। भगवद्रूपाणां स्वरूपैक्यस्य सिद्धत्वादनादिसिद्धत्वात् । भव उत्पत्तिः नो नास्ति । अतश्च्विप्रत्ययार्थबाधादुक्त एवार्थो युक्त इति भावः । प्रसिद्धार्थतां निराकर्तुं गता इत्येतद्व्याकुर्वन्नेवान्वयमपि दर्शयति— **गताः मुक्ता इति** ।। प्रकृतिबन्धान्मुक्ता इत्यर्थः । शृङ्गिग्राहकतया कलाप्रदर्शनार्थं प्राणादीत्युक्तम् । कर्माणीति पृथगभिधानेन पञ्चदशेति । जडकलाव्यावृत्त्यर्थं कलारूपदेवता इति । सजीवस्य शरीरस्य भागः कला सा रूपमभिमन्यमानं याभिस्ताः कलारूपाः

प्राणः श्रद्धा खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनः अन्नं वीर्यं तपो मन्त्राः गोलकाः नाम इत्येवं याः पञ्चदशकलाः तदभिमानिदेवता इत्यर्थः । ततश्चान्यत्रोक्ताः—

विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।
तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता ।।
ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः ।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् ।।
तस्मादग्निः पावकाख्यः प्रथमाग्नेः सुतस्ततः ।
ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता ।।
उदकात्मको बुधस्तस्या उषानामात्मिका ततः ।
ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः ।। इति ।।

देवाश्च सर्व इत्यनेनैव कलादेवतानां लाभात्पृथगुक्तिरयुक्तेत्याशंक्य देवास्सर्व इत्येतद्विशिनष्टि— **अन्ये च देवास्सर्व इति** ।। कलादेवेभ्योऽन्ये सर्वे देवाश्चेत्यन्वयः । कलादेवतानां तदन्यदेवानां च प्रतिदेवतासु प्रतिष्ठा इति विशेषणम् । ततः प्रतिदेवतास्वित्येतदनूद्य व्याचष्टे— **प्रतिदेवतासु प्रतिबिम्बभूतास्विति** ।। देवताः प्रतिगताः प्रतिदेवताः अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः । प्रतिबिम्बानामेव च बिम्बानि प्रतिगतत्वमिति प्रतिबिम्बभूतास्विति व्याख्यानं युक्तम् । अत्रोचितं विशेष्यमाह— **प्रजास्विति** ।। प्रति तिष्ठन्तीति प्रतिष्ठाः । इगुपधज्ञाप्रीकिरः क इत्यस्मात्क इत्यनुवृत्तौ आतश्चोपसर्ग इति सूत्रात्क इति भावेन प्रतिष्ठाशब्दार्थमाह— **प्रति प्रति स्थिता इति** ।। अत्र प्रतिष्ठा इत्यस्यार्थकथनं स्थिता इति । प्रति प्रतीत्यत्र प्रथमस्य प्रत्येकमित्यर्थः । द्वितीयस्य तु नियामकत्वेनेति । नतु द्विर्वचनमेतत् । अनुशासनाभावादिति बोध्यम् । "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यय" इति पदानि योजयति— **कर्माणि विज्ञानमयो जीवश्च परमात्मनि प्रवशन्तीति** ।। अत्र जीवश्चेत्यनेन आत्मशब्दो जीवार्थः । चशब्दस्तदन्वित इति सूचयति । अत्र परमात्मनि प्रविशन्तीत्यनेन परेऽव्यय इति पदद्वयं परमात्मपरम् । प्रविशन्तीति चाध्याहर्तव्यमिति सूचयति । अत्र

परेऽव्यय इत्युक्तः परमात्मा चतुर्व्यूहगतवासुदेव एव । तस्यैव लिङ्गदेह-प्रकृतिबन्धाभ्यामत्यन्तमोक्षानन्तरं प्राप्यत्वात् । यथोक्तम्—

विरजायां कृतस्नाना ब्रह्मणा सह सर्वशः ।
त्यक्तलिङ्गास्ततः सर्वे स्वरूपेणैक्यवत्स्थिताः ।।
ततो दृष्ट्वा शिंशुमारं श्वेतद्वीपं निरीक्ष्य च ।
विशन्ति वासुदेवाख्यं हरे रूपं चतुर्थकम् ।। इति ।।

अत्र ततो दृष्ट्वा शिंशुमारमित्याद्युक्तं शिंशुमारदर्शनादिकं विरजानदीस्नानानन्तरं तत्तीरस्थितानामेव । नतु शिंशुमारादिलोकं गतानाम् । तदा ब्रह्माण्डस्य तदन्तःस्थलोकानां च संकर्षणमुखाग्निना दग्धत्वादिति ध्येयम् ।। प्रतिदेवतासु प्रतिष्ठा इत्यनेन कलादेवानां तद्भिन्नदेवानां च यदुक्तं प्रजासु नियामकत्वेन स्थितत्वं यच्च परेऽव्यये प्रविशन्तीत्युक्तं तदुभयं प्रमाणेनैव विवेचयति— **प्रतिबिम्बो हरेः प्राण इति** ।। मुख्यप्राण इत्यर्थः ।। **अन्याः कला इति** ।। श्रद्धादिकलादेवता भारत्याद्या इत्यर्थः ।। **क्रमादिति** ।। उत्तरोत्तराः कलादेवताः पूर्वपूर्वकलादेवतानां तारतम्यक्रमेण प्रतिबिम्बा इत्यर्थः ।। **कलानामिति** ।। अन्या देवताः कलादेवतानां प्रतिबिम्बा इत्यर्थः । नराः नरादयः देवतानां प्रति-बिम्बा इत्यर्थः ।। **तस्मादिति** ।। यत एवं प्राणादिदेवानां देवेतरजीवानां च पूर्वपूर्वप्रतिबिम्बत्वम् । प्रतिबिम्बत्वं च तदधीनत्वे सति तत्सदृशत्वम् । तस्मादुत्तरोत्तरेषां पूर्वपूर्वाधीनत्वादित्यर्थः । नरेषु चेति चशब्देन देवेष्विति समुच्चीयते । अखिलाः प्राणादिसर्वे देवाः सर्वेषु मुक्तेषु नरेषु स्वावरदेवेषु च नियामकास्सन्तः तिष्ठन्तीत्यनेन प्रतिदेवतासु प्रतिष्ठा इत्येतत्प्रमापितम् । एवं परमात्मनि च तिष्ठन्तीत्यनेन परेऽव्यये प्राविशन्तीत्येत-त्प्रमापितम् । नात्र सन्देह इत्यनेन मुक्तेषु देवानां कथं नियामकत्वं तन्नियम्येन्द्रिया-भावादिति निरस्तम् । जडेन्द्रियाद्यभावेन तन्नियामकत्वाभावेऽपि स्वरूपेन्द्रियादि-नियामकत्वोपपत्तेः । तदुक्तमनुव्याख्याने-"मुक्तस्वकीयावरयन्तृतास्ति मुक्तावपि ब्रह्मपुरस्सराणामि"ति । अन्ये तु ब्रह्मणोऽन्तर्नियामकत्वं तदन्यदेवानां बहिर्नियामकत्वमेव । तदुक्तं छान्दोग्यभाष्ये—

तुरीयायामवस्थायां प्राणादेव विबोधनम् ।
तथाच संसृतिस्तत्र प्राणवश्यतया भवेत् ।। इति ।।

अतस्तस्मात्सर्वेषु मुक्तेषु नरेषु च नियामका इत्युक्तम् । प्राणान्यदेवानां मुक्तनियामकत्वं बहिस्स्थित्वा प्रेरकत्वेनैवेत्याहुः ।। ननु कर्मणामपि कलात्वात् कला इत्यनेनैव तद्ग्रहणसम्भवात्पृथगुक्तिर्व्यर्थेत्याशंकां प्रमाणेनैव परिहरति— **कलाभ्य इति** ।। **कर्म प्रत्यवरमिति** ।। कर्माभिमानिदेवोऽत्यन्तावर इत्यर्थः । कलाभ्य इत्युपलक्षणम् । अन्यदेवेभ्य-श्चेत्यपि ग्राह्यम् ।। तदिति कर्मेत्यर्थः । कः कर्माभिमानिदेव इत्यत आह— **पुष्कर इति** ।। चोऽवधारणे । पुष्कर एव कर्मेत्युच्यत इति योज्यम् । अद्वैतवादिनस्तु कलाः मुक्तिकाले विदुषो देहारम्भकाः प्राणाद्याः पञ्चदशकलाः प्रतिष्ठाः स्वकारणानि प्रति गताः भविष्यन्ति । तदभिमानिनः सर्वे देवाश्च प्रतिदेवतासु स्वमूलरूपेषु गताः भविष्यन्तीति व्याचक्षते । तान्दूषयति-— **अन्यथेति** ।। परव्याख्यान इत्यर्थः । यच्च प्रतिदेवताशब्दव्याख्यानं तदपि दूषयति— **नचेति** ।। देवानां मूलरूपाणि प्रतिदेवता इति नोच्यन्ते । अनुशासनाद्यभावात् । अतश्च परव्याख्यानमयुक्तमित्यर्थः । ननु प्रतिदेवतास्वित्यस्य प्रतिबिम्बभूतास्विति भवद्व्याख्यानमप्ययुक्तम् । अपदार्थत्वादवाक्यार्थत्वाच्चेत्यत आह–– **प्रतिरूपशब्दवद्धि प्रतिदेवताशब्द इति** ।। यथारूपं प्रतिगतं प्रतिरूपमिति । प्रादिसमासे कृते देवतासदृशास्तदधीनाश्च प्रतिदेवताशब्देनोच्यन्ते । तदधीनत्वे सति तत्सदृशत्वमेव च प्रतिबिम्बत्वम् । अतः प्रतिदेवताशब्देन वाक्यार्थविधया देवताप्रतिबिम्बावगमसम्भवाद्युक्तमस्मद्व्याख्यानमिति । ननु तथापि पञ्चदशकला इत्यस्य तदभिमानिदेवा इति गता इत्यस्य च मुक्ता इति व्याख्यानमयुक्तम् । निर्मूलत्वात्प्रतीतार्थे बाधकाभावाच्चेत्यत आह— **विज्ञानेत्यादिना देवता एवोच्यन्त इत्यन्तेन** ।। गताः कला इति मन्त्रे कलाभिमानिनो मुक्ता देवा एवोच्यन्ते । इमाः षोडश कलाः इत्याथर्वणब्राह्मणो-पनिषत्समाख्यानात् । इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्येति ।। यथा सोम्येमाः समुद्रायणा इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनादिति । यथा प्राक् समुद्रमप्राप्तानां नदीनां पश्चात्समुद्रप्राप्तिः तथा

स्वकीयं गङ्गागोदावर्यादि नाम गङ्गादिरूपं चाविहाय अत्यक्त्वा, मणीवेत्यादाविवाप्रगृह्यत्वम् । यद्वा साधारणचेतनैरज्ञेयनामरूपत्वान्नामरूपे विहायेति वा । अस्तमदर्शनं गच्छन्ति यथा तथा विद्वान् ब्रह्मज्ञानी नामरूपाद्विमुक्तोऽमुक्तः नामरूपयुक्त एव, विप्रियमित्यत्रेव विशब्दोऽत्र निषेधार्थः । यद्वा, संसारिभिरज्ञेयनामरूपत्वाद्विमुक्तो वियुक्त इव स्थितः परात्परं सर्वोत्तमं दिव्यमद्भुतं पुरुषं भगवन्तमुपैति प्राप्नोति ।। ८ ।।

**स.टी.**——एकीभवनप्रकारमेव दृष्टान्तत्वेनाह— **यथा नद्य इति** ।। अत्रैकीभवन्तीत्यस्य स्वरूपैक्यमर्थः । किन्त्वविरोधः सादृश्य एकदेशस्थितिश्चेति त्रिधा । शुद्धैकीभावोऽर्थश्चेत् अनुपपत्तिरेव । भिन्नानामभिन्नव्यवहारस्य लोके अदर्शनात् । किञ्च स्वरूपैक्यमेव जीवानामङ्गीकुरुषे तदा स्वरूपैक्यस्य सिद्धत्वाद्भूतस्य भवनानुपपत्तेः । भूतभवनप्रसङ्गेनाभूततद्भावार्थकत्वेऽनुपपत्तिः । अतो नदीनामब्धिना संश्लेषेणैक्यव्यपदेशवन्नृणां चाविरोधे ऐक्यव्यपदेशवच्च हरिणैक्यव्यपदेशः । किञ्च जीवाः न परमेश्वरेणैकीभवन्ति । ततोऽत्यन्तभिन्नत्वात् । अनिलानलवत् ।। ८ ।।

**व.टी.**——परेऽव्यये सर्व एकीभवन्तीत्युक्तं दृष्टान्तेनोपपाद्यते— **यथा नद्य इति** ।। ८ ।।

**श्री.टी.**——एकीभावप्रकारमेव सदृष्टान्तमाह— **यथेति** ।। स दृष्टान्तो यथा स्यन्दमानाः प्रस्रवमाणा नद्यः नामरूपेऽविहायापरित्यज्य समुद्रे समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति साधारणपुरुषैर्न ज्ञायन्ते तथा विद्वान्नामसहिताद्रूपाद्विमुक्तः । विप्रिय इतिवत् । विशब्दो निषेधवाची । विनिषेधपृथग्भाव इति वचनात् । अमुक्तः अपरित्यजन् सन् परात्परं दिव्यं पुरुषमुपैति तं प्राप्य चामुक्तैर्न ज्ञायत इत्यर्थः । यद्वा नामरूपे विहायेत्येव पदच्छेदः । तथाच समुद्रस्थितानां नदीनां नामरूपयोर्वाय्वादिभिर्महद्भिर्ज्ञायमानत्वेन सामान्यपुरुषाज्ञेयनामरूपवत्त्वान्नामरूप-

विहीनत्वोक्तिरेवमेव मुक्तानां नामरूपयोरमुक्तैरज्ञायमानत्वान्नामरूपाद्विमुक्त इति तदुभयपरित्यागोक्तिरित्यर्थः ।। ८ ।।

**उ.टी.**—परेऽव्यय इत्यनेनोक्तं भगवत्प्रवेशरूपं मोक्षं दृष्टान्तकथनपूर्वकं विवृणोति वेदपुरुषः— **यथा नद्य इति** ।। ततश्चायं मन्त्रार्थः—यथा समुद्रायणाः समुद्रो अयनं आश्रयो यासां ताः समुद्रायणाः । णत्वं छान्दसम् । दृष्टानुविधिर्हि संज्ञा छन्दसोरिष्यत इत्यभियुक्तोक्तेः । स्यन्दमानाः स्रवन्त्यः । स्यन्दू प्रस्रवण इत्युक्तेः । नद्यः समुद्रं प्राप्य । नामरूपे अविहाय । अस्तं सामान्यजीवादर्शनविषयतां गच्छन्ति । तथा विद्वान् नामरूपाद्विमुक्तः अमृतपुरुषागम्यनामरूपयुक्त इति यावत् । यद्वा नामरूपाद्विमुक्तः अमुक्तः सन् । परात्परं दिव्यपुरुषं भगवन्तमुपैति प्रविशतीति ।। ८ ।।

**आ.टी.**——तदेव सदृष्टान्तं विविच्याह— **यथेति** ।। समुद्रायणाः मेघद्वारा समुद्रोत्पन्ना प्राच्यादिषु स्यन्दमाना गङ्गादिनद्यस्समुद्रं प्राप्य प्राकृतजनापेक्षया गङ्गादिनामरूपे विहाय मूर्खजनव्यवहाराभावात् अस्तमदर्शनं गच्छन्ति । तथा विद्वान् ज्ञानी अज्ञानिजनव्यवहाराभावात् नामरूपात् नामरूपाभ्यां विमुक्तस्सन् दिव्यं परमपुरुषं प्राप्नोति । ज्ञान्यपेक्षया अविहाय विमुक्तविगतमुक्तत्व इति व्याख्येयम् ।। ८ ।।

**गू.टी.**——एकीभवनप्रकारमेव दुष्टान्तेनाह— **यथा नद्य इति** ।। समुद्रायणाः आसमुद्रायणाः मेघादिद्वारा समुद्रादुत्पन्नाः नद्यः स्यन्दमानाः नामरूपे विहाय यथाऽज्ञानां स्वकीयनामरूपज्ञानं न भवति तथा नामरूपे विहाय । अविहाय अत्यक्त्वेति वा । समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति । अन्येषामियं गङ्गेत्यादि नामरूपज्ञानं न भवतीत्यर्थः । वाय्वादिज्ञानिनां भवत्येव नामरूपज्ञानम् । तथा विद्वानपि अज्ञप्रतीत्या नामरूपरहितः वस्तुगत्या नामरूपारहितः सन् परान्परं दिव्यं पुरुषं हरिमुपैतीत्यर्थः ।। ८ ।।

**भाष्यम्**

**अगम्यनामरूपत्वादमुक्तैर्मुक्तिगा नराः ।**
**विहीननामरूपास्तु नहि तद्रहितत्वतः ।।**

**अशरीरो यथा वायुः सामान्यागम्यदेहतः ।**
**एवं नद्यः समुद्रस्थाः सामान्यागम्यरूपतः ।। इति च ।।**

**स्वकीयमुदकं नद्यः समुद्रे नैव जानते ।**
**वायुस्तु तत् पृथज्ज्ञात्वा मेघे कृत्वा प्रवर्षति ।।**

**—इति च ।।**

**विमुक्त इत्यमुक्त इत्यर्थः । विप्रिय इतिवत् । अविहायेति च । 'अनन्तं वै नाम' इति च श्रुतेः ।**

**व्या.टी.**——नद्यः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपे विहाय तथा नामरूपाद्विमुक्त इत्येतत्समुद्रं प्राप्तानां नदीनां भगवन्तं प्राप्तानां मुक्तानां च नामरूपाभावप्रतीतिं निवारयन् व्याचष्टे— **अगम्येति** ।। समुद्रं प्राप्तानां नदीनां नामरूपयोः महद्भिर्ज्ञायमानत्वाच्च न नामरूपाभावस्तासामित्याह— **स्वकीयमुदकं नद्य इति** ।। प्रकारान्तरेण विमुक्तपदं व्याकरोति— **विमुक्त इति** ।। वीत्युपसर्गस्य निषेधार्थत्वं क्वोपलब्धमित्यतः प्रयोगं दर्शयति— **विप्रिय इतिवदिति** ।। नामरूपे विहायेत्यस्य पदविभागप्रदर्शनेन च नामरूपराहित्याभावमर्थमाह— **अविहायेति चेति** ।। ननु नामरूपे इत्यस्य प्रगृह्यत्वेन प्रकृतिभावावश्यम्भावात्सन्ध्यभावात्कथमविहायेति पदविभाग इति चेन्न । मणीवादिवदुपपत्तेः । मुक्तानां नामवत्त्वं श्रुत्या समर्थयते-— **अनन्तमिति** ।। मुक्तानां नाम अनन्तमविनाशीति श्रुतिभावाच्च न मुक्तानां नामाभाव इत्यर्थः ।।

**ध.टि.**—— ।। **अगम्येतीति** ।। अत्राज्ञैरिति शेषः । तुशब्दोऽवधारणे । इत्युच्यन्त इति शेषः । मुक्तिगाः नराः अज्ञैरमुक्तैरगम्यनामरूपत्वादेव विहीननामरूपा

इत्युच्यन्त इत्यर्थः । अवधारणव्यावर्त्यमाह— **नहीति** ।। अनन्तं वै नामेति वक्ष्यमाणश्रुतिप्रसिद्धिं हिशब्देन दर्शयति । अत्र दृष्टान्तः ।। **अशरीरश्रुतौ इति** ।। अशरीरो वायुरभ्रमिति श्रुतौ यथा वायुरशरीर उच्यत इति शेषः । तत्र हेतुः **सामान्येति** । भावप्रधानोऽयं निर्देशः । साधारणपुरुषाज्ञेयदेहवत्त्वादित्यर्थः । सामान्यागम्यरूपत इत्यत्र रूपपदं नाम्नोऽप्युपलक्षकम् । साधारणपुरुषाज्ञेयनामरूपवत्त्वाद्विहीननानारूपा इत्युच्यन्त इत्यर्थः ।। **स्वकीयमितीति** ।। अत्र स्वकीयं स्वाभिमन्यमानम् । समुद्रे प्रविष्टनद्यस्तदभिमानिन्यो देवताः । वायुर्मुख्यप्राणः । तदुदकं मुख्यप्राणो मेघे स्थित्वा समुद्रे प्रविष्टं गङ्गागोदादिनद्युदकमेव विविच्य गृहीत्वा मेघे कृत्वा स्थापयित्वा गङ्गादिसमीपस्थेषु देशेषु वर्षतीत्यर्थः । तथाच वाय्वादिभिः महात्मभिः नदीनां नामरूपयोर्ज्ञायमानत्वान्न सर्वथा नामरूपशून्यत्वं नदीनामिति भावः ।।

**वामन.टी.**—अस्य वाक्यस्याभिप्रायमगम्यनामरूपत्वादिना मुक्तिविवेकवाक्येन स्पष्टीकरोति । मुक्तानां नदीनां च विलक्षणं विलक्षणनामरूपे वायुदेहमिवेतरे न जानन्तीत्यत्रोक्तम् । अथ यद्यपि मुक्तस्य सार्वज्ञात्स्वकीयं नामरूपादिकं सम्यग्जानन्ति तथाप्येता नद्यः स्वं स्वमुदकं स्वयं न जानन्तीत्याह-— **स्वकीयमुदकमिति** ।। नामरूपाभ्यां विमुक्तिमेव हि विमुक्तानां स्पष्टोक्तेरित्याशंक्याह— **विमुक्त इत्यादि** ।। अत्र तु विमुक्त इत्यमुक्त उच्यते । वीत्युपसर्गस्य विप्रिय इत्यादिवन्निषेधार्थत्वात् । नच नामरूपे विहायेति दृष्टान्तोक्तिविरोधः । तत्राप्यविहायेत्येवाभिप्रेतत्वात् । अत्र ग्रहस्तु पृथगभिमानविधानज्ञापनार्थः । एवं च स्थूलस्यैव नामरूपादेर्विहानं न सूक्ष्मस्येत्यर्थः । अत्रानन्तश्रुतिमित्यादि श्रुतिमप्याह । नामादेरविनाशित्वं ह्यनन्तत्वम् ।। **विमुक्त इतीति** ।। अत्र विर्निषेधे पृथग्भाव इति वचनाद्वीत्युपसर्गो निषेधार्थकः । तथाच नामरूपाद्विमुक्तः अमुक्तः तदपरित्यागवान् तत्सहित इति यावदित्यर्थः ।। **विप्रिय इति वदतीति** ।। "कृष्णस्य विप्रियो राजा धार्तराष्ट्रः सहानुज" इति भारते विप्रिय इति यथेत्यर्थः । ननु तर्हि दृष्टान्तवाक्यासङ्गतिः । तत्र नामरूपे

विहायेति नदीनां नामरूपविहीनत्वोक्तेरित्याशंक्येति नामरूपे विहायेत्यस्येत्यतः पूर्वं पूरणीयम् ।। **अविहायेतीति** ।। अत्र व्याख्यानान्तरसमुच्चायकश्चशब्दः । मणीवादेनेति मणीवादिगणे प्रकृतिभावशब्दितसन्ध्यभावनिषेधादस्यापि तद्गण-स्थत्वादित्यर्थः ।। **अनन्तमितीति** ।। अत्र अनन्ता विश्वेदेवा इति रूपा-नन्त्येऽपि श्रुतिर्द्रष्टव्या ।।

**स.टी.**——ननु समुद्रं प्राप्यास्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नाम-रूपाद्विमुक्त इति । नामरूपविमुक्तिगाः अभिधानानि गुणप्राप्तिरेवात्रोच्यते । नैष दोषः । अगम्यनामरूपेत्यादि प्रमाणानुसारेण नामरूपशब्दस्यागम्यनामरूपा-र्थत्वोपपत्तेः । यच्चाभ्यधाः समुद्रप्रविष्टानामभाव इति तदितोऽप्यसत् । अत एवास्मारि— **स्वकीयमिति** ।। अथवा विमुक्त इत्यमुक्त इत्यर्थः । दृष्टान्तेऽ-प्यविहायेति पदच्छेदः । अतो न निर्गुणब्रह्मभावोऽत्रार्थः । अपिच मुक्तानां नामरूपत्वं अनन्तं वै नामेति श्रुत्या ।।

**व.टी.**——तत्र मुक्तस्य नामरूपराहित्यमुच्यत इत्यन्यथाप्रतीतिनिरासायाह— **अगम्येति** ।। अन्यैरगम्यनामरूपत्वात्तन्नामरूपाभावाभिधाने दृष्टान्तमाह— **अशरीर इति** ।। विद्वद्भिर्ज्ञायमाननामरूपत्वाच्च न समुद्रं प्रविष्टानां नद्यादीनां नामरूपाभाव इत्याह— **स्वकीयमिति** ।। तथा विद्वान्नामरूपाद्विमुक्त इत्येतत्प्रकारान्तरेण व्याचष्टे— **विमुक्त इति** ।। वीत्युपसर्गस्य निषेधार्थत्वं कुत्र दृष्टमित्यत आह— **विप्रिय इतीति** ।। नन्वेवं सति नामरूपे विहायेति दृष्टान्ताननुगुण्ये स्यादित्यत आह— **अविहायेति** ।। मुक्तस्य नामरूपसद्भावे प्रमाणान्तरं चाह— **अनन्तमिति** ।। यावद्वस्तुभावीत्यर्थः ।

**श्री.टी.**——यथा नद्य इति वाक्ये समुद्रं प्राप्तानां नदीनां यथा नामरूपविहीनत्वमेवं भगवन्तं प्राप्तानामपि मुक्तानां नामरूपविहीनत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय दृष्टान्तदार्ष्टान्तिकयोर्नामरूपविहीनत्वोक्तेरभिप्रायं सदृष्टान्तं प्रमाणेन दर्शयति— **अगम्येति** ।। अज्ञेयेत्यर्थः । तुशब्दोऽवधारणे । इत्युच्यन्त इति शेषः ।

मुक्तिगाः नराः अमुक्तैरगम्यनामरूपत्वादेव विहीननामरूपा इत्युच्यन्त इत्यर्थः। अवधारणव्यावर्त्यमाह— **नहीति** ।। "अनन्तं वै नामे"ति वक्ष्यमाणश्रुतिप्रसिद्धिं हिशब्देन दर्शयति । अत्र दृष्टान्तः ।। **अशरीर इति** ।। अशरीरो वायुरभ्रमिति श्रुतौ यथा वायुरशरीर उच्यत इति शेषः ।। **सामान्येति** ।। अत्र रूपपदं नाम्नोऽप्युपलक्षकम् । भावप्रधानो निर्देशः । साधारणपुरुषाज्ञेयनामरूपवत्त्वा-द्विहीननामरूपा इत्युच्यन्त इति सम्बन्धः । ननु समुद्रं प्राप्तानां नदीनां सर्वथा नामरूपाभाव एव किन्न स्यादित्यत आह— **स्वकीयमिति** ।। स्वाभिमन्यमान-मित्यर्थः । समुद्रे प्रविष्टाः नद्यः वायुर्मुख्यप्राणः । तत् उदकम् । मुख्यप्राणो मेघे स्थित्वा समुद्रप्रविष्टं कृष्णवेण्यादिनद्युदकमेव विविच्य गृहीत्वा मेघे कृत्वा स्थापयित्वा कृष्णवेण्यादिसमीपस्थेषु देशेषु वर्षतीत्यर्थः । तथाच वाय्वादिभि-र्महात्मभिर्नदीनां नामरूपयोर्ज्ञायमानत्वान्न सर्वाथा नामशून्यत्वं नदीनामिति भावः। तथा विद्वान्नामरूपाद्विमुक्त इति दार्ष्टान्तिकवाक्यस्थं विमुक्तपदमनूद्य प्रकारान्तरेण व्याचष्टे— **विमुक्त इतीति** ।। "विर्निषेधे पृथग्भाव" इति वचनाद्वीत्युपसर्गो निषेधार्थः । वीत्युपसर्गस्य निषेधार्थत्वे "कृष्णस्य विप्रियो राजा धार्तराष्ट्रः सहानुज" इति भारतोक्तमुदाहरणमाह— **विप्रिय इति** ।। अप्रिय इत्यर्थः । ननु तर्हि दृष्टान्तवाक्यासङ्गतिस्तत्र नामरूपे विहायेति नदीनां नामरूपविहीनत्वोक्ते-रित्यतस्तत्राप्यविहायेत्यकारप्रश्लेषेण पदविभागकरणान्नासङ्गतिरित्याशयेनाह— - **अविहायेति चेति** ।। व्याख्यानान्तरसमुच्चायकश्चशब्दः। नन्वविहायेति पदविभागकरणमनुपपन्नं तथात्वे नामरूपे अविहायेति सन्ध्यभावे एव स्यान्नतु नामरूपे विहायेति सन्धिः 'ईदूदेद्द्विवचनं प्रगृह्यमि'ति एदन्तत्वा-त्प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अची"ति प्रकृतिभावविधानादिति चेन्न । मणीवादेर्नेति मणीवादिगणोपरि प्रकृतिभावनिषेधादस्यापि तद्गणस्थत्वादिति ज्ञातव्यम् । मुक्तानां नामरूपयोर्नाशा-भावस्य श्रुतिसिद्धत्वाच्च नामरूपाद्विमुक्त इत्येतदविमुक्त इत्येव व्याख्येयमिति भावेनाह— **अनन्तं वै नामेति** ।। नाम अनन्तम् । नाशशून्यमिति वै प्रसिद्धमित्यर्थः । अनन्ता विश्वेदेवा इति रूपानन्त्येऽपि श्रुतिर्द्रष्टव्या ।।

**उ.टी.**—अत्र मन्त्रे नामरूपे विहाय नामरूपाद्विमुक्त इति च नामरूपत्याग एवोच्यत इति प्रतीतिनिरासाय तद्वाक्यद्वयं प्रमाणेनैव व्याचष्टे— **अगम्येति** ।। मुक्तिगाः नराः जीवाः अमुक्तैरगम्यनामरूपत्वाद्विहीननामरूपा इत्युच्यन्त इति शेषः । नतु तद्रहितत्वात् । अन्यथा बहुप्रमाणविरोधत्वादिति हिशब्दार्थः । अनेन नामरूपाद्विमुक्त इति वाक्यं विवृतम् । अगम्यनामरूपत्वेन नामरूपराहित्योक्तौ दृष्टान्तमाह— **अशरीर इति** ।। यथा वायुः सामान्यपुरुषागम्यत्वादशरीर उच्यते तथेत्यर्थः । एवं नामरूपाद्विमुक्त इति दृष्टान्तवाक्यं व्याख्यायेदानीं नामरूपे विहायेति दार्ष्टान्तिकवाक्यमपि व्याख्याति— **एवं नद्य इति** ।। समुद्रस्थाः नद्यः सामान्यागम्यरूपतः । भावप्रधानो निर्देशः । रूपपदं चोपलक्षणम् । सामान्यागम्यनामरूपत्वान्नामरूपे विहायास्तं गच्छन्तीत्युच्यन्त इत्यर्थः । ननु समुद्रं प्राप्तानां नदीनां सामान्यागम्यनामरूपत्वं सिद्धम् । अतस्तेन निमित्तेन कथं नामरूपे विहायेत्याद्युक्तमित्याशंकां स्मृत्यैव परिहरति— **स्वकीयमिति**।। अनेन नदीदेवतानां स्वकीयनामरूपज्ञानं नास्ति । प्रधानवायोस्तु तदस्तीत्युच्यते। तेन प्रधानवाय्वाद्यगम्यनामरूपत्वाभावेऽपि नदीदेवतारूपसामान्यजीवागम्यनामरूपत्वमस्त्येव अतस्तेन निमित्तेन नामरूपराहित्योक्तिर्युज्यत इति भावः । एवं नामरूपराहित्यकथनमङ्गीकृत्य वाक्यद्वयं व्याख्यातम् । इदानीन्तु तदेव नास्तीति भावेन विमुक्त इत्येतदनूद्य व्याचष्टे— **विमुक्त इत्यमुक्त इत्यर्थ इति** ।। विमुक्त इति पदस्य अमुक्त इत्यर्थः । विर्निषेधे पृथग्भावे इति वचनबलेन वीत्युपसर्गस्याभावार्थत्वं प्रयोगं च दर्शयति— **विप्रिय इतिवदिति** ।। इदमुपलक्षणम् ।

निपातश्चोपसर्गश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृतास्सर्वे पाठस्तेषां निदर्शनम् ।।

इत्युपसर्गाणामनेकार्थत्वाभिधानात् । वीत्युपसर्गस्यानेकार्थत्वं युक्तमित्यपि ग्राह्यम् । विमुक्तो विप्रिय इत्युभयत्रापि प्रादिग्रहणस्य गत्यर्थत्वेन कुगतिप्रादय इति सूत्रेण सुप्सुपेति वा समासः । तेन न समासानुपपत्तिशंकेति ध्येयम् । एवं नामरूपाद्विमुक्त इत्यत्र नामरूपराहित्यं नोच्यते । किन्तु तत्साहित्यमेवेत्युक्तम्। नन्वेवं सति

पूर्वार्धोक्तदृष्टान्तविरोधः स्यात् । तत्र नामरूपे विहायेति तद्धानस्योक्तत्वादित्याशंकापरिहाराय इदानीं नामरूपे विहायेत्यत्रापि नामरूपसाहित्यमेवोच्यत इति भावेन पदघट्टरूपं व्याख्यानं करोति— **अविहायेति चेति** ।। ननु नामरूपे इत्यस्य द्विवचनान्तत्वादेकारान्तत्वाच्च प्रगृह्यत्वं प्राप्नोति । ईदूदेद्द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञाविधानात् । ततश्च प्लुतप्रगृह्या अचि नित्यमिति सूत्रेण प्रगृह्यस्य प्रकृतिभावे नामरूपे अविहायेति सन्ध्यभाव एव स्यात् । गङ्गे अमू इत्यादिवत् । नामरूपे विहायेति सन्धिस्तु कथमिति चेत् । उच्यते । षष्ठीयुक्तः छन्दसि वेति सूत्रे वेति योगं विभज्य छन्दसि सर्वे विधयो वा भवन्तीति व्याख्यातं शाब्दिकैः । तेन सर्वे विधयश्छन्दसि विकल्प्यन्त इति परिभाषायाः सिद्धत्वात् । वेति योगविभागेन वा परिभाषया वा नामरूपे इत्यत्र प्रगृह्यत्वं न भवति । ततश्च 'एङः पदान्तादती'ति सूत्रेण पूर्वरूपे सति दम्पती वेत्यादिवन्नामरूपे विहायेति सन्धिर्युक्त एवेत्येषा दिक् । स्यादेतदेवं पूर्वोत्तरार्धयोर्व्याख्यानम् । यदि नामरूपविनाशाभावः प्रमितः स्यात् । तदेव कुत इत्यत आह— **अनन्तमिति** ।। अनन्तं वै नाम अनन्ता वै विश्वेदेवता इति श्रुतेरित्यर्थः । नाम अनन्तं वै । विनाशशून्यमेव । अनन्ताविनाशशून्या एवेति श्रुतेः नामरूपं चाविनाशीत्यङ्गीकार्यम् । "अनन्ता वै विश्वेदेवा" इति रूपाविनाशोक्तेरिति भावः । अत्रेश्वरबुद्ध्युपाधिक्रमविशिष्टस्य नाम्नः स्वरूपेणैव नाशो नास्ति । उपाधिभूतेश्वरबुद्धेर्नाशाभावात् । अस्मदादिबुद्ध्युपाधिक्रमविशेषविशिष्टनाम्नस्स्वरूपे नाशेऽपि प्रवाहरूपेण न नाश इत्यभिप्रेत्य अनन्तं वै नामेति श्रुतावुक्तमित्यवगन्तव्यम् ।।

## उपनिषत्

**स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ।। ९ ।।**

**व्या.टि.**——एतदुपनिषद्वेत्तुः फलमाह— **स य इति** ।। ब्रह्मैव भवतीत्युक्तं ब्रह्मभवनमेव विशदमाह— **तरतीत्यादिना** ।। ९ ।।

**ध.टि.**——।। **स य इतीति** ।। योऽधिकारी एतत्परमं ब्रह्म वेद । स ब्रह्मैव भवति । ज्ञानानन्दादिस्वोचितगुणैः बृंहित एव भवति । न परब्रह्मत्वमाप्नोतीत्येवार्थः। अस्य कुले अब्रह्मवित् पुत्रो न भवति । ज्ञानिपुत्रको भवतीत्यर्थः । इदञ्च कार्तयुगदेवतासन्ततिपरं ज्ञातव्यम् ।। **तरतीत्यादिनेति** ।। गुहाग्रन्थिभ्यो हृदयस्था-विद्याकामकर्ममिथ्याज्ञानसंशयेभ्यो विमुक्तः अमृतः मुक्तो भवतीत्यर्थः ।।

**वा.टी.**——यः ब्रह्म वेद स ब्रह्म स्वयोग्यतानुसारेण ज्ञानानन्दादिना बृंहित एव भवति, नतु साक्षात् परं ब्रह्मैव भवतीत्येवकारार्थः । कर्तृकर्मणोरेकतामनङ्गीकुर्वता परेणापि वेदनकर्तुर्जीवस्य विषयतया वेदनकर्मणो ब्रह्मणश्चैक्यकथनायोगाद-स्मदुक्तविधयैवार्थो वक्तव्यः । किञ्च समाख्यारूपेण वक्ष्यमाणश्लोके ब्रह्मप्राप्ति-रूपैक्यस्याश्रवणाज्ज्ञानिनामेव श्रवणाच्चोक्तरीत्या ज्ञानिविषयतयैव योजना कार्या। अन्यथा समाख्याया विषमाख्यात्वप्रसङ्गात् । अपिच ब्रह्मविदाप्नोति परमिति समाख्याश्रुतिबलात्, भू प्राप्ताविति धातोश्च यो ब्रह्म स ब्रह्मैव भवति प्राप्नोतीति योग्यार्थलाभे किमर्थमियमदृष्टार्थकल्पना । नहि लोके यो हि यद्वेद स तदेव भवतीति क्वापि दृष्टम् । भ्रमरं ध्यायन् कीटोऽपि तदनुयायी भ्रमरान्तरमेव भवति । नतु तदेव भवति । अदृष्टमपीदं श्रुतिबलात् कल्प्यते इति चेन्न । श्रुतेरपि प्रबलप्रत्यक्षप्रमितार्थविरुद्धप्रमेयकल्पनायां शक्त्यभावात् । न ह्यन्धो मणिं पश्यति । नापि माणवकोऽग्निर्भवति । नवा यूप आदित्यो भवति । अतो यत्किञ्चिदेतत् ।। ९ ।।

इत्याथर्वणोपनिषद्भाष्यटीका प्रकाशिका(वादिराजीया) समाप्ता

**न.टी.**——एतदुपनिषदर्थवेत्तुः फलमाह— **स इति** ।। य एतत् ब्रह्म परमं सर्वोत्तमं वेद । स ब्रह्मैव स्वयोग्यगुणबृंहित एव भवति । अस्य कुले प्रयाशः अब्रह्मवित् न भवति । उक्तब्रह्मभवनं विशदयति— **तरतीति** ।। ब्रह्मप्राप्तः शोकं दुःखं तरति परिहरति । पाप्मानं तत्साधनं पापं च तरति । गुहाग्रन्थिभ्यः अज्ञानमिथ्याज्ञानसंशयेभ्यः विमुक्तः अमृतः स्वरूपानन्दानुभववान् भवति ।।

**रा.खं.**——एतदुपनिषदर्थज्ञानिनः फलमाह— **स य इति** ।। योऽधिकारी एतत्परमं ब्रह्म वेद स ब्रह्मैव ज्ञानानन्दादिस्वोचितगुणैर्बृंहित एव भवति, न परब्रह्मतामाप्नोति । अस्य कुलेऽब्रह्मविद्ब्रह्मानभिज्ञो न भवति । तरति शोकं तरति पाप्मानम् । गुहाग्रन्थिभ्यः हृदयस्थाविद्याकामकर्मादिबन्धाद्विमुक्तो-ऽमृतो भवति ।। ९ ।।

**स.टी.**——ननु एतदुपनिषद्वेत्तुः फलकथनवेलायां स यो ह तत्परमं ब्रह्म वेद ब्रह्मैव भवतीति जीवब्रह्माभेदप्रतिपादनात् । एकीभवन्तीत्यादौ अपि ऐक्यप्रतिपादन-परत्वमेवोच्यते । नैष दोषः । परं ब्रह्म विदित्वैति प्रमाणानुसारेण परब्रह्मवेदितुः स्वयोग्यगुणपूर्त्यर्थत्वोपपत्तेः । किञ्च ब्रह्मत्वमिति स्कान्दवचने ब्रह्मशब्दार्थकथन-पूर्वकमैक्यनिषेधात् । यात्रामृतः अमृतस्य शरवत् । ब्रह्म तल्लक्ष्यं साम्यमुपैती-त्यादिनेह भेदस्यैवोक्तेः । सर्वान् कामानाप्त्वामृतः समभवदिति श्रुतेर्जगत्सृष्ट्यादि-व्यापारानाप्नुवन्ति— **मुक्ता इति** ।। पूर्वपक्षं प्रापय्य जगद्व्यापारवर्जमिति जगद्व्यापारातिरेकेणैव सर्वकामावाप्तिरित्यसिसिद्धान्तत् । वर्जमिति द्वितीयायां चेति णमुल् । ततः कुतः श्रुतसमम् । कुत इत्याप्तपरिजिहीर्षया प्रकरणादिति सूत्रं प्रावीवृतत् । स अत्र जीवस्यैवोच्यमानत्वात् । अस्य जीवप्रकरणत्वेन तदवगमात् । शरीरभेदादूर्ध्वमुत्क्रम्येति श्रवणात् । जीवानां च जगद्व्यापारे सामर्थ्याभावात् । इत्थं च सूत्रकृता भेदस्यैवोक्तेश्च मुक्तोपसृप्यत्वोक्तेश्च । "नते महित्वं" "सोऽश्नुते" "ब्रह्मेशानादिभिः" "मुक्तेभ्योऽपि" "मनुष्येभ्य" इत्यादि श्रुतिस्मृतिभिर्भेदतरतमभावावगतेश्च ।। एतदुपनिषद्वेदितुः फलमुच्यते— **नास्येति**।। देवानां नराणां तत्सन्ततौ जनाः कृते प्रायशो ज्ञानिनः बलवद्धेतुतोऽन्ये च । अन्ययुगे ह्यनियमः ।। ९ ।।

**व.टी.**——एतदुपनिषदर्थविज्ञानफलमुच्यते— **स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवतीति** ।। ९ ।।

**श्री.टी.**——एतदुपनिषदर्थवेत्तुः फलमाह— **स य इति** ।। स प्रसिद्धो योऽधिकारी एतदुपनिषत्प्रतिपाद्यं परमं ब्रह्म वेद चेत्तर्हि स्वयमपि ब्रह्मैव भवति स्वयोग्यतानुसारेण पूर्णो भवतीत्यर्थः । ह वा इति निपातद्वयं प्रमाणप्रसिद्धिद्योतकम् । अस्य ज्ञानिनः कुलेऽब्रह्मवित्पुत्रो न भवति । ज्ञानिपुत्रको भवतीत्यर्थः । इदं च कार्तयुगदेवतासन्ततिपरं ज्ञातव्यम् । ब्रह्मैव भवतीत्युक्ते पूर्णत्वे निमित्तमाह -— **तरति शोकं तरति पाप्मानमिति** ।। गुहाग्रन्थिभ्योऽज्ञानसंशयादिभ्यः ।। ९ ।।

**उ.टी.**—वेदपुरुषः स्वोक्तार्थे तात्पर्यद्योतनाय एतदुपनिषदुक्तप्रकारेण भगवज्ज्ञानिनः फलमाह— **स य इति** ।। ततश्चायं मन्त्रार्थः—यः एतत् तदेतत्सत्यमित्यादिनोक्तं परमं ब्रह्म वेद सः ब्रह्मैव स्वयोग्यतानुसारेण बृंहित एव भवति । नतु ब्रह्मात्मकः। अस्य ब्रह्मज्ञानिनः कुले अब्रह्मवित् ब्रह्मज्ञानशून्यो न भवति । किन्तु देवपक्षे प्रायेण ब्रह्मज्ञानिन एव भवन्ति । मनुष्यपक्षे तु कदाचित् ब्रह्मज्ञानी भवति । शोकं दुःखं तरति । पाप्मानं तरति । गुहाग्रन्थिभ्यः मूलप्रकृतिसत्त्वादिगुणत्रयबन्धलिङ्गशरीरेभ्यो विमुक्तः अमृतः स्वरूपसुखाविर्भावरूपमुक्तिविशिष्टश्च भवतीति ।।

**आ.टी.**——एतदुपनिषद्वेत्तुः फलमाह— **स य इति** ।। य एवमेतदुपनिषत्प्रतिपाद्यं परं ब्रह्म वेद स ब्रह्मैव भवति प्राप्नोति । नद्योऽपि ज्ञान्यपेक्षया नामरूपयुक्ता इत्यर्थः । प्राप्ताविति धातोः । यद्वा ब्रह्मैव भवति यथायोग्यज्ञानानन्दादिपूर्णो भवति । यद्यपि परं ब्रह्म वेद तथापि ब्रह्मैव भवति जीव एव भवति । ब्रह्मणि जीवास्सर्वेऽपीति वचनान्नैक्यमाप्नोतीत्यर्थः । ब्रह्मप्राप्त्या भवत्फलमाह— **नेति**।। अस्य ज्ञानिनः कुले सन्ततौ अब्रह्मज्ञानी प्रायो न भवति । शोकं पापं च तरति त्यजति । गुहाग्रन्थिभ्योऽविद्यादिभ्यः विमुक्तः अमृतः अं ब्रह्म पूर्णमानन्दं ऋतः प्राप्तो भवतीति ।। ९ ।।

**गू.टी.**——एतदुपनिषद्वेत्तुः फलमाह— **स य इति** ।। यस्त्वेतदुपनिषदर्थं परमं ब्रह्म वेद स स्वयोग्यतो ब्रह्मैव पूर्ण एव भवतीत्यर्थः । अस्यकले देवादिरूप

शानिनःकुले अब्रह्मविदब्रह्माशानि न भवति । ब्रह्मैव भवतीत्युक्तम् । ब्रह्म भवन्मेव विशदमाह— **तरतीति** ।। शोकादि तीर्त्वा गूहितजीवबन्धका-विद्यादिभ्यो विमुक्तः अमृतो भवति । आनन्दं गच्छतीति वा ।। ९ ।।

**भाष्यम्**

**परं ब्रह्म विदित्वा तु बृंहितः स्यात्स्वयोग्यतः ।**
**नायोग्यं किञ्चिदाप्नोति कुत एव हरेर्गुणान् ।। इति च ।।**

**ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता ।**
**अस्वतन्त्रस्य जीवस्य कुतो नित्यस्वतन्त्रता ।। इति स्कान्दे ।।**

**'यत्रामृतः स पुरुषो ह्यव्ययात्मा' 'यत्र तत्सत्यस्य परमं निधानम्' 'अमृतस्यैष सेतुः' 'शरवत्तन्मयो भवेत्' 'ब्रह्म तल्लक्ष्यमुच्यते' । 'निरञ्जनः परमं साम्यमुपैति' इत्यादिना मुक्तस्य सर्वत्र भगवत्सकाशाद्भेदस्यैवो-क्तत्वाच्च । 'मुक्तोपसृप्यव्यपदेशात्' 'जगद्व्यापारवर्जम्' 'प्रकरणाद-सन्निहितत्वाच्च' इत्यादिना भगवतापि सर्वत्र भेदस्यैव सूचितत्वात् । नते महित्वमन्वश्नुवन्ति ।**

**सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।**
**ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।**
**तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ।। इत्यादेश्च ।।**

**मुक्तेभ्योऽपि मनुष्येभ्यो देवा एव गुणाधिकाः ।**
**तेभ्यो वायुस्ततो विष्णुः परिपूर्णगुणः सदा ।।**

**ये त्वेतदन्यथा विद्युस्ते हि यान्त्यधरं तमः ।**
**ये त्वेतदेवं जानन्ति ते यान्ति परमं हरिम् ।। इति च ।।**

**देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते ।**

**बलवद्धेतुतश्चान्ये यस्माद्ब्रह्मविदः सुराः ।।**

**न सन्ततौ ब्रह्मविदो नराणां ज्ञानिनामपि ।**

**प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे ।।**

**व्या.टी.**——ब्रह्म वेद ब्रह्मैव भवति परब्रह्मैव भवतीत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे— **परं ब्रह्मेति** ।। स्वयोग्यतोपबृंहितत्वमेव जीवस्य ब्रह्मत्वमित्यत्र प्रमाणान्तरं पठति— **ब्रह्मत्वमिति** ।। उपक्रमानुगुणश्चायमेवार्थ इत्याह— **यत्रेति**।। सूत्रानुसारित्वाच्चायमेवार्थ इति भेदसूचकानि सूत्राणि पठति— **ॐ मुक्तोपसृप्येति** ।। मुक्तस्य ब्रह्मणो भेदे श्रुतिस्मृती पठति— **न ते इति** ।। मुक्तानां तारतम्यभावाच्च मुक्तेश्वरयोर्भेद एवेति भावेन मुक्तानां तारतम्यप्रतिपादकं वाक्यं पठति— **मुक्तेभ्य इति** ।। मुक्तस्य ब्रह्मैक्ये बाधकान्तराणि चाह— **ये त्वित्यादिना** ।। नास्या ब्रह्मवित्कुले भवतीत्येतत् यस्य कस्यापि ब्रह्मविदः कुले ब्रह्मविदेव भवतीति प्रतीतिं निवारयन् व्याचष्टे— **देवानामिति** ।। अत्र हेतुमाह— **यस्मादिति** ।। प्रायश इत्युक्तं विवरीतुमुक्तम् ।। **बलवदिति** ।। अन्ये च केचित् बलवद्धेतुतो ज्ञानिनो भवन्तीत्यर्थः । सुराणां कुले प्रायशो ज्ञानिन एव भवन्तीत्येतत्कृत-युगनिष्ठमेवेत्याह— **सुराणामिति** ।। तस्माद्भगवज्ज्ञानस्यैवंमहिमत्वात् ।।

**ध.टि.**—— ।। **परं ब्रह्मेतीति** ।। अत्रावधारणार्थस्य तुशब्दः स्वयोग्यत इत्यनेन सम्बन्धः । स्वयोग्यतो योग्यतानुसारेण । बृंहितः पूर्णः घटशरावोदञ्चनादिषु जलपूर्णतायां तारतम्यं दृष्टमेवेति भावः । ननु स्वयोग्य इति किमर्थमुच्यते । निरवधिकपूर्णत्वमेव किन्न स्यादित्यत आह— **नेति** ।। निरवधिकपूर्णत्वस्य भगवत्येव योग्यत्वादिति भावः ।। **ब्रह्मत्वमिति** ।। अत्र जीवानां ब्रह्मत्वं नाम बृंहितत्वं पूर्णत्वमेव स्यात् । न परमात्मतेत्यर्थः ।। ननु कुत एवं व्याख्यायते । जीवस्य परमात्मतैवार्थः किं न स्यादित्यतो विरुद्धधर्माधिकरणत्वादित्याह— **अस्वतन्त्रस्येति** ।। **कुतो नित्यस्वतन्त्रतेति** ।। परब्रह्माभेदे नित्यस्वातन्त्र्यस्यैव प्राप्तेर्हिताकरणमहितकरणं च न स्यादिति भावः ।। **यत्रेतीति** ।। अत्र भाष्ये

यत्र लोके अमृतः पुरुषो भगवानस्ति तं लोकं विरजा विद्वांसः सूर्यद्वारेण प्रयान्तीति वैकुण्ठादिलोके जीवब्रह्मणोरवस्थानोक्त्या भेदसिद्धिः । यत्र तत्सत्यस्येत्यत्रापि यत्र लोके सत्यस्य विष्णोः सन्निधानमस्ति तं लोकं ऋषयो येन पथा आक्रमन्ति गच्छन्ति स देव यानसंज्ञकः पन्थाः । ज्ञानिनः प्रति भगवता विततः प्रकाशितो भवतीति भेद एवोक्तः । अमृतस्येति वाक्ये मुख्याश्रयत्वोक्त्या स्पष्ट एव भेदः । शरवदित्यादिवाक्ये जीवस्य शरवत्तत्र सल्लग्नचित्तत्वोक्त्या ब्रह्मणश्च लक्ष्यत्वेन ध्येयत्वरूपवेद्यत्वोक्त्या च स्पष्ट एव भेदः । निरञ्जन इत्यत्रापि साम्योक्त्या भेद एवोक्तः । तस्य भेदव्याप्तत्वात् इत्यर्थो ध्येयः ।। **मुक्तोपसृप्येतीति** ।। अत्र भाष्ये अस्मिन् सूत्रे ब्रह्मणो मुक्तप्राप्यत्वोक्त्या जगद्व्यापारवर्जमित्यधिकरणे सर्वान्कामानाप्त्वामृतः समभव-दित्युच्यते । तत्र सृष्ट्यादिभ्योऽन्यान् व्यापारानाप्नोति । कुतः जीवप्रकरणत्वात् । जीवानां तादृक्सामर्थ्यविदूरत्वाच्चेति मुक्तस्यैश्वर्यमर्यादोक्त्या च भगवता बादरायणेन भेद एव सूचितः । विरुद्धधर्माधिकरणत्वस्य भेदव्याप्तत्वादित्यर्थः । **न त इतीति** ।। अत्र ते महित्वं महिमानं केऽपि नाश्नुवन्तीति स्पष्टो भेदः । सोऽश्नुत इत्यत्रापि ब्रह्मणा सहेति भेदोक्तिः । हे हरे ब्रह्मेशानादिभिर्देवैः यत्कैवल्यं सर्वोत्तमत्वं प्राप्तुं नैव शक्यते । तत्कैवल्यं यत्स्वभावः तस्य नैसर्गिकं रूपं स केवलो भगवानेवेति स्मृतौ च स्पष्ट एव भेद इति भाष्यार्थः ।। **मुक्तेभ्य इतीति** ।। अत्र वायुः ब्रह्मा । मुक्तानां तारतम्यकथनपूर्वकं विष्णोस्तदुत्तमत्वस्य ज्ञानिनां भगवत्प्राप्तिरूपमोक्षस्य चोक्तेरेतद्विपरीतज्ञानिनां अन्धन्तमःप्राप्त्युक्तेश्च न जीवब्रह्मा-भेदोऽस्य वाक्यस्यार्थ इत्याशयः ।। यत्रामृत इत्यादिवाक्यानि विवक्षितभेदसाधक-तया व्याख्याय मुक्तस्य ब्रह्मैक्यबाधकप्रतिपादकतयापि व्याचष्टे— **मुक्तस्य ब्रह्मैक्य इति** ।। अत्र हेतुमाह— **यस्मादितीति** ।। व्युत्क्रमेण व्याख्यानम् । आकांक्षा-क्रमानुसारेणेति ज्ञेयम् । चान्ये अन्ये चेत्यन्वयमभिप्रेत्य केचिदित्यध्याहार्य व्याचष्टे— **अन्ये चेति** ।। **केचिदिति** ।। कृतयुगे देवानां सन्ततौ जाता अपि केचिदित्यर्थः । अन्ये चेत्यस्यार्थः ।। **अज्ञानिन इति** ।। ननु कुत इदं वाक्यं

कृतयुगोत्पन्नदेवताविषयं व्याख्यायते ज्ञानिमात्रविषयं किन्न स्यादित्यत उक्तं भाष्ये ।। **न सन्तताविति** ।। ज्ञानिनामपि नराणां सन्ततौ ब्रह्मविदः पुत्राः न स्युरित्यर्थः । क्वचिज्ज्ञानिनां नराणामपि पुण्यवशेन ज्ञानिपुत्रकत्वदर्शनात्प्रायश इत्युक्तम् ।। **सुराणामितीति** ।। तत्र सुराणां चेति चशब्दो अवधारणार्थः । कृते युगे चेत्यन्वितो भवतीत्याशयः ।।

**वामन.टी.**—स यो ह वै तदित्यत्र ब्रह्मविदः तद्भावोक्तिमाशंक्य 'परं ब्रह्मेत्यादिना' मुक्तिविवेकवाक्येनैव नहि घटादिज्ञानी तद्द्रष्टा श्रोता वक्ता वा तद्भावमाप्नोतीत्यभिप्रायेण नायोग्यं किञ्चिदाप्नोतीत्याह । परब्रह्मवित्तं जानन् तत्प्रसादाद्यप्यायोग्यं बृंहित एव भवेदित्यर्थः । अत्रापि यत्रामृतः स पुरुष इत्यादि बहुवाक्ये मुक्तजीवस्य सर्वत्र भगवत्सकाशात् देहस्यैवोक्तत्वाच्च । नास्य परब्रह्मत्वं मुक्तोपसृप्यव्यपदेशात् इत्यादिना बादरायणेन भगवताप्यनयोर्भेदस्यैव सूचितत्वाच्च न भेदो शंक्यः । न ते महित्वमित्यादि श्रुतिभ्यश्च मुक्तानां भेदे सत्यपि तारतम्यं नास्तीत्याशंक्याह— **मुक्तेभ्योऽपीति** ।। मुक्तानामभेदं साम्यं वा जानन्तस्तम एव यान्ति । सम्यज्ज्ञानिनो मुक्तिमेव यान्ति एतदपि स्कान्दे प्रोक्तम् । देवानां सन्ततावित्यादिना । नास्य ब्रह्मविदित्यस्यार्थमाह । परस्वीकारादिबलवद्धेतुतश्च केचिज्ज्ञानिनो भवन्ति । देवानां मुख्यतो ब्रह्मवित्त्वात् तत्सन्ततावब्रह्मविदो न स्युः ।।

**स.टी.**—तदभाषिष्ट— **देवानां सन्तताविति** ।।

**व.टी.**—तत्र ब्रह्मज्ञानिनो ब्रह्मैक्यमत्रोच्यते । भेदस्यैव तत्र तत्र प्रतिपादितत्वादित्याह— **यत्रेत्यादिना** ।। वेदान्तसूत्रविरोधाच्च न मुक्तस्य ब्रह्मैक्यमित्याह— **मुक्तोपसृप्य इत्यादिना** ।। मुक्तजीवस्य ब्रह्मभेदप्रमाणान्तराण्यपि दर्शयति— **नेत्यादिना** ।। मुक्तानां तारतम्यप्रमाणाच्च न ब्रह्मैक्यं तत्र विवक्षितमित्याह— **मुक्तेभ्य इति** ।। 'नास्याब्रह्मवित्कुले भवती'त्येतत्फलं न सर्वसाधारणमिति भावेन व्याख्याति— **देवानामिति** ।।

**श्री.टी.**——परमं ब्रह्म वेद ब्रह्मैव भवतीति वाक्यं परब्रह्मवेत्तुर्मुक्तौ ब्रह्मत्वमेव भवतीत्यन्यथाप्रतीतिनिरासाय प्रमाणेन व्याचष्टे— **परं ब्रह्मेति** ।। अवधारणार्थस्य तुशब्दस्य स्वयोग्यत एवेति सम्बन्धः । योग्यतो योग्यतानुसारेण । बृंहितः पूर्णः । घटशरावोदञ्चनादिषु जलपूर्णतायां तारतम्यं दृष्टमेवेति भावः । ननु स्वयोग्यत इति किमर्थमुच्यते निरवधिकपूर्णत्वमेव किन्न स्यादित्यत आह— **नेति** ।। निरवधिकपूर्णत्वस्य भगवत्येव योग्यत्वादिति भावः । अत्रैव प्रमाणान्तरमाह— **ब्रह्मत्वमिति** ।। जीवानां ब्रह्मत्वं नाम बृंहितत्वं पूर्णत्वमेव स्यान्न परमात्मतेत्यर्थः । ननु कुत एवं व्याख्यायते जीवस्य परमात्मतैवार्थः किन्न स्यादित्यतो विरुद्धधर्माधिकरणत्वादित्याह— **अस्वतन्त्रस्येति** ।। कुतो नित्यस्वतन्त्रतेति । परब्रह्माभेदे नित्यस्वतन्त्रत्वस्यैव प्राप्तेरित्यर्थः । तथा सति हिताकरणमहितकरणं च न स्यादिति भावः । पूर्ववाक्यपर्यालोचनया जीवब्रह्मणोर्भेदस्यैव स्पष्टमवगमान्नात्र मुक्तजीवस्य परब्रह्माभेदोऽर्थ इत्याशयवानाह — **यत्रामृत इत्यादिना** ।। यत्र लोके अमृतः पुरुषो भगवानस्ति तं लोकं विरजा विद्वांसः सूर्यद्वारेण प्रयान्तीति वैकुण्ठादिलोके जीवब्रह्मणोरवस्थानोक्त्या भेदसिद्धिः । यत्र सत्यस्येत्यत्रापि यत्र लोके सत्यस्य विष्णोः सन्निधानमस्ति तं लोकं ऋषयो येन पथा आक्रमन्ति गच्छन्ति स देवयानसंज्ञकः पन्था ज्ञानिनः प्रति भगवता विततः प्रकाशितो भवतीति भेद एवोक्तः । अमृतस्येति वाक्ये मुक्ताश्रयत्वोक्त्या भेदः स्पष्टः । शरवदित्यादिवाक्ये जीवस्य शरवत्तत्र सल्लग्नचित्तत्वोक्त्या ब्रह्मणश्च लक्ष्यत्वेन ध्येयत्वरूपवेध्यत्वोक्त्या च स्पष्ट एव भेदः । निरञ्जन इत्यत्रापि साम्योक्त्या भेद एवोक्तः । तस्य भेदव्याप्तत्वात् । इतोऽपि नात्र मुक्तजीवस्य ब्रह्मभवनमर्थः सूत्रविरोधादित्याह— **मुक्तोपसृप्येति** ।। अत्र मुक्तप्राप्यत्वोक्त्या जगद्व्यापार-वर्जमित्यधिकरणे ऐश्वर्यमर्यादोक्त्या च भगवता बादरायणेन भेद एव सूचितः। विरुद्धधर्माधिकरणत्वस्य भेदव्याप्तत्वादित्यर्थः। श्रुतिस्मृतिविरोधाच्च न जीवस्य ब्रह्मभावोऽर्थ इत्याह— **नते महित्वमिति** ।। ते महित्वं केऽपि न प्राप्नुवन्तीति स्पष्टो भेदः । सोऽश्नुत इत्यत्रापि ब्रह्मणा

सहेति भेदोक्तिः । हे हरे ब्रह्मेशानादिभिर्देवैर्यत्कैवल्यं सर्वोत्तमत्वं प्राप्तुं नैव शक्यते तत्कैवल्यं यत्स्वभावो यस्य नैसर्गिकं रूपं स भवान्केवलो जडामिश्र इति स्मृतौ च स्पष्ट एव भेदः मुक्तानां परस्परतारतम्यकथनपूर्वकं विष्णोस्तदुत्तमत्वस्य ज्ञानिनां भगवत्प्राप्तिरूपमोक्षस्य चोक्तेरेतद्विपरीतज्ञानिनामन्धन्तमःप्राप्त्युक्तेश्च न जीवब्रह्माभेदोऽस्य वाक्यस्यार्थ इत्याशयेनाह— **मुक्तेभ्योऽपीति** ।। वायुर्ब्रह्मा । नास्याब्रह्मवित्कुले भवतीति वाक्ये ब्रह्मविदो मनुष्यस्यापि कुले ब्रह्मविदेव पुत्रो भवतीति प्रतीतिनिरासाय प्रमाणेनैव विशेषमाह— **देवानामिति** ।। कृते युगे देवानां सन्ततौ जाता इति सम्बन्धः । प्रायश इत्यस्य व्यावर्त्यमाह— **बलवदिति**।। कृते युगे देवानां सन्ततौ जाता अपि बलवत्कारणवशात् अन्ये अज्ञानिनो भवन्तीत्यर्थः । देवानां ज्ञानिसन्ततिकत्वे हेतुमाह— **यस्मादिति** ।। तस्मादिदं फलं तेषां युक्तमिति भावः । ननु कुत इदं वाक्यं कृतयुगोत्पन्नदेवताविषयं व्याख्यायते ज्ञानिमात्रविषयं किन्न स्यादित्यत आह— **नेति** ।। ज्ञानिनामपि नराणां सन्ततौ ब्रह्मविदः पुत्रा न स्युरित्यर्थः । क्वचिदज्ञानिनां नराणामपि पुण्यवशेन ज्ञानिपुत्रकत्वदर्शनात्प्रायश इत्युक्तम् । ननु ज्ञानिनां देवानां नराणां च ज्ञानिसन्ततिकत्वे समाने किं विशिष्य देवतासन्ततिपरत्वेनेदं वाक्यं व्याख्यायत इति मन्दाशंकानिरासार्थमाह — **सुराणां चेति** ।। कृते युगे ज्ञानिसन्ततिकत्वरूपोऽयं नियमः सुराणामेवेत्यर्थः । तथाच सुराणां ज्ञानिसन्ततिकत्वं नियतमज्ञानिसन्ततिकत्वं तु प्रायिकम् । नराणां त्वज्ञानिसन्ततिकत्वमेव नियतं ज्ञानिसन्ततिकत्वं तु प्रायिकमिति विशेषसद्भावाद्देवतासन्ततिपरमेवेदं वाक्यमिति भावः ।।

**उ.टी.**—अत्र परमं ब्रह्म वेद ब्रह्मैव भवतीति वाक्यं ऐक्यार्थकत्वप्रतीतिनिरासाय प्रमाणेनैव व्याचष्टे— **परं ब्रह्मेति** ।। ऐक्यार्थत्वे परमितिविशेषणमनुपपन्नम् । अद्वैतमते मुक्तौ परापरभेदाभावादिति ज्ञापयितुं परमिति विशेषणम् । अवधारणात्मकतुशब्दस्य बृंहित एवेत्यन्वयः । तथाच पुरुषः परं ब्रह्म विदित्वा स्वयोग्यतः भावप्रधानो निर्देशः । स्वयोग्यतानुसारेण पूर्ण एव भवति नतु ब्रह्मात्मकः ।

अन्यथान्यज्ज्ञातं अन्याभावः स्वस्य प्राप्त इति यावत् । नचेष्टापत्तिः । यद्ब्रह्म ज्ञायते तद्भाव एव मुक्तौ भवतीत्यङ्गीकारे विरोधादित्येवं श्रुतिर्व्याख्यातेति ज्ञेयम्। स्वयोग्यत इति किमर्थं वक्तव्यमित्यत आह— **नायोग्यमिति** ।। एवं वेद ब्रह्मैव भवतीत्यस्यार्थान्तरपरत्वे प्रमाणमुक्तम् । इदानीमैक्यपरत्वाभावेऽपि प्रमाणं पठति— **ब्रह्मत्वमिति** ।। जीवानां ब्रह्मत्वं बृंहितत्वं पूर्णत्वमेव स्यात् । न परमात्मतेत्यर्थः । कुत इत्यत आह— **अस्वतन्त्रस्येति** ।। ननु ब्रह्म वेद ब्रह्मैव भवतीत्यस्य मुक्तब्रह्मभेदपरत्वं न वेद पुरुषाभिप्रेतम् । अतो नेदं व्याख्यानं युक्तमित्याशंक्य वेदपुरुषेणैव मुक्तब्रह्मभेदस्यासकृदभिहितत्वात्तदभिप्रेतमेतदिति भावेनाह— **यत्रामृत इत्यादिना** ।। यत्रामृत इति वाक्ये सूर्यद्वारेण विरजाः ते यत्र अमृतः पुरुषः तं लोकं प्रयान्तीति गन्तृगम्यभावोक्त्या मुक्तब्रह्मणोर्भेदसिद्धिः। यत्र तत्सत्यस्येति वाक्येऽपि सत्यमेव जयतीति पूर्वभागेन गन्तृगम्यभावोक्त्या तत्सिद्धिः । अमृतस्येति वाक्ये मुक्ताश्रयत्वोक्त्या । शरवत्तन्मयो भवेदित्यत्र जीवस्य ब्रह्मैकाग्रत्वोक्त्या ब्रह्म तल्लक्ष्यमित्यत्र जीवब्रह्मणोर्लक्ष्यवेधकत्वलक्ष्यत्वोक्त्या, निरञ्जन इत्यत्र साम्योक्त्या मुक्तब्रह्मभेदसिद्धिरिति ज्ञेयम् । न केवलमिदं व्याख्यानं वेदपुरुषस्याभिप्रेतम् । किन्तु सकलवेदार्थनिर्णायकन्यायग्रथनात्मकब्रह्मसूत्रकर्तुः भगवतो बादरायणस्याप्यभिप्रेतमेव । तेनापि मुक्तब्रह्मभेदस्यासकृदुक्तत्वादिति भावेनाह— **मुक्तोपसृप्येति** ।। न विष्णोरन्यस्य यस्मिन्द्यौरित्यादिश्रुत्युक्तद्युभ्वाद्यायतनस्यामृतस्यैष सेतुरिति वाक्यशेषेण मुक्तप्राप्यत्वाभिधानात् । तस्य च मुक्तानां परमा गतिरित्यादिना विष्ण्वेकनिष्ठत्वावगमादित्यर्थः ।। **जगद्व्यापारवर्जमिति** ।। मुक्तानां न जगत्स्रष्टृत्वादिव्यापारः किन्तु तद्व्यतिरिक्तकामावाप्तिरेव । ननु "सर्वान् कामानाप्त्वा अमृतः समभवदि"त्यादि श्रुतौ मुक्तानां सर्वकामावाप्तिरुच्यत इति चेत् । सत्यम् । तत्रापि जगद्व्यापारवर्जमेव सर्वान्कामानाप्त्वेत्यर्थोपपत्तेरित्यर्थः । कुतः श्रुतेरर्थसंकोच इत्यत आह— **प्रकरणादसन्निहितत्वाच्चेति** ।। युक्त एव सर्वानिति श्रुतेः संकोचः । अत्र जीवस्योच्यमानत्वात् । अस्य जीवप्रकरणत्वेन तदवगमात् । शरीरभेदादुत्क्रम्येति श्रवणात्।

जीवानां च जगद्व्यापारशक्तिविरहितत्वात् । बाधकवशात्सामान्यश्रुतेः संकोचस्य न्याय्यत्वादिति भावः । तदयं प्रयोगः— न मुक्तो जगद्व्यापारशक्तिमान् जीवत्वात्सम्मतवदिति । किञ्च श्रुतिषु मुक्तप्रभेद एवोच्यते । अतस्तद्विरोधाद् ब्रह्म वेदेत्यादिकं न मुक्तब्रह्मैक्यपरमिति भावेनाह— **न त इति** ।। "परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ती"ति श्रुतेरयमर्थः । कर्तृविशेषानुक्तेर्मुक्ता अमुक्ताश्चेति शेषः । तन्वा स्वरूपेण वृधान पूर्ण । हे विष्णो त्वं मात्रया मात्रायाः मितेः परोऽसीति शेषः ।। एवं भूतस्य ते महित्वं मुक्ता अमुक्ताश्च नान्वश्नुवन्ति न प्राप्नुवन्तीत्यर्थः ।। **सोऽश्नुत इति** ।। यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुत इत्यन्वयः । अत्र स हेत्यनेन मुक्तब्रह्मभेदो ज्ञायते ।। **ब्रह्मेशानादिभिरिति** ।। ब्रह्मेशानादिभिर्देवैर्मुक्तैरमुक्तैश्च यत् कैवल्यं प्राप्तुं नैव शक्यते । तत्कैवल्यं सर्वोत्तमत्वं यत्स्वभावः यस्य नैसर्गिकम् । हे हरे स केवलः नैसर्गिकसर्वोत्तमत्वविशिष्टो भवानेवेत्यर्थः । ननु यत्रेत्यादिवाक्ये मुक्तोपसृप्यसूत्रे न ते महित्वमित्यादिश्रुतौ मुक्तस्य भगवद्भेद एवोच्यते । ब्रह्म च विष्ण्वादिरूपाद्भगवतोऽन्यदेव । भगवतः सगुणत्वात्सशरीरत्वाच्च । ब्रह्म तु निर्गुणमशरीरं च । अतो मुक्तब्रह्मभेदपरत्वेन ब्रह्म वेदेत्यादिश्रुतिव्याख्याने नोक्तदोष इत्यत आह— **मुक्तेभ्योऽपीति** ।। अत्र विष्णोस्सर्वापेक्षया गुणाधिकत्वमुक्त्वा तस्यान्यथाज्ञानेऽनर्थस्य यथावज्ज्ञानफलस्य चोक्तत्वाद्विष्णोरन्यद्ब्रह्म नास्त्येवेत्यवगम्यते । अतो मुक्तब्रह्मैक्यपरतयोक्तश्रुतिर्न व्याख्यातुं शक्यत इति भावः । यस्य कस्यापि ब्रह्मविदः कुले ब्रह्मज्ञानशून्यो न जायत इत्यर्थप्रतीतिं निवारयितुं नास्याब्रह्मवित्कुले भवतीति वाक्याभिप्रायं प्रमाणेनैवाह— **देवानामिति** ।। प्रायश इत्यस्य व्यावर्त्यमाह— **बलवदिति** ।। अन्ये ब्रह्मज्ञानशून्या इत्यर्थः । देवानां कुले ब्रह्मज्ञानिन एव जायन्त इत्येतत्कुत इत्यत आह— **यस्मादिति** ।। शापादिबलवद्धेतुतस्ते अन्ये ब्रह्मज्ञानशून्या अपि जायन्त इति श्लोकार्थः । देवानामिति किमर्थमुक्तमित्यत आह— **न सन्तताविति** ।। ज्ञानिनामपि नराणां सन्ततौ प्रायशो ब्रह्मविदो न स्युः न जायेरन् ते कदाचित्

ब्रह्मविदो जायन्त इति ज्ञापयितुं प्रायश इत्युक्तम् । ननु देवानां सन्ततौ प्रायशो ब्रह्मविदो जायन्ते । नतु ज्ञानिनां नराणामित्येतत्कुत इत्यत आह— **सुराणामिति** ।। कर्तरि षष्ठी । यस्मात्कृते युगे सुराणां नियमः । एवं सुरैर्नियमः कृतः तस्माद्देवाना-मित्यादिकं युक्तमिति ।। **तस्मादिति** ।। यस्माद् ब्रह्मविदां कुले ब्रह्मविदो जायन्ते तस्मात् ब्रह्मवित्पुत्रपौत्रादिफलजनकत्वात् यो भगवत्त्वादिविशेषणविशिष्टः स विष्णुर्ज्ञेय इत्यन्वयः ।।

## उपनिषत्

**तदेष श्लोकः ।**

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षीञ्छ्रद्धयन्तः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत**
**शिरोव्रतं विधिवद्यैस्तु चीर्णम् ।। १० ।।**

**व्या.टि.**——अस्यामुपनिषदि कोऽधिकारीत्यतः श्लोकेऽनुवदन्नाह— **तदेष श्लोक इति** ।। श्रद्धयन्तः । एकप्रकारेण श्रद्धापूर्वमर्चयन्तः ।। १० ।।

**ध.टि.**—— ।। **तदेष श्लोक इतीति** ।। तत्रैतदुपनिषदधिकारिनिरूपणविषये एषः वक्ष्यमाणः श्लोकः । भवतीति शेषः । तमेव श्लोकं पठति— **क्रियावन्त इति** ।। ये क्रियावन्तो विहितकर्मानुष्ठानवन्तः श्रोत्रियाः वेदाध्ययनसम्पन्नाः । ब्रह्मनिष्ठाः परब्रह्मणि स्थितमनसः स्वयं जुह्वतः अग्निहोत्रादिकमनुतिष्ठन्तः । एकर्षीन् स्वतन्त्रादेको भगवान् 'ऋष ज्ञाने' इति धातोस्तद्विषयकज्ञानवन्तः । एतान् श्रद्धयन्तः श्रद्धापूर्वकमर्चयन्तः । एकप्रकारेणेत्यादिटीकायां व्याख्यानान्तरम् । यैश्च विधिवत् विध्युक्तप्रकारेण । शिरोव्रतं चौलोपनयनरूपं कर्म चीर्णमाचरितम् । अत्र शिरोव्रतमित्युपलक्षणम् । स्वस्वशाखोक्तव्रतमित्यपि द्रष्टव्यम् । "स्ववेद-व्रतयुक्तस्ये"ति भाष्ये वक्ष्यमाणत्वात् । तेषामेवैतां ब्रह्मविद्यां ब्रह्मज्ञप्तिहेतुभूता-मुपनिषदं वदेत । आविष्कारेण वदेत् । स्पष्टमुपदिशेदित्यर्थः ।। १० ।।

**न.टी.**—अस्यामुपनिषदि कोऽधिकारीत्यतः श्लकेन वदन्नाह— **तदेष इति** ।। **स्वविहितक्रियानुष्ठानवन्तः**, **श्रोत्रियाः** वेदवेदार्थविचारपराः, **ब्रह्मनिष्ठ**मनस्काः **स्वयं जुह्वतः** यजमानतया होमकर्तारः, **एक ऋषीन् श्रद्धयन्तः** स्वोत्तमज्ञानिमुनीन् श्राद्धापूर्वमर्चयन्तः ये विधिवद्यैस्तु शिरोव्रतं चौलोपनयनादिव्रतं चीर्णं भवति तेषामेवैतां ब्रह्मविद्यां वदेत ।। १० ।।

**रा.खं.**—अस्याः उपनिषदः कोऽधिकारीत्यतस्तं श्लोकोदाहरणेनाह— **तदेष श्लोक इति** ।। तत्रैतद्विद्याधिकारविषये वक्ष्यमाणश्लोको भवतीत्यर्थः । श्रोत्रियाः छन्दोऽध्येतारः। ब्रह्मनिष्ठाः ब्रह्मणि भक्तिमन्तः । स्वयं जुह्वतः अग्निहोत्रादिकमनुतिष्ठन्तः । एकऋषीन् प्रधानऋषीन् श्रद्धयन्तः श्रद्धापूर्वकमर्चयन्तः । यैस्तु शिरोव्रतं विधिवच्चीर्णं, शिरोव्रतं नाम व्रतविशेषः । तेषामेवैतां ब्रह्मविद्यां ब्रह्मज्ञप्तिहेतुभूतामुपनिषदं वदेत आविष्कारेण वदेत स्पष्टमुपदिशेदित्यर्थः । भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वद इति भासनार्थे आत्मनेपदम् ।। १० ।।

**श्री.टी.**—अस्यामुपनिषदि केऽधिकारिण इत्यतस्तां श्लोकेनाह— **तदेष इति** ।। तत्तत्रैतदुपनिषदधिकारिनिरूपणविषये एष वक्ष्यमाणः श्लोको भवतीति शेषः । तमेव श्लोकं पठति— **क्रियावन्त इति** ।। ये क्रियावन्तो विहितकर्मानुष्ठानवन्तः श्रोत्रियाः वेदाध्ययनसम्पन्नाः ब्रह्मनिष्ठाः परब्रह्मणि मनसः स्थितियुक्ताः स्वयं जुह्वतो होमादिकं कुर्वत एकर्षीन्स्वतन्त्रत्वादेको भगवान् । ऋष ज्ञानइति धातोस्तद्विषयकज्ञानवन्तो ये तान् श्रद्धयन्तः श्रद्धापूर्वकमर्चयन्तस्तेषामेवैतां ब्रह्मविद्यां वदेत पुनः केषामित्यत उक्तम् ।। **शिरोव्रतमिति**।। विधिवद्विध्युक्तप्रकारेण शिरोव्रतं चौलोपनयनरूपकर्म यैश्चीर्णमाचरितं तेषामेवेत्यर्थः । अत्र शिरोव्रतमित्युपलक्षणत्वेनोक्तम् । स्वस्वशाखोक्तं व्रतं यैस्तु चीर्णमित्येव द्रष्टव्यम्। स्ववेदव्रतयुक्तस्येति पूर्वमुक्तत्वात् ।। १० ।।

**उ.टी.**—उक्तब्रह्मविद्यायां न यः कश्चिदधिकारी । किन्तु पुरुषविशेष एवेति वक्तुं प्रतिजानीते— **तदेष इति** ।। तत् तत्र । पुरुषविशेष एव ब्रह्मविद्या-

धिकारीत्यर्थः। एषः वक्ष्यमाणः श्लोको मन्त्रः प्रमाणं भवतीत्यर्थः । तं मन्त्रमुदाहरति— **क्रियावन्त इति** ।। ये क्रियावन्तः कामादिवर्जनपूर्वकं ईश्वरार्पणबुद्ध्या स्ववर्णाश्रमोचितकर्मनिष्ठाः श्रोत्रियाः वेदाध्ययनशीलाः ब्रह्मनिष्ठाः भगवद्भक्ताः स्वयं स्वतन्त्रं भगवन्तमुद्दिश्य जुह्वतः अग्निहोत्रादिहोमं कुर्वाणाः । क्रियावन्त इत्युक्तावपि कुरुपाण्डवन्यायेन पृथगुक्तिः । यद्वा जुह्वतः होमं कुर्वन्तः । क्रियावन्तः होमेतरक्रियावन्त इति व्याख्येयम् । एकऋषीन् । ऋत्यक इति प्रकृतिभावान्न सन्धिः। प्रधानर्षीन् । ब्रह्मविद्यासम्प्रदायप्रवर्तकान् । श्रद्धयन्तः श्रद्धापूर्वकमर्चयन्तः यैश्च विधिवत् शिरोव्रतं तन्नामकव्रतविशेषः चीर्णं कृतम् । तेषामेव एतां पूर्वोक्तां ब्रह्मविद्यां तु विशेषेण वदेत अर्थप्रकाशनपूर्वकं वदेदित्यर्थः । भासनोपसम्भाषेति सूत्रेण भासनार्थे वदतेरात्मनेपदमिति ज्ञातव्यम् ।। १० ।।

**आ.टी.**——एतदुपनिषदधिकारं श्लोकेन वक्तुमुपोद्घातमाह— **तदिति** ।। तत्तत्र वक्ष्यमाणे अधिकारविषये एष वक्ष्यमाणः श्लोको मन्त्रः प्रमाणत्वेन वर्तते । अग्निहोत्रादिक्रियावन्तः वेदाद्यध्ययनयुक्ताः तद्वेद्यब्रह्मनिष्ठाः स्वयं जुह्वतः वैश्वदेवादिहोमं कुर्वतः एकर्षीन् आथर्वणवेदप्रवर्तकान् तन्नामकऋषीन् एकप्रकारेण ऋषीन् श्रद्धयाऽन्तःश्रद्धापूर्वकमर्चयन्तः विधिवद्विध्युक्तप्रकारेण शिरोव्रतं शिरोमुण्डनाद्युत्तमव्रतं यैश्चीर्णं कृतं तेषां वै तामाथर्वणोऽपनिषदाख्यब्रह्मविद्यां वदेत । नान्येषामित्यर्थः ।। १० ।।

## उपनिषत्

**तदेतत्सत्यमृषिरङ्गिराः पुरोवाच । नैतदचीर्णव्रतोऽधीते ।।**
**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।। ११ ।।**

**इत्याथर्वणोपनिषत् समाप्ता**

**व्या.टी.**——स्वोक्तमृषिणोक्तमित्याह— **तदेतदिति** ।। तदेतदृष्युक्तं सत्यमित्यर्थः। वेदपुरुषः उपनिषदं ऋषिप्रणामेन समापयति— **नम इति** ।। ११ ।।

**ध.टि.**——वेदपुरुषः शिरोव्रतमित्याद्युक्तं ऋषिणाप्युक्तमित्याह— **तदेतदिति**।। तदेतदङ्गिरा ऋषिः । पुरा पूर्वम् । एतदेतामुपनिषदम् । अचीर्णव्रतः अचीर्णशिरोव्रतः । स्वस्वशाखोक्तव्रतानुष्ठानशून्यो । नाधीते अध्ययनं न करोति न कुर्यादिति शौनकायोवाच यतोऽतः एतत्प्रमेयं सत्यं यथार्थं प्रतिपत्तव्यमित्यर्थः । टीकायां तदेतत्सत्यमिति व्याख्यातम् । तत्पक्षे ऋष्युक्तमाह— **ऋषिरङ्गिरा इति** ।। इति व्याख्येयम् ।। **नम इतीति** ।। परमऋषिभ्योऽङ्गिरःप्रभृतिभ्य इत्यर्थः । उपनिषदर्थस्य सर्वस्यावधारणार्था अन्ते द्विरुक्तिः । यथोक्तं भगवत्पादैः—

अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे ।। इति ।। ११ ।।

**न.टी.**——स्वोक्तमृषिणोक्तमित्याह— **तदिति** ।। तदेतत् ऋष्युक्तं सत्यम् । ऋष्युक्तमाह— **ऋषिरिति** ।। अङ्गिरा ऋषिः । एतत् अचीर्णव्रतो नाधीते नाभ्यसेदिति पुरोवाच । वेदपुरुषः उपनिषदं ऋषिप्रणामेन समापयति— **नम इति** ।। द्विरुक्तिः ।। ११ ।।

विद्याधीशार्यशिष्येण नारसिंहेति भिक्षुणा ।
रचिता श्रीशसन्तुष्ट्यै श्रुतिभावप्रकाशिका ।।

**इति श्रीविद्याधीशार्यशिष्यनरसिंहभिक्षुविरचिता श्रुतिभावप्रकाशिका समाप्ता**

**रा.खं.**——स्वोक्तं प्रमेयमृषिणाप्युक्तमित्याह— **तदेतदिति** ।। अङ्गिरा ऋषिः एतन्मयोपदिष्टं प्रमेयमचीर्णव्रतः पुमान् नाधीते नावधारयेत् इति पुरोवाच । तदेतदृषिणोक्तं सत्यं यथार्थमित्यर्थः । वेदपुरुषः उपनिषदं प्रागुक्तानेकऋषिप्रणामेन समापयति— **नम इति** ।। आदराद् द्विरुक्तिः ।। ११ ।।

समस्तगुणपूर्णाय दोषदूराय विष्णवे ।
नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ।।
आथर्वणोपनिषदो भाष्याद्युक्तार्थसंग्रहः ।
राघवेन्द्रेण यतिना कृतो माधवतुष्टये ।।

इति श्रीराघवेन्द्रयतिविरचितः आथर्वणखण्डार्थः समाप्तः

**श्री.टी.**——वेदपुरुषः शिरोव्रतमित्याद्युक्तं प्रमेयं ऋषिणाप्युक्तमित्याह— **तदेतदिति** ।। तत् तदङ्गिराः ऋषिः पुरा पूर्वं तत् एतामुपनिषदं अचीर्णव्रतः अचीर्णशिरोव्रतः स्वस्वशाखोक्तव्रतानुष्ठानशून्यो नाधीतेऽध्ययनं न करोति न कुर्यादिति यावदिति शौनकायोवाच यतोऽत एतत्प्रमेयं सत्यं यथार्थं प्रतिपत्तव्यमित्यर्थः । वेदपुरुष उपनिषदं ऋषिप्रणामेन समापयति — **नमः परमऋषिभ्य इति** ।। अङ्गिरस्प्रभृतिभ्य इत्यर्थः । उपनिषदर्थस्य सर्वस्याप्यवधारणायान्ते द्विरुक्तिः । यथोक्तं भगवत्पादैः—

अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सञ्जेत पूर्वोक्तस्यावधारणे ।। इति ।।

**उ.टी.**——एवं वेदपुरुषः उपसन्नं शिष्यं प्रति गुरोः ब्रह्मविद्योपदेशप्रकारमुक्त्वा उपसंहृतवान् । इदानीमङ्गिराः शौनकं प्रति उक्तमर्थमुपसंहरति— **तदेतदिति** ।। ऋषिः अङ्गिराः । तत् । पदसमन्वयवाक्यसमन्वयाभ्यां परापरविद्यागम्यम्। एतज्जगत्स्रष्टृत्वादिगुणविशिष्टं सत्यं भगवन्तं पुरा शौनकायोवाच । एतत् पूर्वोक्तं ब्रह्म अचीर्णव्रतो नाधीते । नाधीयीतेत्यर्थः । एवं उपनिषदं समाप्य वेदपुरुषो मङ्गलं निबध्नाति— **ॐ नम इति** ।। परमऋषिभ्य इत्यत्र ऋत्यक इति प्रकृतिभावादाद्गुण इति न गुणः । आदराद्द्विरुक्तिः ।। ११ ।।

**आ.टी.**——एतदुपनिषत्प्रमेयं अचीर्णव्रतः अकृतवेदव्रतचतुष्टयः अकृतशिरोव्रतवान् नरो नाधीते । इत्येतदुपनिषत्प्रमेयं अङ्गिरा ऋषिः पुरा शौनकायोवाच। एवमेतद्गुरुपरम्पराप्राप्तत्वात्सत्यमेव । न स्वकपोलकल्पितत्वेन मिथ्याशंका कार्येत्यर्थः ।। वेदपुरुषः शिष्यशिक्षणाय ऋषिप्रमाणरूपमङ्गलेन समापयति—- **नम इति** ।। अथर्वाङ्गीर्भारद्वाजाङ्गिरःशौनकादिभ्यः परमऋषिभ्यो नमः । सर्वस्योक्तस्य प्रामाणिकत्वेनावधारणायाध्यायसमाप्तौ द्विरुक्तिः । इत्यशेषमतिमङ्गलम् ।।

आथर्वणोपनिषन्मन्त्रव्याख्या नृहरिणा कृता ।
भाष्यटीकाकृतोरन्तःस्थिताय हरयेऽर्पिता ।।

आयीनरहरिसत्यराजहृत्कमलस्थितः ।
व्यासो मध्वगतो भूत्यै भूयाद्विट्ठलनामकः ।।

**इति आयीनरहरिकृतं श्रीआथर्वोपनिषद्विषमवाक्यार्थकथनं समाप्तम् ।**

**गू.टी.**——एतदुपनिषदधिकारिणः श्लोकेनाह— **तदेष इति** ।। शिरोव्रतं चौलादिकम् । निषेकादि संस्काराः यैः सम्पादिताः सत्कर्मवतः ज्ञानिनः हरिभक्ताः काले एक ऋषिप्रभृतीन् ऋषीन् श्रद्धापूर्वकं पूजयन्तः ये तेषां एवैतां ब्रह्मविद्यां वदेत । अङ्गिरा ऋषिः शौनकाय पुरा उवाच एतत् एतां अचीर्णव्रतो अकृतसंस्कारो नाधीयते । तदेतदृषिणोक्तं सत्यमिति वेदपुरुष आह । स एवमुपनिषदमृषिनमस्कारेण समापयति— **नम इति** ।। परमऋषिभ्यो नमः ।

यः सत्कर्मार्चितो दद्याद् ज्ञानतो बन्धभेदनम् ।
कृत्वा मुक्तिं नरहरिस्तं वन्दे मध्ववल्लभम् ।

**इत्याथर्वणोपनिषत्खण्डार्थकथनं सम्पूर्णम् ।।**

## भाष्यम्

**तस्मात्स भगवान् विष्णुर्ज्ञेयः सर्वोत्तमोत्तमः ।**
**सदा सर्वगुणैः पूर्णो योऽनन्तः पुरुषोत्तमः ।। इति च ।।**

**ध.टि.**——स भगवान्विष्णुरित्यादेः सर्वोत्तमोत्तमः सर्वलोकातीततया सर्वोत्तमा मुक्तास्तेभ्य उत्तमः यश्च सर्वगुणैः पूर्णः । अनन्तः देशतः कालतश्च क्षराक्षर-पुरुषाभ्यामुत्तमः स भगवान्विष्णुः सदा उक्तविशेषणविशिष्टतया सर्वैर्ज्ञेय इत्यर्थः ।।

**व.टी.**——प्रधानप्रमेयमुपसंहरति— **तस्मादिति** ।।

**श्री.टी.**——उपसंहरति— **तस्मादिति** ।। भगवज्ज्ञानस्य ज्ञानिसन्ततिकत्वा-पादकत्वस्वाभाव्यादिति भावः । यः सर्वोत्तमोत्तमः सर्वलोकातीततया सर्वोत्तमा मुक्तास्तेभ्य उत्तमः यश्च सर्वगुणैः पूर्णोऽनन्तो देशतः कालतश्च यश्च क्षराक्षर-पुरुषाभ्यामुत्तमः स भगवान्विष्णुः सदोक्तविशेषणविशिष्टतया सर्वैर्ज्ञेय इत्यर्थः ।।

**उ.टी.—तस्मादिति** ।। यस्माद् ब्रह्मविदां कुले ब्रह्मविदो जायन्ते तस्मात् ब्रह्मवित्पुत्रपौत्रादिफलजनकत्वात् यो भगवत्त्वादिविशेषणविशिष्टः स विष्णुर्ज्ञेय इत्यन्वयः ।।

**भाष्यम्**

**प्रीयतां भगवान् मह्यं प्रेष्ठप्रेष्ठतमः सदा ।**
**मम नित्यं नमाम्येनं परमोदारसद्गुणम् ।।**

**व्या.टी.**—समापितभाष्यो भगवानानन्दतीर्थमुनिः भाष्यकरणप्रयोजनं सूचयन् भाष्यान्ते प्रणमति— **प्रीयतामिति** ।।

आथर्वणभाष्यटीका श्रीमज्जयतीर्थशिष्यव्यासतीर्थयतिकृता समाप्ता

**ध.टि.**— ।। **प्रीयतामितीति** ।। अत्र यो मम प्रेष्ठादतिशयेन प्रीत्यास्पदादपि सदा प्रेष्ठतमो अतिशयेन प्रीत्यास्पदस्तमेनं परमोदारसद्गुणं भगवन्तं नित्यं सर्वदा नमामि । नित्यमित्यनेन न मम भगवद्वन्दनं प्रचयगमनादिप्रयोजनोद्देशेन किन्तु स्वभावत एवेत्याचष्टे । स च भगवान् मह्यमनेन ग्रन्थकरणेन प्रीयतामित्यर्थः । "तस्यैष आत्मा विशते ब्रह्मधामे"ति वायोर्भगवत्प्रियत्वोक्त्या वाय्ववतारभूतं स्वं प्रत्यपि प्रेष्ठतमत्वमुक्तमेव । तदेतत्सत्यं यत्र "तत्सत्यस्य परमं निधानमि"त्यत्र सत्यशब्देन परमोदारसद्गुणत्वं चोक्तमित्यर्थः ।। क्वचित्पुस्तकेषु

यां ब्रह्मादेरथर्वाद्या विद्यामप्यवरावराम् ।
सुनिष्ठिताश्च या विष्णुविषयाहं नमामि ताम् ।।

इति पद्यमस्ति । तद्ग्रन्थकारीयमङ्गलरूपतया व्याख्येयमित्यशेषमतिमङ्गलम् ।।

आथर्वणोपनिषदो भाष्यटीकाप्रकाशिका ।
सज्जनाह्लाददात्री स्यात्तथा मध्वेशतुष्टिदा ।।

**इति मंकालिधर्माचार्यविरचितं**
**आथर्वणोपनिषद्भाष्यव्यासतीर्थीयटीकाविवरणं समाप्तम्**

**वामन.टी.**—अथेदानीं ग्रन्थावसानेऽप्यनेन कृतेन प्रीयतां नारायण इति प्रार्थयन् तं नमस्करोति ।।

प्रीयतां भगवान् विष्णुः मह्यं सर्वेश्वरेश्वरः ।
भूतभव्यात्समस्तान्मे प्रेष्टप्रेष्टतमस्सदा ।।
एनं नारायणं नित्यं नमामि रमया युतम् ।
परमोदारनिर्दोषचित्सुखाय गुणार्णवम् ।।
यस्य त्रीण्युदितानि वायोर्वेदे बलज्ञानवतो बलादौ ।
दशप्रमत्याख्यतृतीयमूर्तिराथर्वणीं भाष्यमजे चकार ।।
आथर्वणोपनिषदो यदिदं सुभाष्यं
व्याख्याममुष्य विरचय्य यथावबोधम् ।
नारायणार्यवरशिष्य इमां रमेशे
श्रीमध्वपूज्यचरणेऽर्पयदर्पणीया ।।
नमो नमो रमेशाय श्रीमध्वाय नमो नमः ।
नमस्त्रिविक्रमार्येभ्यस्तच्छिष्येभ्यो नमो नमः ।।

**इति वामनपण्डिताचार्यविरचिता आथर्वणोपनिषद्भाष्यटीका समाप्ता**

**स.टी.**—एवं समापितभाष्यो भगवाचार्यः मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथते वीरपुरुषकाणि भवन्ति आयुष्मत्पुरुषकाणि च । अध्येतारश्च मङ्गलयुक्ता यथा स्युरिति भुवादिसूत्रे भाषणादन्तेऽपि प्रीतिप्रार्थननमनरूपमङ्गलमाचरति— **प्रीयतामिति** ।। प्रीङ् प्रीतौ दिवादिः । प्रियशब्दादिष्ठनि प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वषित्रप्द्राधिवृन्दाः इति सूत्रेण । प्रकृत्यैकाजिति टिलोपाभावः । एवं नमामीति कर्तुरीप्सिततमत्वात् ।।

तोयसम्भृतजीमूतनिभं सुन्दरविग्रहम् ।
सीताकराम्बुजलसत्पदं श्रीराममाश्रये ।।
चर्करीत स्थलं वेदस्त्वत्र चर्कृतमस्ति नः ।
भाषायां ज्ञापकं तत्स्यात्सेट्कं तन्निष्प्रमाणकम् ।।

भाष्यकारस्य वेदस्य सत्यवर्यस्य चैकता ।
इडभावे तदन्येषां मूर्खाणामिड् व्यवस्थितिः ।।
असंसील्य महाभाष्यमविचार्य च मञ्जरीम् ।
इचाविति कथं भट्टोजिवाचमूचिवान् ।।

**इति आथर्वणभाष्यटीका श्रीसत्यप्रियमुनिविरचिता समाप्ता**

**व.टी.**——एवं समापितग्रन्थो भगवानाचार्योऽन्तेपि भगवन्तं नमस्कारेण प्रीणयति— **प्रीयतामिति** ।।

**व.टी.**——अथ क्वचित्क्वचिद्भाष्यसिद्धोऽर्थः प्रदर्श्यते । तत्र प्रथममृष्यादिज्ञानमन्तरेणाध्ययनादेरनर्थकारणत्वश्रवणादुपनिषत्प्रवचनादावृष्यादिकमवश्यं ज्ञातव्यमेवेति भावेन तदृषिपरम्परा निरूप्यते— **ब्रह्मा देवानामित्यादिना** ।। छन्दस्तु गाथारूपवाक्येऽक्षरपरिसंख्याविज्ञेयं देवतास्तु अदृश्यत्वादिगुणको हरिरेवेति विस्पष्टं विज्ञायत एवेति भावः । तत्रायं प्रथममन्त्रार्थः । ब्रह्मा चतुराननः देवानां प्रथमः सर्वदेवानां सकाशादपि प्रथममुत्पन्नो बभूव । कथम्भूतः विश्वस्य भुवनस्य सर्वस्य प्रपञ्चस्य कर्ता भोक्ता च । एवम्भूतोऽसौ ब्रह्मा एतदुपनिषदात्मिकां ब्रह्मविद्यामथर्वाय अथर्वनामकाय ज्येष्ठपुत्रायोपदिष्टवान् । कथम्भूतां ब्रह्मविद्यां सर्वविद्याप्रतिष्ठां सर्वाः कर्मादिविषयविद्याः प्रतितिष्ठन्त्यत्र भवन्त्यस्यामिति सर्वविद्याप्रतिष्ठानामित्यर्थः । सर्वविद्यानां ब्रह्मविद्यायामन्तर्भावश्च तत्र द्विधा फलानां ब्रह्मविद्याफलेऽन्तर्भावेनेति ज्ञातव्यम् । अथास्यैव नामान्तरमथर्वा इति । तस्य चतुर्थी अथर्वण इति तस्मै अथर्वणे यां ब्रह्मविद्यां ब्रह्मा प्रवदेत प्रावदत् । अथर्वा तां ब्रह्मविद्यां पुरा पूर्वं अङ्गिरे अङ्गिरनामकाय ऋषये उवाच । स अङ्गिरास्तु तां ब्रह्मविद्यां भरद्वाजस्यापत्यत्वात् भारद्वाजाय नामतः सत्यवहाय । स भारद्वाजस्तु तां परावरां वक्ष्यमाणप्रकारेण परावररूपां विद्यामङ्गिरसे प्राह । 'अङ्गिराः अपीमां विद्यां अन्यस्मै प्रतिपादितवान् । अत सोऽप्थास्याविद्याभा विद्याय ऋषिरिति' भावेनाह— **शौनक इत्यादिना** ।। अत्रायं प्रश्नार्थः । यदि कर्मदेवतादिरूपं

सर्वं वस्तु सर्वलोकावगतं तत्रतावदनन्यार्थत्वेन ज्ञातं न पुरुषार्थकरं तस्य जडत्वात् । देवानां चास्वतन्त्रत्वात् । अतोऽन्यार्थमेव कर्मादिकं वेदैकदेशादिना ज्ञाप्यत इत्यङ्गीकर्तव्यम् । यथा कृषीवलस्य क्षेत्रकर्षणादिकर्म नान्यार्थत्वेन ज्ञायते । किन्नाम धान्यादिलाभाद्यर्थत्वेनैव । अतः कस्यार्थत्वेन ज्ञातमेतत्कर्मादिकं सफलं भवेत् । स क इति । शिक्षा नाम वर्णोच्चारणानुगुण-स्थान-प्रयत्नाद्यनुशासनग्रन्थः । कल्पस्तु मन्त्राणां कर्मणि विनियोगप्रतिपादको ग्रन्थः। भूतयोनित्वमेवोपपादयति— **यथोर्णनाभिरिति** ।। अत्रोर्णनाभि-दृष्टान्तग्रहण-मुपादानत्वनिवारणार्थम् । न केवलमीश्वरस्य स्रष्टृत्वमेव संहर्तृत्वं चास्तीति ज्ञापनार्थं च । द्वितीयदृष्टान्तस्तु नानारूपजगत्सर्जने । तृतीयस्तु जगत्सर्जने क्लेशो नास्तीति ज्ञापयितुं अक्षरस्य जगत्स्रष्टृत्वं च निमित्त कारणत्वेनैव नतूपादानत्वेत्युच्यते— **तपसेति** ।। विचारपूर्वकं सृष्टिकर्तृत्वश्रवणान्नोपादान-कारणमित्यर्थः । ननु ब्रह्मणः आलोचनास्तीति चेत्तस्यासर्वज्ञं स्यादित्यत आह— **यः सर्वज्ञ इति** ।। तान्याचरथ नियतं सत्यकामा इत्यनेन ब्रह्मार्थत्वेन कर्माणि कुर्यादित्युक्तम् । तत्र कर्मस्वरूपं निरूपयति— **यदा लेलायत इत्यादिना** ।। लेलायते चञ्चला भवति । एतेषु यश्चरते भ्राजमान इत्यस्यायमर्थः । एतासु भ्राजमानासु सप्तजिह्वासु यथाकालं कालमनतिक्रम्य आहुतय आहुतीः आददायन् आददद्यो यजमानश्चरते होमादिकं करोति । तं यजमानं एताः सूर्यस्य रश्मयः एतेषु सूर्यस्य रश्मिषु स्थिता देवाः स्वीकृताहुतय इति यावत् । यत्र देवानां पतिरास्ते तत्र नयन्ति । अष्टादशोक्तमिति षोडशर्त्विजः यजमानः सदस्यश्चेति अष्टादशजनानामवरमधमं कर्म येष्वदृढप्लवरूपयज्ञेषु उक्तम् । त इत्यर्थः । जङ्घन्यमानाः वक्रगतिमन्तः अविद्यावेष्टितत्वं चानेक-प्रकारेणेत्याह— **अविद्यायां बहुधेति** ।। नास्त्यकृतः कृतेनेति । अकृतो मोक्षः कृतेन कर्मणा नास्तीत्यर्थः । तद्विज्ञानार्थं तत्तस्माद्विशिष्टज्ञानार्थं स मुमुक्षुः गुरुमेवाभिगच्छेत् । गुरुं प्राप्नुयात् । येनोपदिष्टप्रकारेणाक्षरं विष्णुं वेद जानात्युपासकः तां ब्रह्मविद्यां गुरुः शिष्याय प्रोवाच प्रब्रूयादित्यर्थः । कथ-

म्भूतासौ ब्रह्मविद्येत्यतस्तन्निरूप-यति— **तदेतत्सत्यमित्यादिना** ।। तदेतत्सत्यमिति वक्ष्यमाणं प्रमेयं सत्यमित्यर्थः । सर्वरूपा नानादिक्षु स्रवन्त्यः । रसश्च मधुरादिः । तस्मादेव जातः एष आत्मा अयं जीवः येन रसेन भूतः प्रभूतः सन् अन्तःशरीरान्तस्तिष्ठति । स इत्यर्थः । **आविः सन्निहितमिति** ।। ब्रह्मणो माहात्म्यान्तरमुच्यते । ज्ञानिनां प्रत्यक्षत्वादाविः । नाम प्रसिद्धः । महच्च तत्पदनीयं चेति । महत्पदमित्यर्थः । अत्र यद्यप्येजतः परमेश्वराधीनत्वोक्त्यैव प्राणदो निमेषतश्च तदधीनत्वं सिद्ध्यति । तथाच तद्वचनं प्राणनिमेषणादिव्यापाराणामपि तदधीनत्वज्ञापनार्थं तद्बोद्धव्यम् । सौम्य विद्धीत्येतदेव विवृणोति— **धनुरिति** ।। अक्षरवेधे कः शर इत्यत आह— **प्रणव इति** ।। अपरोक्षज्ञानिनोऽवस्था निरूप्यते— **प्राणो ह्येष इति** ।। एष प्राणो मुख्यप्राण एव हि सर्वैर्भूतैः सह विभाति । सर्वभूतप्रवर्तकत्वेन वर्तत इति विजानन् विद्वान् अपरोक्षज्ञानी अतिवादी भवेत् । अहमेव देहादिप्रवर्तक इति स्वात्मन्यविद्यमानमाहात्म्यवादी न भवेदित्यर्थः । किन्तु आत्मक्रीडादिमानेव भवतीत्याह— **आत्मक्रीड इति** ।। तस्य ज्ञानसाधनान्याह— **सत्येनेति** ।। यं पश्यन्ति यतयः क्षीणदोषा इत्यनेन दोषक्षयोऽपि दर्शनसाधनमित्युक्तम् । परमं निधानं स परमं सन्निधानं पुरुषं ये ह्यकामा इत्यनेन विषयकामना न कर्तव्येत्युक्तम् । तत्करणे दोषमाह— **कामानिति**।। नायमात्मा बलहीनेन लभ्य इति युक्त्यनुसन्धानात्मकबलहीनेन न लभ्य इत्यर्थः। अलिङ्गं तपः अशास्त्रीयम् । अस्यां विद्यायां अधिकारिणमाह— **तदेष श्लोक इति** ।। अङ्गिरा विद्यासमाप्तौ स्वगुरुभ्यो नमस्करोति ।

रमाकरवराम्भोजसमाराध्योऽपि माधवः ।
पूजितोऽस्तु शतप्रीतिं मया वाक्पुष्पमालया ।।

**इत्याथर्वणोपनिषद्भाष्यविवरणं वरदतीर्थभिक्षुविरचितं समाप्तम्**

**श्री.टी.**——एवं समापितभाष्यो भगवानाचार्य एतदुपनिषदुक्तगुणविशिष्टभगवन्नमनमन्तेऽपि कुर्वन् तत्प्रीतिमेवाशास्ते— **प्रीयतामिति** ।। यो मम प्रेष्ठादतिशयेन

प्रीत्यास्पदादपि सदा प्रेष्ठतमोऽत्यतिशयेन प्रीत्यास्पदस्तमेनं परमोदारसद्गुणं भगवन्तं नित्यं सर्वदा नमामि । नित्यमित्यनेन न मम भगवद्वन्दनं प्रचयगमनादिप्रयोजनोद्देशेन किन्तु स्वभावत एवेत्याचष्टे । स च भगवान्मह्यमनेन ग्रन्थकरणेन प्रीयतामित्यर्थः। तस्यैष आत्मा विशते ब्रह्मधामेति वायोर्भगवत्प्रियत्वोक्त्या वाय्ववतारभूतं स्वं प्रत्यपि प्रेष्ठतमत्वमुक्तमेव । तदेतत्सत्यम् । यत्र तत्सत्यस्य परमं निधानमित्यत्र सत्यशब्देन परमोदारसद्गुणत्वं चोक्तमित्यशेषमतिमङ्गलम् ।।

योऽध्यात्मदेवान्सम्प्रेर्य कारयामास सत्कृतिम् ।
तया प्रीतोऽभीष्टदोऽस्तु भगवान्बादरायणः ।।
श्रीमदानन्दतीर्थार्यांञ्जयार्यादींश्च सन्मुनीन् ।
नमामि परया भक्त्या स्मृत्या सर्वेष्टदानहम् ।।
यादवार्यान्गुरून्नौमि वेदेशमुनिसेवकान् ।
श्रीमध्वशास्त्रव्याख्योत्थविनिर्मलमतीनहम् ।।
आथर्वणोपनिषदो भाष्यस्य विवृतिस्त्वियम् ।
श्रीनिवासेन रचिता भूयाद्व्याख्योपकारिणी ।।

**इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन रचिताथर्वणोपनिषद्भाष्यविवृतिः पदार्थदीपिकानाम्नी समाप्ता**

**उ.टी.**—एवं समापितभाष्यो भगवानाचार्यवर्योऽन्तेऽपि भगवत्प्रीत्याशासनरूपं तन्नतिस्तुतिरूपं च मङ्गलं निबध्नाति— **प्रीयतामिति** ।। अहं परमोदारसद्गुणम्। एनं उक्तोपनिषत्प्रतिपाद्यं भगवन्तं नमामि । स भगवान् मह्यं प्रीयताम् । प्रागप्रीतः प्रीयतामिति न प्रार्थ्यते । किन्तु नित्यमतिशयेन प्रीत इति भावेनोक्तं मम सदा प्रेष्टप्रेष्टतम इति । अतिशयेन प्रीतः प्रेष्ठः अतिशयेन प्रेष्ठः प्रेष्ठतमः प्रेष्ठात्प्रेष्ठतमः निरतिशयप्रिय इत्यर्थ इत्यशेषमतिमङ्गलम् ।।

तातश्रीतिर्मलाचार्यगुरुप्रोक्तोऽयमाशयः ।
आथर्वणोपनिषदस्तद्भाष्यस्यापि दर्शितः ।।

**इति श्रीकृष्णाचार्यसूरिविरचितं श्रीमदाथर्वणोपनिषद्भाष्यविवरणं सम्पूर्णम्**



द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो अभिचाकशीति ।।

*ದೇವ, ಜೀವರು ಎಂದು ಎರಡು ಹಕ್ಕಿಗಳು.*
*ಅಗಲಿಕೆಗೆ ನಿಲುಕದಿಹವು.*

*ಹರಿಯು ತಾ ಜೀವರಿಗೆ ಅಕ್ಕರೆಯ ಕೊಟ್ಟ ಸಖ.*
*ಅಲ್ಲಿ ಸುಖವಿಲ್ಲವೆಂದು ಜರಿದು, ತರಳದೇಹವ*
*ಧರಿಸಿ, ಅರಳಿಹಣ್ಣನು ತಿಂದು ಸೊರಗಿಹನು*
*ಜೀವ ಜಗದಿ.*

*ಬೇರೆಯಾಗದ ದೇಹ ಧರಿಸಿರುವ ದೇವ*
*ತಾನಾಹರವಿಲ್ಲದಲೆ ಅರಳಿಹನು ಚಿರಕಾಲ.*